कल्पितसमासानां लिङ्गानां विवृतिस्तथा ।
प्रथमे परिशिष्टेऽस्य सर्व्वमेतन्निवेश्यते ॥८४॥
द्वितीयपरिशिष्टे वक्तव्या विषया: ।
लौकिका बहव: शब्दा वैदिकाश्च विशेषत: ।
शब्दप्रचारविरहादन्धकारइव स्थिता: ॥८५॥
पाश्चात्त्यविदुषां ज्ञानापूर्व्वालोकेन तेऽधुना ।
दिने दिने प्रकाशन्ते चार्थकीर्त्तिं वितन्वते ॥८६॥
सार्थप्रमाणास्ते सर्व्वे परिशिष्टे द्वितीयके ।
दीयन्ते बुधसाहाय्यान्निजशक्त्यनुसारत: ॥८७॥
कोषेऽस्मिन् यानि शास्त्राणि प्रमाणायोद्धृतानि च ।
मूलातिरिक्ता: शब्दा वै बहव: सन्ति तेष्वपि ॥८८॥
तेऽपि सर्व्वेऽत्र दीयन्ते यश्चाऽभावोऽस्ति यत्र च ।
यथाज्ञानं यथास्थानं सोऽप्यस्माभिर्निरस्यते ॥८९॥
शब्दाब्धेस्तु परं पारं न जानाति सरस्वती ।
अगाधं चाऽप्रमेयं तं को वा निर्वक्तुमीश्वर: ॥९०॥
स्वशक्तिकाष्ठामाश्रित्य तथाप्यस्माद्दृशैर्जनै: ।
परिशिष्टस्य सम्पूर्त्तौ प्रयत्नोऽस्य विधीयते ॥९१॥
इयेष मुद्राङ्कयितुं स राजा नागराक्षरै: ।
पुनरेव स्वकं कोषं सर्व्वभोगविधित्सया ॥९२॥
परिशिष्टं च विस्तीर्णं वेदशब्दार्थबोधकम् ।
निर्ममे सोऽस्य कोषस्य महान्तं यत्नमाश्रित: ॥९३॥
दुर्व्विलासात्तु देवस्य हस्तलेखाश्च तेऽखिला: ।
कीटै: कवलिता हन्त ! नाशमापुरशेषत: ॥९४॥
चकमे च महात्माऽसौ सकाशात् परवर्त्तिनाम् ।
संस्कृतज्ञानविस्तारेणाऽस्य संस्करणं पुन: ॥९५॥
अतो वयं संप्रवृत्ता अस्मिन् संस्करणे नवे ।
पुण्यश्लोकस्य तस्यैव भूपस्येच्छानुसारत: ॥९६॥
शब्दकल्पद्रुमस्रष्टु: कुलात् तस्यैव भूभृत: ।
पदे पदेऽत्र साहाय्यं कार्य्येऽस्माभिरवाप्यते ॥९७॥
देवदेव ! महादेव ! रक्ष रक्ष चिरं विभो ! ।
वंशावलीं तस्य राज्ञो धारां भागीरथीमिव ॥९८॥
हे विश्ववासिन: सर्व्वे सन्तो विद्यानुरागिण: ! ।
सहाया नो भवन्त्वस्मिन् भवन्तो ज्ञानगौरवात् ॥९९॥
करुणाकणया यस्य नरस्तरति दुस्तरम् ।
सिद्धिदाता स भगवान् न: पूरयतु काङ्क्षितम् ॥१००॥
भक्तिमात्रसहायानां हीनानां साधनान्तरै: ।
भक्तवाञ्छाप्रदो देवो वाञ्छितं प्रददातु न: ॥१०१॥

कलिकाता ।
७१, पाथुरियाघाटा ष्ट्रीट् ।
शकाब्दा: १८०८ ।

श्रीवरदाप्रसाद वसो:
तदनुजस्य च
श्रीहरिचरण वसो: ।

# मुखबन्धनं ।

तत्रादौ मङ्गलाचरणश्लोकाः ।

योऽद्वैतसच्चिदानन्दपरब्रह्मेति कीर्त्तितः ।
उपासकानां कार्य्यार्थं कृपया पञ्चधाभवत् ॥
शक्तिः शिवस्तथा सूर्य्यो गणेशो विष्णुरेव च ।
सर्व्वेषविघ्ननाशाय भक्तिश्रद्धासमन्वितः ॥

साष्टाङ्गं तं प्रणम्यादौ शिष्टाचारानुसारतः ।
राजाबाहादुरोपाधि-श्रीराधाकान्त-देवकः ॥
परेषामुपकाराय शब्दकल्पद्रुमाभिधं ।
कोषं नव्यक्रमयुतं कृतवान् बहुयत्नतः ॥

ग्रन्थसमाप्तौ मङ्गलाचरणबीजं ।

संस्कृतग्रन्थानामेतादृशी रीतिः सर्व्वत्र प्रचलिता यन्मङ्गलाचरण-श्लोकानुक्रमणिकादिकं ग्रन्थादावेव लेखनीयं भवितुमर्हति । किन्त्वस्मिन् कोषे तदाचरितं । तस्यैतत्कारणं । उक्तश्लोकादि-रचन-प्रागेव प्रथम-काण्डादि-मुद्राङ्कन-समापनमात्रेण तल्लिप्सवो स्वदेशविदेशीयमहात्मानः पुनः पुनः प्रार्थयित्वा सर्व्वमेव गृहीतवन्तः । इदानीं एतत्कोषस्य प्रथमादिकाण्डं नोपस्थितं । तेन हेतुना एतन्मङ्गलाचरणादि-रूप-मुखबन्धनं शेषकाण्डपुरोवर्त्ति कृतं । किन्त्वेतद्ग्रन्थारम्भे अथ शब्दकल्पद्रुमो मुद्र्यते इति लिखनेन मङ्गल-वाचकाथ-शब्दप्रयोगादेव एतत्कोषस्य मङ्गलाचरण-सिद्धिर्जाता । तदुक्तं माङ्गतत्त्व-धृतश्रुतौ,—

"ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्वा विनिर्यातौ तेन माङ्गलिकावुभौ" ॥

ग्रन्थरचनप्रयोजनं ।

अष्टादशसंख्यकासु शास्त्रीयभाषासु संस्कृतभाषा गीर्व्वाणवाणी । अतः सर्व्वोत्कृष्टा सर्व्वत्र समरूपा सर्व्वजनमान्या च । देवैरृषिभिश्च तद्भाषया अष्टादशविद्याः प्रणीताः । किन्त्वस्मिन् भारतवर्षे उक्तविद्या-सम्बन्धि-पारिभाषिक-शब्दादीनां प्रकाशक-कोषो न प्राप्यते । ते च तत्तद्भाष्य-टीकादिभिरेव चरितार्था भवन्ति । किञ्च महा-महोपाध्यायैः प्राचीन-नवीन-कवि-कोविदगणैः पद्येन पर्य्यायनानार्थ-युक्त-बहुविधाभिधानरचना कृता । किन्तु तत्तद्-ग्रन्थीयैकार्थ-शब्दसंग्रहस्य वर्णक्रमाभावात् प्रयोजनीय-पर्य्याय-शब्दप्राप्तिः सुदुष्करी । एवं अनेकार्थ-शब्दसंग्रहस्य एकादि-षडक्षर-पर्य्यन्त-कान्तादि-क्षान्तशब्द-निबद्ध-निखिल-श्लोकानां पाठव्यतिरेकेण प्रार्थनीय-नानार्थ-शब्द-निर्गमोऽतिदुर्गमश्च । विशेषतः तत्तदेकैक-कोषे समग्र-शब्दार्थयोर्लाभाभावः । इत्यादि-दोषमहमालोच्य परोपकाराय पञ्चदशावधि-वर्त्तमानकाल-पर्य्यन्तं बहुतरपरिश्रमैः धीरवर-निकर-साहाय्यैरेतद्देशप्राप्य-समस्तकोष-वेद-वेदान्त-वेदाङ्गभाष्य-व्याकरण-छन्दोज्योतिष-साहित्य-नाटक-काव्यालङ्कार-वैद्यक-सङ्गीत-न्याय-सांख्य-पातञ्जल-वैशेषिक-मीमांसा-स्मृति-पुराणेतिहास-तन्त्रागम-निगम-शिल्प-सूपकार-नीतिशास्त्र-कुलाचार्य्य-गोस्वामि-ग्रन्थादिभ्यः शब्दसमूहं संगृह्य कविकल्पद्रुम-नामक-धातुपाठ-ग्रन्थात् धातुनिवहञ्च सङ्गृह्य सकलशब्द-धात्वर्थानामनायासेन लाभार्थं विना पद्येन वर्णव्यवस्थाक्रमेण शब्दकल्पद्रुमाभिधानाभिनवाभिधानं कृतवान् । इमं सप्तकाण्डात्मक-बृहत्कोषं स्वीयकोष-व्ययेन मुद्राङ्कयित्वा मुद्राव्यतिरेकेण नानादिग्देशीय-विशिष्ट-पात्रेभ्यो बन्धुवर्गेभ्यो याचकेभ्यश्च दत्तवान् ॥

ग्रन्थस्य नामकारणं ।

एतत्कोषस्य शब्दकल्पद्रुम-नाम-करण-कारणमेतत् । स्वर्गीय-कल्पद्रुम-सन्निधाने यो यत् प्रार्थयते तस्य तत्प्राप्ति-र्भवत्येव । मत्कृतमर्त्त्यीय-शब्दकल्पद्रुम-समीपे यानि यानि समीहित-शब्दादीनि प्रार्थयन्ते तानि तान्यवश्यं प्राप्नुवन्ति । अतः कल्पवृक्ष-सादृश्यमेव नामकारणं । प्राचीनसंग्रहकर्त्तृभिरपि संस्कृतग्रन्थानां कल्पद्रुम-कल्पतरु-कल्पलता-प्रभृति नामधेयं कृतं । तत्सदृशार्थक-कामधेनु-चिन्तामण्यादि-पुस्तकानि च प्रचलन्ति एतद्ग्रन्थस्य बृहद्रूपत्वात् सप्त खण्डकं काण्डेति संज्ञां कृतवान् ॥

अथ ग्रन्थपरिपाटी ।

अतः परमस्मदीयैतत्कोषस्यानुक्रमं विशेष-नियमञ्च विवृणोमि । निखिलाभिधानिक-शास्त्रिक-लौकिक-व्यवहारिक-साधुशब्दानां धातुगणानाञ्च झटिति प्राप्त्यै तेषामानुपूर्व्विकाकारादि-क्षकारान्त-पञ्चाशद्वर्णानां यथाक्रमं सूचीं कृत्वा विन्यासमकुर्व्वं । तत्र प्रथमं स्वरवर्णादिशब्दानां परे हलवर्णादि-शब्दानां शेषे युक्ताक्षरादि-शब्दानाञ्च वर्णक्रमेणैव यथास्थानं प्रथमा-विभक्त्यन्तत्वेन संस्थापनमकार्षं । पदसाधने येषामन्त्याक्षराणां विकारो लोपो वा अभवत् ते वर्णास्तत्तच्छब्दोपरि विन्यस्ताः । अनुस्वार-विसर्गयोः षोडश-स्वरान्तर्गतत्वेन तदुभयवर्णाद्य-वर्णयुक्त-शब्दान् स्वरवर्णस्थलाभिषिक्तान् चकार । तत्पश्चात् प्रत्येक-शब्दस्य लिङ्गं प्रत्येक-धातोरनुबन्धञ्च निर्णीतवान् । येषां धातूनामनुबन्धो नास्ति तत्स्थाने बिन्दुयुक्तमथवा शून्यमास्ते । तदनन्तरं सकल-शब्दानामर्थवाचक-पदानि प्रथमाविभक्त्यन्तत्वेन एवं समस्त-धात्वर्थवाचक-पदानि सप्तमीविभक्त्यन्तत्वेन लिखितानि । प्रत्येक-प्रसिद्ध-शब्दोत्तरं

ाया: देशभाषाश्च तथा प्रत्येक-धात्वर्थानन्तरं तट्टीका धातुदीपिकोक्तव्याख्यापदादीनि विहितानि सर्व्वशेषे तेषां प्रमाणानि तदभावे तत्प्रयोगाः
ाद्युत्पत्ति-र्लिखिता ॥

मालायां च वर्ग्य-जकारान्तःस्थयकारौ मूर्द्धन्य-णकार-दन्त्यनकारौ वर्ग्यवकारान्तःस्थवकारौ तालव्यशकार-मूर्द्धन्यषकारदन्त्यसकाराः सन्ति ।
-वर्णादि-शब्दानां धातूनाञ्च प्रभेदं कृत्वा सूचीपूर्व्वकं यथास्थानं संस्थापनं कृतवान् । वङ्गदेशे उक्तवर्णानामुच्चारण-भेदाभावः । विशेषतो वकार-
रोच्चारणयोर्भेदो नास्ति पश्चिमादिदेशे वर्त्तते । किन्तु मुग्धबोधटीकायां दुर्गादासविद्यावागीशधृता वकार-भेदिकैकप्राचीनकारिकास्ति ।

—

"उदूटौ यत्र विद्येते यो वः प्रत्ययसन्धिजः । अन्तःस्थं तं विजानीयात्तदन्यो वर्ग्य उच्यते" ॥

त्कारिकया सकलवकार-प्रभेदो न भवति । इति हेतोरहं धातूनां शब्दाकरत्वादोष्ठ्यदन्त्य-वकारादिधातुद्वारा पदसाधनं कृत्वा बहु-प्रयत्ने-
भेदं प्रकाशितवान् रेफयुक्तवर्णन्तु रवर्णात् परं शब्द-सूचीमध्ये विन्यस्तवान् ॥

तन-कोषकार-वर्गैः स्वस्वकोषे धातुसञ्चयो न कृतः शब्दमात्रसंग्रहः कृतः । किन्तु शब्दानामुत्पत्ति-स्थानं धातुः । अतएवाहं सर्व्वोत्तम-
-धातुपाठ-कविकल्पद्रुमात् (१७५४) चतुःपञ्चाशदधिक-सप्तदशशत-संख्यक-धातून् सङ्कलय्य एतत्कोषान्तर्गतान् कृतवान् । तत्र १३२ अकारान्त-
४ आकारान्त-धातवः । १८ इकारान्त-धातवः । २५ ईकारान्त-धातवः । ३३ उकारान्त-धातवः । १३ ऊकारान्त-धातवः । २१ ऋकारान्त-
१६ ॠकारान्त-धातवः । ६ एकारान्त-धातवः । २५ ऐकारान्त-धातवः । ५ ओकारान्त-धातवः । ५८ ककारान्त-धातवः । २१ खकारान्त-
१७ गकारान्त-धातवः । २० घकारान्त-धातवः । ५० चकारान्त-धातवः । १८ छकारान्त-धातवः । ७२ जकारान्त-धातवः । ३ झकारान्त-
७१ टकारान्त-धातवः । २३ ठकारान्त-धातवः । ७६ डकारान्त-धातवः । १ ढकारान्त-धातुः । ५० णकारान्त-धातवः । ३१ तकारान्त-
१८ थकारान्त-धातवः । ७८ दकारान्त-धातवः । ३० धकारान्त-धातवः । २८ नकारान्त-धातवः । ६४ पकारान्त-धातवः । १५ फकारान्त-
४५ बकारान्त-धातवः । ३८ भकारान्त-धातवः । ३३ मकारान्त-धातवः । ३१ यकारान्त-धातवः । ४२ रान्त-धातवः । ८३ लकारान्त-
८ वकारान्त-धातवः । ३८ तालव्यशकारान्त-धातवः । ११६ मूर्द्धन्यषकारान्त-धातवः । ६५ दन्त्यसकारान्त-धातवः । ५० हकारान्त-धात-
सौत्र-धातवः सन्ति । एषां मध्ये संख्याया एकष्ठकारान्त-धातुरेवमेको लकारान्त-धातुर्नास्ति । सौत्र-धातूनां नियत-प्रयोगाभावः ।
-धातुर्गणभेदे विभक्तोभूतस्तस्माद्धेतोर्धातु-पाठस्य गणसंज्ञा अभवत् । तन्मध्ये प्रसिद्ध-गणा दश । अवान्तर-गणा अनेके विद्यन्ते । यथा,—

भ्वाद्यदादी जुहोत्यादिर्दिवादिः स्वादिरेव च । तुदादिश्च रुधादिश्च तनक्र्यादि-चुरादयः ॥

ास-विद्यावागीश-कृत-कविकल्पद्रुम-टीका धातुदीपिका ॥ उक्तगणे वोपदेव-विप्रेण अकाराद्यादि-धातुपाठ-क्रमेण अकारान्तादि-धातु-
ृतवान् । किन्त्वहमेतत्क्रमानुगमनमकृत्वा निजकोष-रीत्यनुसारेण शब्दसूचीमध्ये धातुगणान् लिखितवान् ॥

साङ्केतिकवर्णचिह्नादीनां विवरणं ।

पुस्तकस्य प्रतिपत्रस्य प्रत्येक-पृष्ठ-मध्यस्थाने युग्मरेखा-प्रदानेन द्विभागं कृत्वा तद्भागद्वये शब्दादिर्लिखितः । तस्यान्तिम-शब्दादेर्व्वर्णं व्यक्षर-
भागद्वयोपरि विन्यस्तमभवत् । तद्दृष्टिमात्रेण यदक्षर-पर्य्यन्त-शब्द-स्तत्पृष्ठारूढ़ो भूतस्तद्बोधो भविष्यति । तेनेष्ट-शब्दानामनायासेन
ा ॥

स्य सङ्केतः "पुं" । स्त्रीलिङ्गस्य संक्षेपः "स्त्री" । क्लीवलिङ्गस्य चिह्नं "क्ली" । वाच्यलिङ्गस्य अर्थात् त्रिलिङ्गस्य लक्ष्म "त्रि" । एवम-
-देशस्य "व्य" इत्यक्षरस्य ग्रहणं कृतं ॥

 स्थले एक-शब्द-घटकी-भूत-बहुवर्णाः पंक्तिद्वये पतितास्तज्ज्ञापनार्थं तत्प्रथमपंक्तिशेषे एका क्षुद्र-समरेखा ( - ) प्रदत्ता भूता ॥
-शब्दस्योत्तरं एवं प्रमाणस्य पूर्व्वं एका विषम-रेखा (।) प्रदत्ता । भिन्नार्थक-शब्दस्य एवं प्रमाणस्य परं विषम-रेखाद्वयं (॥) विन्यस्तं ।
ाचिद्स्य व्यतिक्रमो जातः ॥

र्थक-द्वि-त्र्यादि-शब्देष्वेकस्थले उपस्थितेषु तदुत्तरं तज्ज्ञापकं एवम्प्रकार-वेष्टन-चिह्नं "}" दत्तं ॥

्तान्तसमापनात् परं विशेष-शब्दार्थारम्भात् पूर्व्वञ्च पुष्पाकारचिह्नं (*) कृतं । एवं विस्तारित-विषयान्तर्गत-प्रकरणभेदस्थले पुष्पा-
॥

प्रसिद्ध-शब्दानामुत्तरं तत्पर्य्याय-शब्दा लिखितास्तत्संख्यानामङ्कपातः कृतः । तत्रोक्त-प्रसिद्ध-शब्दस्यैकत्वेन गणयित्वा तत्पर्य्याये द्यादि-
पिताः ॥

त-चतुःपञ्चाशदधिक-सप्तदशशत-धातूनां षट्चत्वारिंशदनुबन्धवर्णानां फलानि लिख्यन्ते ॥

ु मध्ये अकारः सुखोच्चारणार्थः । यथा भिक्ष भक्ष क नाशने इति ॥

ावादि-कर्म्मणेट् । आकारेतो धातोर्भावे आदिकर्म्मणि च विहितायाः निष्ठायाः वा इट्इत्यर्थः । यथा इमिंदा स्नेहे भावादिके वेति
ादितं तेन । प्रमिन्नः प्रमेदितः सः । भावादिकर्म्मभ्यामन्यत्र निष्ठाया न इट् इत्यर्थः । यथा आदित इति मिन्नः मिन्नवान् ॥

इः—नुम्वान्। वदिङ् स्तुत्यभिवादयोः। अतएवेदितो नुम् वन्द्यते विष्णुः॥

इर्—वा अङ्वान्। च्युतिर् क्षरणे इरितस्तु वेति अच्युतत् अच्योतीत्॥

ईः—अनिड्निष्ठः। दीपीङ् य दीपने। नेमडीश्वीति दीप्तः दीप्तवान्॥

उः—क्त्वावेट्। चमु भक्षणे। पु क्त्विड्वित इम् इति चमित्वा चान्त्वा॥

ऊः—वेट्कः। यस्य सामान्यविधिना इम्विहितः ऊदितः परस्य तस्य वा इम् इत्यर्थः। षिधू शिवे शास्त्रे। वेमूदिदिति असेधीत् असैत्सीत्॥

ऋः—चङ्यह्रस्वः। चङि ञेः परे अङि परे अह्रस्वः ह्रस्वाभाववान्। यथा ढौकृङ् गत्यां। ञ्यङुङस्य इत्यत्र ऋदिद्वर्जनात् अडुढौकत्॥

ॠः—वा चङि अह्रस्वः इत्यनुवर्त्तते। कणॄ आर्त्तस्वरे। भ्राज भ्रासेति अचीकणत्। अचकाणत्। येषां सप्तम-स्वरानुबन्धः कैश्चित् पठ्यते कैश्चि पठ्यते तेषां ह्रस्व-विकल्पनार्थोऽयमनुबन्धः॥

ऌः—अङ्वान्। औ गमॢ गत्यां। शास्लृद्युतपुषादेरिति अगमत्॥

एः—चिणि अवृद्धिः। चिणि ण्यांविहितयोः। ए कट् वृतौ वृषि। ह्यादेः क्षेम इत्यत्र एदिद्वर्जनात् अकटीत्॥

ऐः—यजादिः स्यात्। यजी ञौ देवार्च्चने। व्ययचेति जिः इयाज। यहस्वपाद्योरिति इज्यात्॥

ओः—निष्ठातनः। निष्ठायास्तो निष्ठातः निष्ठातो नो यस्मात् स निष्ठातनः। रुजो ओ भङ्गे। स्वाद्योदिदिति रुग्णः रुग्णवान्॥

औः—अनिट्। औ गमॢ गत्यां। वसेरस्येत्यत्र औदिद्वर्जनात् गन्ता॥

कः—चुरादिः। गण क संख्याने। चुर्भ्यां ञिर्ण्वेति गणयति॥

किः—चुरादिर्वा। पक्षे गणान्तरनियमाभावात् भ्वादिरित्यर्थः। युज कि संयमने योजयति योजति। यद्यपि चुरादिभ्यो ञिर्विकल्प्यते तथाप्यन्येषामनुरोधादिदमुक्तं। अन्येषां मते तु चुरादिभ्यो ञिर्नित्यः। तत्रापि युजप्रभृतिभ्यो वेति। स्वमते तु चुर्भ्यां ञिर्ण्वेत्यत्र वाशब्दस्य व्यवस्थावाचित्वात् चुरादिभ्यो ञिर्नित्यः। अत्र युज-प्रभृतिभ्यो वेति॥

गः—क्र्यादिः। डु क्री ञ ग द्रव्यपर्य्यये। दिवसुतुदेति क्रीणाति॥

गिः—प्वादिरपि। अपिशब्दात् क्र्यादिश्च। पू ञ गि शोधे। प्वादेः स्व इतिह्रस्वः पुनाति। अपूः स ल्वादिः। पूवर्ज्जितः स प्वादिर्ल्वादिश्च स्यात् लू ञगि छिदि लुनाति। स्वाद्योदिदिति लूनः लूनवान्। कॄ गॄ ज्या ल्वाद्याल्वादेरिति लूनिः॥

घः—रुदादिः। ञिघिर रुद रोदे। रुद्योऽयोरस्येम इति रोदिति। रुदाद्यसीति ईम् अरोदीत्॥

ङः—तङ्वान् कर्त्तरि। कर्त्तरि वाच्ये तङ्वान् आत्मनेपदी। एध ङ वृद्धौ। नवशः पमे इति एधते॥

णः—ज्वलाद्यः। ज्वल ञ्म चलत्विषोः। दूनीभूज्वलाद्येति णः ज्वालः। पक्षे पचादित्वादन् ज्वलः। एवं कुच ज रोधपर्क्ककौटिल्यलेखने। दूनीभूज्वलाद्येति णः कोचः। पक्षे कॄ गॄ ज्ञा प्रीति कः कुचः॥

झः—ज्वलाद्यः। इति केचित्॥

ञः—आत्मने। आत्मने आत्मार्थे फलवति कर्त्तर्य्यात्मनेपदं अफलवति परस्मैपदमिति शेषः यज ञौ देवार्च्चायां यजते यजमानः यजति याजकः चुरादेस्तु स्वार्थविहित-ञिर्ञकारेण ञित्वेऽपि उभयपदं न स्यात् अन्यथा स्वम ञक् वितर्के इत्यादे ञानुबन्धो व्यर्थः स्यात्॥

ञिः—अद्यक्तः। अद्य वर्त्तमाने क्तो यस्मात् स अद्यक्तः। ञि ष्ठा स्थाने। शार्थेच्छार्थञीच्छीलादेरिति स्थितो विष्णुस्तिष्ठतीत्यर्थः॥

टुः—अथुः। टु ङ वेप चलने। ट्वितोऽथुरिति वेपथुः॥

ठः—फणादिः। इति केचित्॥

डुः—त्रिमग्युतः। कृ ञ द डु कृतौ। ड्वितस्त्रिमे इति कृत्रिमं॥

णः—फणादिः। फण ण निस्नेहे। त्र फल भजेति फेणतुः पफणतुः फेणिथ पफणिथ॥

तः—अदन्तः। अदन्तानां पृथग्वर्गविधानेनैव ज्ञाने सिद्धे तानुबन्धोऽनभ्यासानामङ्कादिषु कान्तत्वादिभ्रमनिरासार्थः।

दः—तनादिः। तन दु ञ विस्तृतौ। तनभ्यः उविति तनोति। सेर्लुक् तथासोरिति अतत अतनिष्ट अतथाः अतनिष्ठाः। वनतनाद्यनिमामिति प्रतत्य

धः—रुधादिकः। रुधिर्ं ञि ञ आवृतौ। दिवसु तुदेति रुणद्धि॥

नः—स्वादिः। षु ञ ण सन्धाक्लेदपीडमन्थे। दिवसु तुदेति सुनोति॥

पः—मुचादिः। मुचॢ ञ प ञौ मोक्षे। नुणरधामुचामिति मुञ्चति॥

भः—शमादिः। शमुभिर्य शमे। यन्योश्शमादीति शाम्यति॥

मिः—घटादिः। णिचिञमोर्दीर्घो वा। दीर्घो दीर्घवान्। घट य म ङ चेष्टे। ञौञमोस्तुर्णचेति अघटि अघाटि घटं घटं घाटं घाटं। णिचि ह्रस्वः मोऽनुवर्त्तते। णिचि ञौ ह्रस्वः ह्रस्ववान्। घटादि जनीति घटयति॥

मिः—वा। णिचि ह्रस्व इत्यनुवर्त्तते। फण मि ण गतौ। वा शम यम फणेति फणयति फाणयति॥

ृवाद्यः। दिव्यु जिगीषेच्छादौ। दिवस्तु तुदेति दीव्यति ॥

देकः। वेदेष्वेव प्रयुज्यन्ते न तु भाषायामित्यर्थः। गार्लिस्तुतौ अङ्मनि। जगाति ॥

ादादिकः। अशू भक्ते। लुगस्योऽपः अश्नि ॥

ह्रादिः। ह्रादेरदायन्तर्गणत्वेन स्यात्तत्वाददादित्वस्य चकारानुबन्धो न कृतः। अथवा लुः खपादिश्च लिङ्कादिरित्येकं वाक्यं। लु लि एतदुभयानुबन्धौ धातू क्रमात् खपादिह्रादीस्तः। चकारस्तोभयत्र सम्बन्धाददादौ चेत्यर्थः। ह्रादिः पृथक्गण इत्येके। अतएव पठन्ति च।

"ह्राद्यदादौ जुहोत्यादिर्दिवादिः स्वादिरेव च। तुदादिश्च रुधादिश्च तनक्र्यादिचुरादयः" ॥ इति।

हुलि होमेऽदने। ह्रादौ रे द्विः जुहोति।

खपादिश्च। चकाराददादिश्च। खमते खपादेः प्रयोजनं नास्ति। दरिद्रतीत्यादौ खपादित्वादजादौ सार्व्वधातुके। आद्युदात्तत्वमिति वोपदेवः ॥

तादिः। वृत ङ व लृ वर्त्तने। स्यघ्नोनेम पे इति तेनैव परस्मैपदे वर्त्स्यति विवृत्सति। आत्मनेपदे तु वर्त्तिष्यते विवर्त्तिषते। अन्यत्र विवर्त्तिषा विवृत्सा ॥

ुदादिकः। तुदौ ञ श व्यथे। दिवस्तुतुदेति तुदति ॥

कुटादिश्च। चकारात् तुदादिश्च। कुटां गुणौ ङ्णिति इति नियमात् कुट ञि कौटिल्ये इत्यादीनां अकुटीत् इत्यादौ न गुणः। णू ञि स्तवने इत्यादीनां अनुवीदित्यादिषु न वृद्धिः। अगुणत्वादुव् च ॥

तद्ङवान्। आख्यातिकस्याङोऽप्राप्त्यर्थं ङदिति विशेषणं। खमते तूभयत्र ङ एवं। डु ञौ श पच पाके। भीषि चिक्लीति पचा ॥

जक्षादिः। जक्ष च लु घ भक्षहासयोः। द्विरुक्त जक्षादीति द्विसंज्ञायां शवन्तस्य शिदंचोऽदेरिति न तुण् जक्षत्। क्लीबे अस्शसोस्तु दे: अतुर्नुम् इति जक्षति जुक्षन्ति। आख्यातिकेऽन्तोऽन्तो देरिति जक्षति। अनुस् सिदेरिति अजक्षुः। इति धातुदीपिकायां अनुबन्धफलनिरूपणं ॥

आदिकोषविवरणं।

सर्व्वेषां कोषाणामादि अग्निपुराणोक्ताभिधानं। तत्रादौ स्वर्गपातालादिवर्गः। ततोऽव्ययवर्गः। ततो नानार्थवर्गः। ततो भूपुराद्रिवनौषधिसिंहा-
ः। ततो नृब्रह्मक्षत्रविट्शूद्रवर्गाः। शेषे सामान्यानि नामलिङ्गानि सन्तीति मया दृष्टं। अमरसिंहस्तु उक्ताग्निपुराणीयाभिधानस्य कस्यचित्
चित् वर्गस्य व्यतिक्रमं कृत्वा तत्रोदित-सामान्य-नामलिङ्गानां विशेष्य-निघ्न-वर्गसङ्कीर्णवर्गाविति संज्ञां स्थापयित्वा अन्ते लिङ्गादिसंग्रहवर्गस्य योगं कृत्वा
ाषं रचितवान्। एवं जटाधरोऽपि अमरकोषस्यानुकरणं कृतवान्। इति विरलप्रचारः ॥

---

प्राप्तकोषादिनामानि।

अत्राभिधाने मत्प्राप्तयदृच्छत्कोषादितः शब्दादयः संगृहीतास्तेषां संज्ञाः पश्चाल्लिख्यन्ते ॥

| | | | | | |
|---|---|---|---|---|---|
| सिंहकृतं .. | .. नामलिङ्गानुशासनं | .. १ | पुरुषोत्तम देवकृतः .. | .. त्रिकाण्डशेषः .. | .. १५ |
| पालकृतः .. | .. नानार्थसंग्रहः .. | .. २ | तत्कृता .. | .. हारावली .. | .. १६ |
| ंहकृता .. | .. नानार्थध्वनिमञ्जरी | .. ३ | भावमिश्रकृतः .. | .. भावप्रकाशः .. | .. १७ |
| ाक्षितकृता .. | .. शब्दचन्द्रिका .. | .. ४ | मथुरेशपण्डितकृता .. | .. शब्दरत्नावली .. | .. १८ |
| ाचार्य्यकृतः .. | .. पर्य्यायनानार्थकोषः | .. ५ | महेश्वरवैद्यकृतः .. | .. विश्वप्रकाशः .. | .. १९ |
| धिनाथकृता .. | .. नानार्थरत्नमाला | .. ६ | मेदिनीकरवैद्यकृतः .. | .. नानार्थशब्दकोषः | .. २० |
| ालविद्यावागीशकृता | .. धातुदीपिका .. | .. ७ | रामेश्वरशर्म्मकृता .. | .. शब्दमाला .. | .. २१ |
| ्यकविकृता .. | .. नाममाला .. | .. ८ | रत्नमालाकारवैद्यकृता | .. आयुर्वेदार्थबोधितपर्य्यायरत्नमाला | २२ |
| दासशर्म्मकृतः | .. सारसंग्रहनामकानेकार्थसमुच्चयः | ९ | वोपदेवविप्रकृतः .. | .. कविकल्पद्रुमः .. | .. २३ |
| ंहकाश्मीरपण्डितकृतः | .. निर्घण्टुराजः अर्थात् राजनिर्घण्टः | १० | श्रीनन्दनभट्टाचार्य्यकृतं | .. वर्णाभिधानं .. | .. २४ |
| यणदासकविराजकृतः | .. राजवल्लभः .. | .. ११ | श्रीरामशर्म्मकृतः .. | .. उणादिकोषः .. | .. २५ |
| ाभदत्तद्विजकृतः | .. भूरिप्रयोगः .. | .. १२ | सिद्धान्तकौमुदीसंक्षिप्तसारकारकृते | उणादिवृत्ती .. | २६।२७ |
| ोत्तमदेवकृतः .. | .. एकाक्षरकोषः .. | .. १३ | हलायुधभट्टकृता .. | .. अभिधानरत्नमाला | .. २८ |
| तत्कृतः .. | .. द्विरूपकोषः .. | .. १४ | हेमचन्द्रजैनकृतः .. | .. अभिधानचिन्तामणिः | .. २९ |

अप्राप्तकोषनामानि।

एतद्भिन्नानेकप्राचीनाभिधानानि सन्ति। यद्यपि तानि मया अप्राप्तानि तथापि तेषां मध्ये बहुकोषाणां प्रयोगप्रमाणानि अमरटीकाधृतानि ादृतानि। एवं विश्वमेदिनीकोषे तत्तत्कृताभिधानानां शब्दाः समाहृताः। उक्तकोषद्वयशब्दानां शब्दकल्पद्रुमाभ्यन्तरितत्वेन [illegible] ीनकोषाणां शब्दाः एतत्कोषान्तर्गता भूताः।

विश्वधृतप्राचीनकोषाः ।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| भोगीन्द्र | १ | वाचस्पति | ४ | मङ्गल | ७ | भागुरिरचितकोषाः | १० |
| कात्यायन | २ | व्याडि | ५ | शुभाङ्ग | ८ | | |
| साहसाङ्क | ३ | विश्वरूप | ६ | बोपालित | ९ | | |

मेदिनीधृतप्राचीनकोषाः ।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| उत्पलिनी | १ | रन्तिदेव | ७ | गङ्गाधर | १३ | चन्द्र | १९ |
| शब्दार्णवः | २ | रत्नापरनामहर | ८ | वाभट | १४ | विक्रमादित्य | २० |
| संसारावर्त्तः | ३ | गोवर्द्धन | ९ | माधव | १५ | गोमिरचितकोषाः | २१ |
| नाममालाख्यः | ४ | रभसपाल | १० | धर्म्म | १६ | पाणिनिपदानुशासनञ्च | २२ |
| वररुचि | ५ | रुद्र | ११ | तारपाल | १७ | | |
| शाश्वत् | ६ | अमरदत्त | १२ | वामन | १८ | | |

एतदन्ये बलहट्टप्रभृतिकृतकोषाः सन्ति ॥

लब्धालब्धामरकोषटीकानामानि ।

अमरकोषस्य भूयप्रामाणिकः व्युत्पादकश्च । तस्मात् बहुतरटीकाकारैस्तस्य नानाविधा टीका कृता । तन्मध्ये कतिपयलब्धटीकानां प्रमाणानि शब्दकल्पद्रुमे दत्तानि । किन्तु तत्समुदायटीकाकृन्नामानि टीकानामधेयानि चाहं व्यक्तीकरोमि ॥

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| क्षीरस्वामी | १ | माधवी | ११ | कोलाहलाचार्य्यः | २१ | कृता व्याख्यासुधीः | ३० |
| सुभूतिः | २ | मधुमाधवी | १२ | शवरस्वामी | २२ | अच्युतोपाध्यायकृतव्याख्या- | |
| हट्टचन्द्रः | ३ | सर्व्वानन्दः | १३ | रामतर्कवागीशः | २३ | प्रदीपः | ३१ |
| कलिङ्गः | ४ | अभिनन्द | १४ | नयनानन्दः | २४ | मथुरेशविद्यालङ्कारकृता | |
| कोङ्कटः | ५ | मल्लिनाथः | १५ | विद्याविनोदः | २५ | सारसुन्दरी | ३२ |
| सर्व्वधरः | ६ | रायमुकुटमणिः | १६ | रघुनाथचक्रवर्त्ती | २६ | नारायणचक्रवर्त्तिकृता पदार्थ- | |
| राजदेवः | ७ | नीलकण्ठः | १७ | व्याख्यामृतः | २७ | कौमुदी | ३३ |
| गोवर्द्धनः | ८ | श्रवणः | १८ | टीकासर्व्वस्वः | २८ | रमानाथविद्यावाचस्पतिकृत- | |
| द्राविड़ः | ९ | भगीरथः | १९ | सन्देहभञ्जिका | २९ | त्रिकाण्डविवेक | ३४ |
| भोजराजः | १० | जयादित्यः | २० | रामाश्रमापरनामभानुदीक्षित- | | भरतमल्लिककृता मुग्धबोध | |
| | | | | | | सम्मता टीका | ३५ |

एतद्भिन्ना अपि टीका वर्त्तन्ते ॥

अत्राहृतविषयवृन्दं शब्दसिन्धुदुस्तरत्वञ्च विज्ञापयामि ।

कोषगणातिरिक्तनानाशास्त्रीयशब्दप्रमाणप्रयोगोपाख्यानादीनि । चातुर्वेदिकषाड्दर्शनिकमतविवरणपदार्थकर्म्मोपासनाज्ञानकाण्डब्रह्मनिरूपणवेदाङ्गशिक्षादीनि । शाब्दिककाव्यालङ्कारिकछान्दसिकसूत्रवृत्तिभाषानामलक्षणोदाहरणचित्रकाव्यनवरसरतिबन्धादयः । श्रौतस्मार्त्तयज्ञमलमासादिलक्षणदायभागाशौचसंस्कारप्रायश्चित्तोद्वाहतिथितत्त्वजन्माष्टमीदुर्गोत्सवाष्टादशविवादपद-चतुष्पादव्यवहारैकादश्युपवासनिर्णयतड़ागभवनवृषोत्सर्गव्रतप्रतिष्ठापरीक्षाज्योतिःशुभाशुभदिनादिवास्तुयागदीक्षाह्निकाचारमासकृत्यपुरुषोत्तमादिमाहात्म्यश्राद्धशूद्रकृत्यकर्म्मविपाकदानदशयाचाधिकरणदत्तकव्यवस्थादयः । पौराणिकतान्त्रिकवर्णतत्त्वषट्कर्म्मस्नानतर्पणपूजामुद्रामन्त्रयन्त्रजपहोमबलिध्यानस्तवकवचमाहात्म्यभुवनस्वर्गनरकदेवदानवतीर्थावतारमदनदीदेशभेदपीठपर्व्वतनृपराजनीतिवर्णाश्रमधर्म्मवर्णसङ्करद्रव्यशुद्धिमहादाननिधिरत्नाद्युत्पत्तिसृष्टिप्रलयदुर्गपुरमन्दिरश्रीमूर्त्तिनिर्म्माणप्रमाणादीनि । ज्यौतिषिकसैद्धान्तिकवारतिथिनक्षत्रयोगकरणसंक्रान्तिमासर्त्तुपक्षवर्षायनजातकलाकालग्रहणनष्टचन्द्रधूमकेतुस्त्रीपुरुषादिशुभाशुभलक्षणशकुनस्वरोदयगणिताङ्कक्षेत्रव्यवहारराशिचक्रभुगोलखगोलदृग्गोलवर्णनादीनि । आयुर्वेदीयजन्मक्रमशारीरस्थानरोगनिदानपूर्वरूपसम्प्राप्त्युपशयचिकित्सौषधद्रव्यगुणपाचनजारणमारणपथ्यापथ्यनाड़ीमूत्रजिह्वापरीक्षापञ्चकर्म्मपशुवैद्यपक्ष्युत्पत्त्याख्यानादयः । गान्धर्व्ववेदीयनृत्यगीतवाद्यस्वरतालल्यतानमानग्रामश्रुतिमूर्च्छनारागरागिणीतत्पुत्रतद्भार्य्यागानस्थानभुवनमनायकनायिकानिरूपणादीनि । युक्तिकल्पतरुग्रन्थीयनीतिदन्नगरीवास्तुराजग्रहविशेषसामान्यासनोपकरणालङ्कारास्त्रयात्रायुक्तयः तथा चतुष्पदद्विपदनिष्पदयानोद्देशाः । पत्रकौमुदीयपत्रप्रमाणभङ्गरचनलेखनमयनपठनचिह्नकोणच्छेदनपदन्यास श्रीशब्दविन्यासप्रशस्तिप्रकरणादीनि । कुलाचार्य्यादिग्रन्थीयब्राह्मणवैद्यकायस्थानामुत्पत्तिवंशगोत्रप्रवरपर्य्यायश्रोत्रियकुलीनमौलिकगोष्ठीपतिनिर्णयादीनि च शब्दकल्पद्रुमस्य सप्तकाण्डे मया समाहृतानि । चान्यवशिष्टानि तानि परिशिष्टे प्रवक्ष्यामि । तत्तद्ग्रन्थनामानि बाहुल्यभिया नोक्तानि । तथापि शब्दसमुद्रस्य पारगमनं दुष्करतरं । तदुक्तं कलापवृत्तटीकाधृतश्लोके ।

यत्र भाष्यकारस्य सुशाणीयधियागुभौ । नैव शब्दाम्बुधेः पारं किमन्ये जड़बुद्धयः ॥

## परिशिष्टकरणकारणम्।

अस्मिन् सप्तकाण्डात्मकशब्दकल्पद्रुमपुस्तके ये ये शब्दार्थप्रमाणप्रयोगादयः पूर्व्वं प्राप्त्यभावेन न संगृहीताः। अथवा भ्रमवशात् पतिताः। एवं स्य रोगस्य निदानमात्रं लिखितं तत्तदौषधानि न विवृतानि। एवं येषां शब्दानां अमरातिरिक्तकोषोक्तपर्य्यायशब्दसङ्कलनं न कृतं। एवं न्तरणकारादिवर्णयुक्तकतिपयशब्दानां मुद्राङ्कप्रमादेन स्खलनं जातं। एवं अकाराद्यादिवर्ग्यवकारादिपर्य्यन्तधातूनां तत्तट्टीकाधृतपदोदाहर-पुरा न लिखिताः। एतत्सर्वमवशिष्टं परिशिष्टमध्ये लिपिबद्धीकरिष्यामि। अतःपरमेतत्परिशिष्टीयापुनरुक्तशब्दादीन् प्रागुदितसप्तका-ण्डस्थसूचीमध्ये यथास्थानं स्थापयित्वा ग्रन्थसमाप्तौ मङ्गलाचरणबीजं परिशिष्टकरणकारणञ्च दत्त्वा एतन्मुखबन्धं प्रथमकाण्डस्य पूर्व्वं योजयित्वा ङ्गने कृते एष कोषः सुसम्पूर्णो भविष्यति। किञ्च पश्चिमदेशीयलोकानां महोपकाराय देवनागराक्षरेण एतत्कोषमुद्राङ्कनार्थं पाश्चात्या गा ममान्तिके बहुशः प्रार्थयन्ते। किन्तु तत्प्रार्थनापूरणे मदीयायुषोऽनुकूलतायां सन्दिहानो विरतोऽस्मि। यद्यपि कश्चित् विपश्चित् विषयो स्वीयलाभार्थं मत्कृतैतद्ग्रन्थाधिकारं यथारीति गृहीत्वा अस्मिन् कर्म्मणि प्रवर्त्तेत तत्र ममापत्तिर्नास्तीति ॥

---

शाके वह्निसमुद्रशैलधरणीमानेऽरुणे कर्कटे, याते खाग्निमिताब्दतः परमसौ मत्शब्दकल्पद्रुमः।
काण्डैः सप्तभिरन्वितो भगवतोऽनुक्रोशतः, पूर्णतां प्राप्तो दूषणमस्ति किञ्चिदिह चेत् तत् क्षम्यतां साधुभिः ॥

---

## अथ सर्व्वोपासकसम्मतमङ्गलाचरणोनविंशतिपद्यानि।

वेदा वदन्ति यं सत्यमानन्दमद्वितीयकम्।
तथात्मतत्त्वैकरूपमवाङ्मनसगोचरम् ॥
सर्वातीतं सर्वगतं चिदेकरसमेव च
देशकालापरिच्छिन्नमपादमपि शीघ्रगम् ॥
सर्वग्रहमपाणिञ्च सर्वेषां दर्शकं तथा।
अचक्षुषमपि श्रोत्रहीनं श्रोतारकं पुनः ॥
अचिन्त्यमपि सर्वज्ञं सर्वेषाञ्च नियामकम्।
सर्वशक्तियुतं सृष्टिस्थितिप्रलयकारकम् ॥ १ ॥
तथौपनिषदा यं हि शुद्धबुद्धस्वभावकम् ॥ २ ॥
कथयन्त्यादिविद्वांसं सिद्धं यं कापिला विदुः ॥ ३ ॥
क्लेशकर्म्मविपाकाशयापरामृष्टमेव यं।
निर्म्माणकायमास्थाय सम्प्रदायप्रवर्त्तकम् ॥
तथानुग्राहकमपि प्रभाषन्ते पतञ्जलाः ॥ ४ ॥
लोकवेदविरुद्धैर्यं निर्लेपञ्च स्वतन्त्रकम् ॥
महापाशुपताः सर्वे ब्रुवन्ति सततं भुवि। ५।
शैवाः शिवं यं वदन्ति वैष्णवाः पुरुषोत्तमम् ॥ ६ । ७ ॥
पितामहमिति प्राञ्चः पौराणिकजना विदुः। ८।
याज्ञिका यज्ञपुरुषं सर्वज्ञमिति सौगताः ॥ ९ । १० ॥
निरावरणमित्येव प्रलपन्ति दिगम्बराः। ११।
यमुपास्यत्वरूपेण देशितं हि निरन्तरम् ॥
मीमांसका वै भाषन्ते चार्वाकाः प्रवदन्ति यं।
लोकानां व्यवहारेण सिद्धं सन्ततमेव च ॥ १२ । १३ ॥
यावदुक्तोपपन्नं हि न्यायज्ञाः सम्प्रचक्षते। १४।
शिल्पिनो विश्वकर्म्मेति यं भणन्ति सुनिश्चितम् ॥ १५ ॥
शाक्ता वदन्ति यं नित्यामाद्याप्रकृतिरूपिणीम्। १६।
सौरास्तेजोमयं सूर्य्यं गाणपत्या गणेश्वरम् ॥ १७ । १८ ॥
रामानुजा यं वदन्ति विशिष्टाद्वैतवादिनः।
लक्ष्मीनारायणं भक्ताधीनं नित्यशरीरिणम् ॥ १९ ॥
निम्बादित्यास्तथा माध्वाचार्य्याद्या द्वैतवादिनः।
विष्णुं सशक्तिं सन्मूर्त्तिं यमाहुर्भक्तवत्सलम् ॥ २० ॥
रामानन्दा रामचन्द्रं भक्तानुग्रहकारकम्।
सीतया सहितं प्रोचुर्यं नित्यं नित्यविग्रहम् ॥ २१ ॥
श्रीमन्माध्वानुयायि श्रीनित्यानन्दादिवंशजाः।
गोस्वामिनो नन्दसूनुं श्रीकृष्णं प्रवदन्ति यं ॥ २२ ॥
कायेन मनसा वाचा भक्त्या च प्रणिपत्य तम्।
श्रीराधाकान्तदेवेन राज्ञानिशयत्नतः।
शब्दादीन्यवशिष्टानि संगृह्य बहुशास्त्रतः।
परिशिष्टः शब्दकल्पद्रुमस्य क्रियतेऽधुना ॥

## अथ ग्रन्थप्रतिष्ठानवश्लोकाः।

शब्दकल्पद्रुमग्रन्थे सप्तकाण्डमयेऽखिले।
येषामेव हि शब्दार्थपर्य्यायाणां तथैव च ॥
प्रमाणानां प्रयोगाणां धातुसम्बन्धिनां पुनः।
पदोदाहरणानाञ्च चिकित्सानां गदस्य च ॥
न संग्रहोऽभवत् पूर्वग्रन्थे कारणकूटतः।
तेषां सङ्कलनञ्चास्मिन् परिशिष्टे करोम्यहम् ॥

तथा वेदनिघण्ट्वाख्यः पञ्चाध्यायसमन्वितः ।
वैदिकानाञ्च शब्दानामतिप्राचीनकोषकः ॥
तस्याश्च देशे विरलप्रचारत्वेन तद्धृतः ।
पर्य्यायशब्दसन्दोहः केनापि बोधकारिणा ॥
न संगृहीतस्तद्धेतोर्दुर्लभोऽश्रुत एव च ।
प्रायो वैदिकशब्दार्थो बोधगम्यो भवेन्नहि ॥

अतस्तत्प्रथमाध्याये द्वितीये च तृतीयके ।
येषां स्थितानां शब्दानां पर्य्यायान् परिशिष्टगान् ॥
करिष्याम्यत्र निबे हि तेषां वर्गस्तु नाम च ।
तथा सङ्ख्या विलिख्यन्ते लोकानां ज्ञानहेतवे ॥
चतुर्थे पञ्चमाध्याये यदस्ति पदवृन्दकम् ।
तत्पर्य्यायस्य बोधस्य चाभावान्नात्र गृह्यते ॥

तत्र प्रथमाध्याये ४२४ नामानि यथा ।

| वर्गः | नाम | सङ्ख्या |
|---|---|---|
| १ | पृथिवीनामधेयानि | २१ |
| २ | हिरण्यनामानि | १५ |
| ३ | अन्तरीक्षनामानि | १६ |
| ४ | साधारणनामानि | ६ |
| ५ | रश्मिनामानि | १५ |
| ६ | दिङ्नामानि | ८ |
| ७ | रात्रिनामानि | २३ |
| ८ | रात्र्युषनामानि | १६ |
| ९ | अहर्नामानि | १२ |
| १० | मेघनामानि | ३० |
| ११ | वाङ्नामानि | ५७ |
| १२ | उदकनामानि | १०० |
| १३ | नदीनामानि | ३७ |
| १४ | अश्वनामानि | २६ |
| १५ | आदिष्टोपयोजननामानि | १० |
| १६ | ज्वलतिकर्म्माणः | ११ |
| १७ | ज्वलतो नामधेयानि | ११ |

इति वेदनिघण्टौ प्रथमाध्यायः ॥

द्वितीयाध्याये ५१६ नामानि ।

| वर्गः | नाम | सङ्ख्या |
|---|---|---|
| १ | कर्म्मनामानि | २६ |
| २ | अपत्यनामानि | १५ |
| ३ | नृनामानि | २५ |
| ४ | बाहुनामानि | २२ |
| ५ | अङ्गुलिनामानि | २२ |
| ६ | कान्तिकर्म्माणः | १८ |
| ७ | अन्ननामानि | २८ |
| ८ | अत्तिकर्म्माणः | १० |
| ९ | बलनामानि | २८ |
| १० | धननामानि | २८ |
| ११ | गोनामानि | ९ |
| १२ | क्रुध्यतिकर्म्माणः | १० |
| १३ | क्रोधनामानि | ११ |
| १४ | गतिकर्म्माणः | १२२ |
| १५ | क्षिप्रनामानि | २६ |
| १६ | अन्तिकनामानि | ११ |
| १७ | संग्रामनामानि | ४६ |
| १८ | व्याप्तिकर्म्माणः | १० |
| १९ | वधकर्म्माणः | ३३ |
| २० | वज्रनामानि | १८ |
| २१ | ऐश्वर्य्यकर्म्माणः | ४ |
| २२ | ईश्वरनामानि | ४ |

इति वेदनिघण्टौ द्वितीयाध्यायः ॥

तृतीयाध्याये ४१० नामानि ।

| वर्गः | नाम | सङ्ख्या |
|---|---|---|
| १ | बहुनामानि | १२ |
| २ | ह्रस्वनामानि | ११ |
| ३ | महन्नामानि | २५ |
| ४ | गृहनामानि | २२ |
| ५ | परिचरणकर्म्माणः | १० |
| ६ | सुखनामानि | २० |
| ७ | रूपनामानि | १६ |
| ८ | प्रशस्यनामानि | १० |
| ९ | प्रज्ञानामानि | ११ |
| १० | सत्यनामानि | ६ |
| ११ | पश्यतिकर्म्माणः | ८ |
| १२ | उत्तराणि पदानि सर्व्वपदसमाम्नानाय | ९ |
| १३ | उपमानामानि | १२ |
| १४ | अर्चतिकर्म्माणः | ४४ |
| १५ | मेधाविनामानि | २४ |
| १६ | स्तोतृनामानि | १३ |
| १७ | यज्ञनामानि | १५ |
| १८ | ऋत्विङ्नामानि | ८ |
| १९ | याच्ञाकर्म्माणः | १७ |
| २० | दानकर्म्माणः | १० |
| २१ | अध्येषणाकर्म्माणः | ४ |
| २२ | स्वपितिकर्म्माणः | २ |
| २३ | कूपनामानि | १४ |
| २४ | स्तेननामानि | १४ |
| २५ | निर्णीतान्तर्हितनामधेयानि | ६ |
| २६ | दूरनामानि | ५ |
| २७ | पुराणनामानि | ६ |
| २८ | नूतननामानि | ६ |
| २९ | द्विश उत्तराणि नामानि | २६ |
| ३० | द्यावापृथिव्योर्नामधेयानि | २४ |

इति वेदनिघण्टौ तृतीयाध्यायः ॥

चतुर्थाध्याये २७८ पदानि ।

| वर्गः | पदं | सङ्ख्या |
|---|---|---|
| १ | जहा इत्यादिपदानि | ६२ |
| २ | सस्निमित्यादिपदानि | ८४ |
| ३ | आशुशुक्षणिरित्यादिपदानि | १३२ |

इति वेदनिघण्टौ चतुर्थाध्यायः ॥

पञ्चमाध्याये १५१ पदानि ।

| वर्गः | पदं | सङ्ख्या |
|---|---|---|
| १ | अग्निरित्यादिपदानि | ३ |
| २ | द्रविणोदा इत्यादिपदानि | १३ |
| ३ | अश्व इत्यादिपदानि | ३६ |
| ४ | वायुरित्यादिपदानि | ३२ |
| ५ | श्येन इत्यादिपदानि | ३६ |
| ६ | अश्विनावित्यादिपदानि | ३१ |

इति वेदनिघण्टौ पञ्चमाध्यायः ॥

---

अथ ग्रन्थस्यानुक्रमणिकादिलेखनाभावकारणं वृत्तद्वयम् ।

ग्रन्थस्यानुक्रमणिका साङ्केताक्षरलक्ष्म च । परिशिष्टस्य करणे कारणादिकमेव हि ॥
पूर्वं सप्तमकाण्डीयमुखबन्धे प्रकीर्त्तितम् । अतो न लिख्यतेऽत्रैव पुनरुक्तिभयान्मया ॥

अथादर्शपत्राणां वल्मीकभक्षणजन्यमनस्तापतन्निवारणहेतुपद्यानि ।

इदानीं परिशिष्टीयबहुलादर्शपत्रिकाः ।
वल्मालयसमुत्पन्नवल्मीकगणभक्षिताः ॥
अतस्तद्गतशब्दानां नाभवन्मुद्रणाङ्कनम् ।
तन्न्यूनं तदा ग्रन्थबाहुल्यं समजायत ॥
किन्तु सांप्रतमादर्शनाशजन्यो मनोगतः ।
तापो जामातृदौहित्रगणैरेव निवारितः ॥
यतस्ते परिशिष्टीयशब्दैरन्यैश्च संयुतम् ।
देवनागरवर्णेन शब्दकल्पद्रुमं पुनः ॥
मुद्राङ्कितं प्रकुर्वन्ति यत्नेनातिशयेन च ।
तस्य प्रकाशाल्लोकानामुपकारो भविष्यति ॥

---

## अथ ग्रन्थकर्त्तुर्व्वंशवर्णनश्लोकाः ।

आसीत् श्रीहरिदेवाख्यः श्रीहरेरंशरूपकः ।
कायस्थानां कुले देववंशस्योद्भवहेतुकः ॥
मुर्‌शिदावादनगरासन्ने स्वजनपालकः ।
कर्णस्वर्णनामधेयसमाजे वासकारकः ॥
सदा हरिपदाम्भोजयुगलध्यानकारकः ।
मौद्गल्यगोत्रजातानामेष वीजाभिधानकः ॥ १ ॥
तस्य दुर्गावरो नाम सुतः सर्वगुणान्वितः । २ ।
तस्माद्विश्वेश्वरो जातस्तस्य विघ्नेश्वरः सुतः ॥ ३ । ४ ॥
सदानन्देन संपूर्णः पूर्णानन्दोऽभवत्ततः । ५ ।
खानोपाधिस्तत्तनयः पीताम्बर इति स्मृतः ॥
अदभ्रशालिशालित्वाद्धान्यपीताम्बरेति च ।
विख्यातो भुवि सर्वत्र गोष्ठीपतिवरः स च ॥ ६ ॥
पृथ्वीधरस्तत्तनूजस्तस्माच्च कुलनन्दनः । ७ । ८ ।
चत्वारस्तनयास्तस्य चतुर्द्दशनिवासिनः ॥
प्रथमः शिवदासाख्यश्चौखण्डिख्यातिसंयुतः ।
मणुयीनामके देशे वासस्तेन सदा कृतः ॥
नित्यानन्दो द्वितीयस्तु रायोपाधिः सुविश्रुतः ।
हलसीदपुरावासो नित्यानन्देन पूरितः ॥
चतुर्भुजस्तृतीयो यः सोऽपि रायेत्युदाहृतः ।
तालाग्रामकृतावासश्चतुर्भुजपदाश्रितः ॥
चतुर्थः श्रीनाथरायो धुले पुरकृतालयः ।
सदा श्रीनाथचरणाम्भोजार्चनपरायणः ॥ ९ ॥
नित्यानन्दात्मजः श्रीमान् श्रीमन्तेतिसमीरितः ॥१०॥
चण्डीवरस्तस्य पुत्त्रश्चण्डिकापूजने रतः ॥ ११ ॥
तस्मात् परमानन्दः परमानन्ददायकः ॥ १२ ॥
काशीनाथश्च विजयावल्लभस्तत्कुमारकः ।
ज्येष्ठस्तु मल्लिकोपाधी रायोपाधिः कनिष्ठकः । १३ ।
विजयावल्लभाज्जातः कृष्णानन्दो द्विजार्चकः ॥ १४ ॥
रघुनन्दनदेवस्तत्तनयः परिकीर्त्तितः । १५ ।
विद्याधरस्तस्य सूनू रायेतिख्यातिमागतः ॥
आदौ नाज्‌राग्रामवासी निताड़ावासकस्ततः । १६ ।
तस्यात्मजो हरिहरो जातो हरिहराश्रितः ॥ १७ ॥
षट् सुतास्तस्य विज्ञेयाः सर्वलोकप्रशंसिताः ।
ज्येष्ठस्तु यादवानन्दः सदा यादवसेविता ॥
द्वितीयो रामचन्द्राख्यस्तृतीयो लक्ष्मणो मतः ।
देवीदासस्तुरीयोऽभूत् मजुमदार उपाधितः ॥
परोपकारनिरतः सदा बन्धुभिरादृतः ।
मुड़ागाछादिदेशानां कानुनगोपदमागतः ॥
स च तस्मिन् जनपदे कर्णस्वर्णसमाजतः ।
उत्थाय वासमकरोत् पुत्त्रदारादिभिर्युतः ॥
दुर्गादासः पञ्चमस्तु सदा दुर्गाप्रपूजकः ।
षष्ठस्तु माधवानन्दः सर्वानन्दप्रदायकः ॥ १८ ॥
देवीदासमजुमदारतनयाः षट् प्रजाश्रुताः ।
गौरीकान्तो ज्येष्ठपुत्त्रः स च वंशविवर्जितः ॥
चण्डीचरणसंज्ञस्तु मध्यमश्चण्डिकार्चकः ।
तृतीयः पुण्डरीकाक्षः सहस्राक्षश्चतुर्थकः ॥
महावञ्जकृतो यो हि पदे पैश्ये नियोजितः ।
सरकारोपाधियुतो राजेन्द्रः पञ्चमः सुतः ॥
कामारपोलग्रामान्तर्वासस्तेन विनिर्मितः ।
कनिष्ठो रुक्मिणीकान्तो बहुभिर्ज्ञातिभिर्वृतः ॥
मुड़ागाछाप्रदेशे तु पञ्चपाने ह्यधिष्ठितः ।
स च केशवरायस्य क्षत्रियस्य विशेषतः ॥
अप्राप्तव्यवहारस्य विख्यातस्य समन्ततः ।
तद्देशाधिपते राज्ये नवाबेन नियोजितः ॥
अपश्यद्व्यवहारांश्च तद्राज्यशासने रतः ।
अतोऽस्मिन् भूतले लोकैर्व्यवहर्त्तेति कीर्त्तितः ॥ १९ ॥
तस्यैव तु कनिष्ठस्य चत्वारो देहसम्भवाः ।
धार्म्मिकाः कर्म्मकुशला लोके संप्राप्तगौरवाः ॥
ज्येष्ठो रामेश्वरः पैश्यं पदं प्राप्तः कृतश्रमः ।
महावञ्जकृतस्तेषु कृष्णरामस्तु मध्यमः ॥
राजारामस्तृतीयस्तु तेषां रुद्रेश्वरोऽन्तिमः ।
अनपत्यतया सोऽपि रुद्राराधकसत्तमः ॥ २० ॥
रामेश्वरस्य षट् पुत्त्रास्तेषां ज्येष्ठो महागुणः ।
रामचन्द्रस्तथा रामचरणो मध्यमः पुनः ॥
तृतीयो रघुनाथाख्यः श्रीरामस्तु तुरीयकः ।
रामकेशवनामा च पञ्चमः केशवार्चकः ॥
बलरामाभिधः षष्ठो बलवान् बलिनां वरः ।
एषां ज्येष्ठः कनिष्ठश्च वंशाभावमुपागतः ॥ २१ ॥
मध्यमो रामचरणो गुणैर्बहुभिरन्वितः ।
व्यवहर्त्तोपाधियुक्तो गोविन्दपुरसंस्थितः ॥
स च हिजलीतमोलिप्तमहिषादलदेशतः ।
लवणस्य तथा राज्ञः करादाने नियोजितः ॥
कटकादिप्रदेशस्य महावञ्जकृतस्ततः ।
देवानीसंज्ञकपदं प्राप्तवान् बहुमानितः ॥
बहुभिर्वर्गिभिः सार्द्धं मेदिनीपुरमध्यतः ।
संग्रामं तुमुलं कृत्वा रणमध्ये निपातितः ॥ २२ ॥
देवामरामचरणव्यवहर्त्तमहाशयात् ।
समुत्पन्नास्त्रयः पुत्त्राः सर्वेषकुशलाशयात् ॥

यथवन्तापाधियुक्तो रामसुन्दर आत्मजः ।
विद्यासीयवदामेन गणनीयः स चाभिमः ॥
पश्चकोटादिदेशे सोऽभवदध्यक्षसत्तमः ।
माणिक्यचन्द्रदेवस्य मध्यमः पुरुषोत्तमः ॥
अङ्कर्षिधरवीचन्द्रमाणे हिजरिहायने ।
दिल्लीश्वरप्रसादेन सम्प्राप्तौ तौ शुभक्षणे ॥
फरमाननामकलिपिं रायोपाधिं तथैव च ।
मनसवानां सहस्रं सादिपञ्चशतमेव च ॥*॥
कनिष्ठो नवकृष्णाख्यदेवो जातो गुणाकरः ।
आसीत् किलकिलारूपामरावत्यां पुरन्दरः ॥
रूपवान् धनवान् मान्यो वदान्यः पण्डिताश्रयः ।
कुलशीलादिसम्पन्नो गोष्ठीपतिमहाश्रयः ॥
रसेषुसिन्धुशुभ्रांशुमाने इंरेजिहायने ।
कोम्पानिना मुन्सिपदे नियुक्तोऽसौ शुभे दिने ॥
सोऽभवत् कारणं तेषां बङ्गराज्यस्य शासने ।
ततः किलकिलापुर्य्यां वाणिज्यकार्य्यसाधने ॥
स्थितान् इंरेजनिचयान् नवाबो बलमाश्रितः ।
सेराजद्दौलाभिधानो दूरीकृत्य गतस्ततः ॥
अथ तत्परवर्षे तु कर्णेल् क्लाइव् महाबलः ।
आगत्य नवकृष्णेन मुन्सिना सहितः किल ॥
योद्धुं ययौ नवाबेन सार्द्धं स्वबलसंवृतः ।
गत्वा पलाशिग्रामे स युद्धं कृत्वाजयत् ततः ॥
धरणीरसवाजीन्दुमित इंरेजिवत्सरे ।
कासमालीखाननामा नवाबोऽभूत्ततः पुरे ॥
स एवेंरेजपक्षीयान् प्रधानराजपूरुषान् ।
निहत्य साधयामास निखिलान् स्वमनोरथान् ॥
मेजर् आदम् ततः शीघ्रं सार्द्धं तेनैव मुन्सिना ।
गत्वा दूदयनालायां रणं कृत्वा दुरात्मना ॥
विजित्य बलवन्तं तं नवाबं सेनया सह ।
निष्कण्टकमिदं राज्यं कृतवान् स भयापहः ॥
बाणर्तुसिन्धुशशाङ्कमितइंरेजिवत्सरे ।
भूत्वा गवर्णरो लार्ड क्लाइव् किलकिलापुरे ॥
समेत्य मुन्सिना सार्द्धं परामृश्य च विस्तरं ।
जाफरालीखानसंज्ञं नवाबं मतिमत्तरं ॥
बङ्गदेशस्य च सुबाहारं कृत्वा ततः परं ।
मोजफ्फरजङ्गनामानमतिबुद्धिमतां वरं ॥
तं नौयेबसुबाहारं चकार गुणसागरं ।
पञ्चविंशतिलक्षन्तु मुद्राणां कृतवान् स्थिरं ॥
तयोर्व्ययार्थं प्रत्यब्दं ततः क्लाइव् गुणाकरः ।
तेनैव मुन्सिना सार्द्धं दिल्लीं गत्वा च सत्वरः ॥
शाहालमबादशाहेन नवाबेन च धीमता ।
सुजाद्दौला नामकेन स सन्धिमकरोत् सदा ॥
अष्टाब्धिचन्द्रभूमाने हिजरिसंवत्सरे ततः ।
शीघालस्य द्वितीयाब्दे नवकृष्णाय तोषतः ॥
श्रीशाहालम्बादशाहो फरमानाख्यलिपिं मुदा ।
दत्तवान् यत्र लिखितं दिल्लीशेन सुसम्पदा ॥
सहस्रपञ्चकञ्चैव मन्सवानां हि सादिनां ।
सहस्रत्रितयं वीर्य्ययुतानां शीघ्रगामिनां ॥
उत्तमं शिविकायानं झालरेण सुशोभितं ।
नकाराख्यं वाद्ययन्त्रं ध्वजं तोगेतिनामितं ॥
राजबाहादुरोपाधिं मानवृद्धियशस्करं ।
कृपया दत्तवानस्मै बहुमानपुरःसरं ॥
सुजाद्दौला नवाबस्य समीपात् राजयोग्यकं ।
खेलातनामकं प्राप्तो वसनं भूषणादिकं ॥
तस्मिन् वर्षे स भूपालो नवकृष्णोऽतिधीमते ।
नवद्वीपाधिपश्रीलकृष्णचन्द्राय भूभृते ॥
महाराजेन्द्रबाहादुरोपाधिं मानवृद्धिनः ।
दापयामास शाहालम् बादशाहसमीपतः ॥
ततः स सहितो लार्ड क्लाइवेन महात्मना ।
काशीधाम समागम्य बभूवासौ महामनाः ॥
महाराजोपाधिकश्रीबलवन्ताख्ययेन च ।
सिंहेन हि सुवे वाराणस्याः सुनियमं स च ॥
कृत्वा विश्वेश्वरस्याग्रे नाट्यमन्दिरमध्यतः ।
नवकृष्णेश्वरं लिङ्गं स्थापयामास भक्तितः ॥
ततः पाट्नानामदेशे महाराजेन तत्र च ।
शेतावरायेण सह सुवे वेहारकस्य च ॥
कृत्वा सुनियमं तत्र तेनैव सहितो हि सः ।
कलिकाताख्यनगरे समायातो गतालसः ॥
ततस्तुष्टमनाः क्लाइव् कोम्पानेर्द्दत्तवान् पदं ।
देवानीसंज्ञकं तस्मै राज्ञे बहुलमानदं ॥
रसर्तुसिन्धुभूमाने इंरेजिहायने पुनः ।
शाहालम्बादशाहस्य प्रागुक्तस्य महात्मनः ॥
समीपतः फरमानाख्यलिपिमानीय यत्नतः ।
तस्मै राज्ञे ददौ प्रीत्या प्रीतये तस्य धीमतः ॥
यत्रासीदं विलिखितं दिल्लीशेन सता स्वयं ।
मन्सवानां षट्सहस्रं सहस्राणां चतुष्टयं ॥
सादिनाञ्च महाराजोपाधिमस्मै प्रदत्तवान् ।
एवं सुवर्णघटितं पदकञ्च ददौ महान् ॥
यच मुद्रितपारस्यभाषयास्तीति वर्णितं ।
इंरेजकोम्पानिकर्म्मोत्तमरूपेण साधितं ॥
पश्चात्तो बादशाहस्य समीपात् सनन्दनामकं ।
सप्तशीत्यधिकं चैव कटकञ्चाप्यनेकधा ॥

राजोपाधेस्तथा वाहादुरोपाधेस्तथैव च ।
भूपालनवकृष्णाभिधानवाहादुराय च ॥
दातुं दयाभवत् लार्ड क्लाइवस्य महामतेः ।
तन्मया सहितं चिह्नं कोम्पानेस्तन्महीभृते ॥
दत्तं तथा दशविधं खेलातं वस्त्ररूपकं ।
किरीटं कुण्डलं रत्नभूषां हारञ्च मौक्तिकं ॥
फलकं करवालञ्च दण्डं चामरमुत्तमं ।
मयूरपुच्छव्यजनं घटीयन्त्रं मनोरमं ॥
हस्त्यश्वं भालरैर्युक्तं शिविकायानमेव च ।
लार्ड क्लाइव् ददौ राज्ञे सदा हितकराय च ॥
एवं सिपाइसंज्ञानां नृणां तद्द्वारपालने ।
आज्ञां दत्त्वा तस्य हस्तं गृहीत्वा तु वरासने ॥
हस्तिपृष्ठे समारोह्य पुरं प्रेरितवांस्ततः ।
हस्त्यश्वपत्तिनिकरैर्ब्बहुदीनैश्च संवृतः ॥
स च राजा रौप्यमुद्रां चिपन् मार्गेति हर्षतः ।
विवेश स्वं पुरं रम्यं सर्व्वलोकैः प्रशंसितः ॥
समुद्ररसवाजीन्दुमाने हरेजिहायने ।
स लार्ड क्लाइवो मेस्तर् वार्लेष्टाय महात्मने ॥
राज्यभारं समर्प्याथ स्वस्थाने प्रस्थितोऽभवत् ।
चकार च महाराजो देवानीकर्म्म पूर्व्ववत् ॥
तस्यास्मिन् समये माता मृता विष्णोः पदं गता ।
अनेकलक्षमुद्राभिस्तेनाद्या तत्क्रिया कृता ॥
ततः कोम्पानिसंक्रान्तं कर्म्म त्यक्त्वा स भूपतिः ।
पारमार्थिकचिन्तायां नियुक्तोऽभून्महामतिः ॥
अथ कोम्पानिना गिर्जानिर्म्माणार्थं प्रयाचितः ।
मूल्यं विनार्थितां भूमिं दत्तवानतिमोदतः ॥
वसुसिन्धुमुनिक्षौणीमाने हरेजिहायने ।
सुतानुट्यादिकं ग्रामं प्राप्तवानिह पत्तने ॥
तेनैव तस्य राज्ञस्तु धनिविज्ञानिमानिनः ।
प्रजा भूता हि बहवो एतन्नगरवासिनः ॥
समुद्रवसुभूमीन्दुमाने वङ्गाख्यकाब्दके ।
हेष्टिंस् गवर्णरस्याक्लावर्द्धमानाभिधानके ॥
देशे तस्य महाराजं साजाओलीतिनामके ।
कार्य्ये नियोजयामास स गत्वा तत्र देशके ॥
राज्यस्य शासनञ्चैवं राज्ञो राज्यास्तथैव च ।
समयविषयस्यैव सुन्दरं नियमं स च ॥
कृत्वा राजकरान् सर्व्वानादाय बहुकष्टतः ।
खालिसानामके स्थानेऽर्पितवान् सुसमाहितः ॥
एवं रसवसुक्षौणीन्दुमे वङ्गाख्यवर्षतः ।
महाराजाधिराजो यस्तेजश्चन्द्रेतिसंज्ञितः ॥
चतुःसप्ततिसाहस्राधिकाष्टलक्षमुद्रिकाः ।
तथा सप्तशतं मुद्राः सप्तविंशतिकाधिकाः ॥
चर्षं कृत्वा महाभागो महाराजकृष्णचन्द्रतः ।
राज्ञः करं राजकोषे प्रेषयामास यत्नतः ॥
ततो गवर्णरस्यैव ह्यनुमत्यनुसारतः ।
खालिसासंज्ञकात् स्थानात् महाराजोऽतिबाधितः ॥
क्रमशः क्रमशश्चैव मुद्रास्ताः प्रतिवर्षतः ।
आदानमकरोत् राजाधिराजस्योपकारतः ॥
रामर्षिशशिभूमाने वङ्गसंवत्सरे स च ।
श्रीमद्राधावल्लभस्य सेवनार्थं चिराय च ॥
दत्तवान् वल्लभपुरं कृत्वा देवोत्तरं मुदा ।
श्रीमन्नन्ददुलालस्य सेवार्थमपि सर्व्वदा ॥
आनरपुरेतिख्यातायां परगणायां प्रयत्नतः ।
चारग्रामं तथा देवोत्तरं कृत्वा ददौ ततः ॥
तथाग्रहीपतः श्रीमद्गोपीनाथं मनोहरं ।
विग्रहं वल्लभपुरात् श्रीराधावल्लभं परं ॥
एवञ्च खड्दहग्रामात् श्रीश्यामसुन्दराह्वयं ।
श्रीमन्नन्ददुलालाख्यं साँइवनाग्रामतः स्वयं ॥
स्वकं पुरं समानीय स राजा बहुयत्नतः ।
विधिबोधितरूपेण चिरं संसेव्य संयतः ॥
नानाविधानलङ्कारान् मुक्तावज्रविभूषिताम् ।
तापनीयान् मणिमयान् दत्त्वा प्रेरितवांश्च ताम् ॥
पिपीतकाख्यद्वादश्यां समाहूयाथ पण्डिताम् ।
दानमानैः पुरस्कृत्य दिग्विदिक्षु समाश्रिताम् ॥
श्रीमद्गोपीनाथसंज्ञं श्रीगोविन्दं तथा परं ।
विग्रहं संप्रतिष्ठाप्याकरोत्सराधनं वरं ॥
वेहालाग्राममारभ्य कुलपीं यावदुत्तमं ।
स स्वव्ययेन पन्थानं कृतवान् सर्व्वतः समं ॥
तथा स्वकीयपुरतः पुरोऽतिशयविस्तृतं ।
चकार राजपन्थानं मञ्जुलं सुपरिष्कृतं ॥
नेत्राम्बराब्धिभूमाने शकसंज्ञकहायने ।
कुलाचार्य्यान् बुधगणांश्चानीय स्वनिकेतने ॥
स च द्वाविंशपर्य्यायिमुख्यानां बहुयत्नतः ।
कुलीनानामेकयायीमकरोद्भूरिदानतः ॥
आलायाम्बरपक्षेन्दुमानेऽसौ वङ्गवत्सरे ।
विहाय देहमगमत्पादाम्भोजयुगं हरेः ॥ २२ ॥
रामसुन्दरदेवस्य रायख्यातियुतस्य च ।
अशेषगुणसम्पन्नाः पुत्रा जाता हि पञ्च च ॥
कृष्णमोहनदेवस्तु तेषां ज्येष्ठः प्रकीर्त्तितः ।
व्रजमोहनदेवो यः स धीमान् मध्यमः स्मृतः ॥
गोपीमोहनदेवस्तु तृतीयो भुवि विश्रुतः ।
भूपतेर्नवकृष्णस्य स एव दत्तकः सुतः ॥

चतुर्थो निरपत्योऽभूद्देवो गोलोकमोहनः।
कनिष्ठो वैष्णवोऽपुत्रो देवो भुवनमोहनः॥ * ॥
माणिक्यचन्द्ररायस्य द्वौ सुतौ च तयोः पुनः।
ज्येष्ठो राधाकृष्णदेवो निरपत्यो महागुणः॥
गोपीकृष्णाख्यदेवस्तु कनिष्ठो देवतार्चकः।
शुद्धाचारः कृती दान्तो बुद्धिमान् वंशकारकः॥ २२ ॥
पुत्रावुभौ महाराजनवकृष्णस्य धार्म्मिकः।
गोपीमोहनदेवस्तु तयोर्ज्येष्ठः स च दक्षिणः॥
कौन्सेलाध्यक्षजान् दृष्टे विल्साभिधानकस्य च।
एवमादिमजेम्रेल् जान् कार्णकस्य तथैव च॥
गवर्णरमेक्फार्शनस्य देवानीसंज्ञकं पदं।
स प्राप्य तत्र कर्त्तव्यं कृतवानतिमानदं॥
तथाच मत्स्यविपणेर्म्मत्स्यार्थं बहुमूल्यकं।
कोम्पानये ददौ स्थानं सर्व्वेषां हितकारकं॥
अङ्केन्दुपञ्चभूमाने वङ्गसंज्ञकहायने।
पौत्रोद्वाहार्थमाहूय स तु यत्नात् शुभे दिने॥
कुलाचार्य्यान् कुलीनांश्च गृहीत्वा तत्सुसम्मतिं।
कनिष्ठषड्भ्रातृजयोः कुलयोश्चिरसंस्थितिं॥
कृतवानथ मात्रा स तुलापुरुषदानकं।
कारयामास यत्नेन यथोक्तविधिपूर्व्वकं॥
ततश्च मातृकृत्ये स सुवर्णदानसागरं।
कृत्वा ददौ द्विजाग्र्येभ्यस्तानाहूय च सादरं॥
रामाग्निनागभूमाने इंरेजाब्दे स मानदं।
गवर्णरस्य कारुण्यात् प्राप्तवानुत्तमं पदं॥
राजबाहादुरोपाधिं सुवर्णाम्बरसप्तकं।
अनेकरत्नघटितं शिरोभूषणयुग्मकं॥
तथा सन्मौक्तिकं हारं फलकं करवालकं।
शस्त्रिषट्सप्तपत्तीनां शिविकायगमार्थकं॥
आज्ञाञ्च प्राप्तवान् सोऽपि बहुसम्मानपूर्व्वकं।
चिरमाध्यादिरहितः कृत्वा राज्यमकण्टकं॥
वह्निवेदाश्चिशशभृन्माने वङ्गाख्यहायने।
सौरचैत्रे शुक्लपक्षैकादश्यां तिथौ दिने॥
अर्द्धं नारायणक्षेत्रेऽन्यार्द्धं कारणजीवने।
देहस्याधायात्मजनैर्गीयमाने जनार्द्दने॥
भावयन्निष्टदेवस्य रूपं हृदयसंस्थितं।
शान्तः स महीपालः संप्राप्तोऽथ मृतोऽमृतं॥ * ॥
कनिष्ठो राजकृष्णाख्य शौर्य्यो गुणिमानकृत्।
राजायगण्यो मान्यश्च वदान्यो गानशास्त्रवित्॥
स च यथोविशसंख्यपर्य्यायाणां महात्मनां।
कुलीनानामिकयार्थी कृतवान् गुणशालिनां॥
तथा कुलप्रदीपाख्यं कुलग्रन्थं प्रयत्नतः।
कुलीनानन्दजनकं चकार कीर्त्तिलाभतः॥
यथा चैतन्यदेवेन कृतं नगरकीर्त्तनं।
तथा राज्ञा कृतञ्चेति जनाः कुर्व्वन्ति कीर्त्तनं॥
रामाग्निवसुशुभ्रांशुमाने इंरेजिवत्सरे।
गङ्गातीरे ज्ञानपूर्वं मृतोऽगात् हरिमन्दिरे॥ २३॥
कृष्णमोहनदेवस्य तनयौ द्वौ सुशीलकौ।
राजनारायणाख्यानश्रीनारायणदेवकौ॥ * ॥
ब्रजमोहनदेवस्याप्युभौ पुत्रौ तयोः परः।
धार्म्मिको रामरत्नाख्यो हरनारायणोऽवरः॥ * ॥
गोपीकृष्णस्य देवस्य पुत्राश्चत्वार एव च।
तेषां ज्येष्ठस्तु गोपालकृष्णोऽतिसात्त्विकः स च॥
श्रीलगोकुलकृष्णस्तु मध्यमो गुणसागरः।
वाङ्गालवेङ्के नायेवदेवानीकर्म्मतत्परः॥
गोपेन्द्रकृष्णगोपेशकृष्णौ सन्तानवर्ज्जितौ।
तृतीयकतुरीयौ च वाल्ये देहान्तरं गतौ॥ २४ ॥
वाणाम्बरर्षिभूमानसमायां शकभूपतेः।
गोपीमोहनदेवस्य गोष्ठीपतिमहीपतेः॥
श्रीराधाकान्तदेवेति नाम्ना पुत्रोऽभ्यजायत।
वङ्गविद्यां तथा हिन्दीं पारसीमारवीं ततः॥
इंरेजीं संस्कृतञ्चैवाधीतवान् सोऽतियत्नतः।
तथा चतुर्धुरीणस्य गोपीकान्तस्य धीमतः॥
सर्व्वाग्रमान्यस्य गोष्ठीपतेर्म्मौलिकराजतः।
सिंहेत्युपाधियुक्तस्य प्रपौत्रीं स उपायत॥
गोष्ठीपतिरभूत्तेन कुलाचार्य्यादिसम्मतः।
वङ्गलण्डफ्रान्सजर्म्मान्डेन्मार्कादिप्रदेशतः॥
रुषियामेरिकासंज्ञदेशानाञ्चैव मध्यतः।
विद्यादिविषयाणान्तु सभानां सभ्यतामितः॥
एवं धर्म्मसभायाश्च तथान्यासां सभापतिः।
बभूव बहुसम्मानपूर्व्वकं स महामतिः॥
स बाणाग्नीभशशभृन्मित इंरेजिवत्सरे।
प्राप्तः किलकिलानामनगरेऽस्मिन् मनोहरे॥
गवर्णरस्यैवेच्छातो माजिष्ट्रेटीयकं पदं।
यदेवैकान्तमान्यानां गुणिनामपि मानदं॥
मुन्यग्निनागभूमाने ऐंरेजाब्दे तु पैतृकं।
राजोपाधिञ्च कौन्सेलात् वसनं भूषणादिकं॥
मानवर्द्धनपत्रेण सहितं बहुमूल्यकं।
तथा गवर्णरस्यैव सभायामादिपीठकं॥
प्राप्तवानतिदुष्प्राप्यं यल्लोके मानदायकं।
अङ्कवेदाश्विभूमाने वङ्गाब्दे विधिपूर्व्वकं॥
गयातीर्थप्रयाणार्थं प्रस्थितः पथिमध्यतः।
सुरशिदावादनगरे श्रीगवावसभाक्रुतः॥

सम्मानितः स च समादरंतत्समीपतः ।
*राजार्हं हैमवसनं सप्तकं सप्तरूपतः ॥*
हीमाख्यपक्षिपुच्छेन युक्तं युग्मं किरीटकं ।
कुण्डलं मौक्तिकं हारं फलकं करवालकं ॥
यत् सदा भूपतीनां हि भूरिसम्भ्रमवर्द्धकं ।
प्राप्तवांस्तत्तु दुष्प्राप्यं बहुसम्मानपूर्व्वकं ॥
अथेन्दुरसपक्षाङ्कमाने वङ्गाब्दहायने ।
पौरोदाहोपलक्ष्येण सभां कृत्वा शुभे दिने ॥
समाहूय कुलाचार्य्यान् कुलीनान् पण्डितान् स च ।
कायस्थानां चतुर्विंशपर्य्यायाणां तथैव च ॥
सुमुख्यानां कुलीनानां कनिष्ठानाञ्च सर्वशः ।
एवं षड्भ्रातृजातानामेकयायीं चकार सः ॥
तत्पत्रिकां कारिकायाः पुस्तकञ्चापि मुद्रितं ।
कुलीनघटकादिभ्यः कृत्वा तेन समर्पितं ॥
पाठशालाध्यापनाय ग्रन्थनिर्म्माणहेतुतः ।
स्कुलबुक् सोसाइटीनाम या सभास्मिन् प्रदेशतः ॥
स तदर्थं नीतिकथा वांलाशिक्षादिपुस्तकं ।
कृतवान् हेकमते आग्जार् वृत्तायुर्व्वेदवाचकं ॥
पुस्तं पारस्यभाषात इंरेजीभाषया पुनः ।
अनुवाद्य ग्रेटब्रिटन्देशे राज्ञो महात्मनः ॥
स च राइयल् एसियाटिक् समाजे प्रेरयत्ततः ।
तच्च मुद्राङ्कितं कृत्वा तत्शतं परिमाणतः ॥
अनुवादकसान्निध्ये तस्यैव दर्शनार्थतः ।
कृपया प्रेषयामासुस्तत्सदःस्थाः प्रयत्नतः ॥
तथाच व्ययायासकालसम्पादनीयकं ।
शब्दकल्पद्रुमाख्याभिधानस्य सप्तकाण्डकं ॥
परोपकृतये कृत्वा गुणिभ्योऽभवदर्पिता ।
यत्प्राप्यालोक्य सन्तुष्टाः सर्व्वदेशीयपण्डिताः ॥
प्रत्येके प्रेरयामासुः सुख्यातिपत्रिकादिकं ।
विशेषतो दिनेमारराज्येशो हैमहारकं ॥
स्वीयाख्यचिह्नसंयुक्तपदकोत्तमधारकं ।
प्रीत्या संप्रेषयामास राज्ञोऽर्थे मानदायकं ॥
पुनस्तदभिधानस्य परिशिष्टमतिश्रमात् ।
निर्म्माय मुद्रितं तेन प्रदानार्थं बहुव्ययात् ॥ २४ ॥
अथैव कथयामीमं इतिहासं पुरातनं ।
सङ्क्षेपेण च तद्राज्ञो लोकविस्मयकारणं ॥
नागवेदाष्टभूमाने इंरेजाब्दे हि वैरिणा ।
टाकीग्रामनिवासेन केनचित् ख्यातमुन्सिना ॥
दुष्टेनाभीष्टसिद्ध्यर्थं दण्डपारुष्यसंज्ञके ।
विवादस्य पदे मान्यजनानां मान्यभाजके ॥
कारितो मिथ्याभियोगस्तस्य निर्दोषभूभृतः ।
कुलीग्रामस्य मेजिष्ट्रेट् नामकेनाविचारतः ॥
*पोलिसस्सुपरिण्टेण्डेण्टसंज्ञकस्य समीपतः ।*
क्रुधा तन्मिथ्यापवादः पश्चात् प्रकटीकृतः ॥
तेन सेक्रेटरिद्वारा गवर्णराय वेदितः ।
सोऽपि तैर्व्वैरबुद्ध्या चेष्टां कृतवान् तद्दमार्थतः ॥
किन्तु सेशन्जजाख्यस्य प्राड्विवाकस्य धीमतः ।
अतिसूक्ष्मविचारेण राजा निर्दोषतां गतः ॥
तस्माद्विपक्षपक्षाणां क्रूराणाञ्च विशेषतः ।
तेषांमुखमभङ्गेन लज्जाधिक्यमजायत ॥
तेन सर् हर्वर्ट् मेडाक् डेपिउटी गवर्णरः ।
स्नेहेनाक्लिष्टहृदयः सदयश्चातिसत्वरः ॥
आह्वानार्थं तस्य राज्ञः प्रेषयामास पत्रकं ।
स चानीय स्वभवने तस्य सम्मानपूर्व्वकं ॥
सान्त्वयित्वा जयाशंसी धन्यवादं प्रदत्तवान् ।
एवं गवर्णरो जेनरेल् लार्डडलहौसिरात्मवान् ॥
स्वदेशयानसमये सभामध्येऽतिहर्षितः ।
तद्राज्ञो दक्षिणं हस्तं गृहीत्वातिप्रयत्नतः ॥
लार्डेन च तथा लेडी केनिङ्गेन महोत्सुकः ।
साक्षात् तं कारयामास मानिनां मानवर्द्धकः ॥
पूर्व्वोक्तमिथ्याभियोगे दण्डार्हकरणाय च ।
उद्योगजन्यदोषस्याप्यकरोत् क्षालनं स च ॥
स तु मुन्सी पुनरपि दण्डपारुष्यवादतः ।
फरासडाङ्गानगरे पलायित्वा मृतस्ततः ॥
राजकृष्णस्य नृपतेर्जाता वसुमिताः सुताः ।
शिवकृष्णो नृपो ज्येष्ठो यस्यास्ति शिवतुल्यता ॥
रूपवान् गुणवांश्चापि कालीकृष्णस्तु मध्यमः ।
दयालुर्बुद्धिमान् मान्यो धार्म्मिको मानवोत्तमः ॥
इंरेजीभाषया सोऽपि महानाटकनामकं ।
तथा रसलसेत्याख्यमिंरेजानाञ्च पुस्तकं ॥
वङ्गीयभाषया चैवानुवादमकरोत्ततः ।
राजवाहादुरोपाधिं प्राप्तो गवरमेण्टतः ॥
देवीकृष्णोऽतिसरलो देवभक्तस्तृतीयकः ।
अपूर्व्वगुणसंयुक्तोऽपूर्व्वकृष्णस्तु तुर्य्यकः ॥
देवान् कुरुर् नामधेयं ग्रन्थं स चोर्दुभाषया ।
निर्म्माणं कृतवान् सोऽपि निजाख्यायस्य चेच्छया ॥
ततो माधवकृष्णस्तु सुशीलः पुण्यवर्ज्जितः ।
पञ्चमो देवताभक्तः सोऽस्ये वर्त्तते संस्थितः ॥
[illegible] स च वैतालपञ्चविंशतिनामकं ।
ग्रन्थं पारस्यभाषातोऽनुवादं यत्नपूर्वकं ॥
षष्ठः कमलकृष्णस्तु देवे पैत्र्ये सदा रतः ।
काव्ये बहुगुणोपेतस्तथा पण्डितसम्मतः ॥

एवं गङ्गासागरयोः सङ्गमे तेन निर्मितं ।
श्रीमत्कपिलदेवस्य मन्दिरं सुपरिष्कृतं ॥
तुलापुरुषदानञ्च श्रीमद्भागवतस्य च ।
पारायणं वागवाजारस्य घट्टे तथैव च ॥
शिवस्य स्थापनं नाना कारयामास सोत्सुकः ।
बहुवित्तव्ययेनैव स्वकुलकीर्त्तिविवर्द्धकः ॥
नरेन्द्रकृष्णेतिसंज्ञो यः सुतः स तु सत्तमः ।
रूपवान् गुणवांश्चैव नरेन्द्रेण पुनः समः ॥
स च डेपिउटीमेजिष्ट्रेट् बभूव सदाशयः ।
यो हि यादवकृष्णस्तु कनिष्ठोऽतिदयामयः ॥
तेन देवान् मोग्धकाख्यं पुस्तकञ्चोर्दुभाषया ।
निर्म्माय मुद्रितं तच्च कृत्वा दत्तं निजेच्छया ॥
गयाधामन्ततः सोऽपि पुत्रहीनोऽन्ततं गतः ।
चन्द्रेषुपक्षभूमाने वङ्गसंज्ञकवर्षतः ॥
राजराधाकान्तदेवसाहाय्येन मुदान्वितैः ।
स्वपर्य्यायकुलीनानामेकयायी कृता च तैः ॥ २४ ॥
श्रीराधाकान्तदेवस्य राजवाहादुरस्य च ।
त्रयः सुताः सिद्धगोष्ठीपतयः स्वकुलेषु च ॥
यतो गोष्ठीपतेः पुत्रा दौहित्राश्च विशेषतः ।
तेषां ज्येष्ठः श्रीमहेन्द्रनारायण इतीरितः ॥
देवब्राह्मणभक्तः स बुद्धिमांश्च गुणान्वितः ।
मध्यमः श्रीलराजेन्द्रनारायण इति श्रुतः ॥
धार्म्मिकः सत्यवादी च कर्म्मदक्षश्च सत्तमः ।
यस्तु श्रीदेवेन्द्रनारायणो देवः स चान्तिमः ॥
व्यवहारज्ञानयुतः प्रतापादिसमन्वितः ।
मन्त्रणादाननिपुणो धीमान् धीमद्भिराहृतः ॥
एते भारतवर्षीयगवर्णरसमाजतः ।
तत्र यानस्याधिकारं कुमारोपाधिकं ततः ॥
पञ्चप्रकारं वसनं भूषणञ्च मनोरमं ।
त्रयः सहोदराः सर्व्वे प्रत्येके लेभिरे समं ॥ २५ ॥
जाताः पुत्रास्त्रयः श्रीमत्शिवकृष्णस्य भूभृतः ।
तेषां श्रीयुतभूपेन्द्रकृष्णो ज्येष्ठः प्रकीर्त्तितः ॥
चत्वारस्तनयाः श्रीलकालीकृष्णस्य भूपतेः ।
तेषां ज्येष्ठः श्रीहरेन्द्रकृष्ण इत्यभिधीयते ॥
बभूव यो डेपिउटीमैजिष्ट्रेटपदे स्थितः ।
श्रीदेवीकृष्णदेवस्य तनयौ द्वौ च धीमतः ॥
श्रीमदानन्दकृष्णो यत्तयोर्ज्येष्ठः स च स्मृतः ।

श्रीयुतापूर्व्वकृष्णस्य चत्वारस्तनयाःस्मृताः ॥
श्रेष्ठो ज्येष्ठः श्रीकुमारकृष्णेतिख्यातिसंयुतः ।
श्रीमन्नरेन्द्रकृष्णो यः सम्भूतास्तस्य देहतः ॥
त्रयः पुत्रास्तेषु मध्ये ज्येष्ठपुत्रोऽभवत् पुनः ।
श्रीमद्व्रजेन्द्रकृष्णेति नाम्ना ख्यातः सुलक्षणः ॥ २५ ॥
राजनारायणस्यैव देवोपाधियुतस्य च ।
पुत्रोऽभवज्जगत्कृष्णनामेदानीं मृतः स च ॥
श्रीनारायणदेवस्य त्रयः पुत्रा गुणैर्युताः ।
तेषां ज्येष्ठः श्रीप्रसन्ननारायण इति श्रुतः ॥
गवरन्मेण्टस्य तोषाखानायां प्रथमं स हि ।
अध्यक्षोऽभूत्तत्र कर्म्मनिर्व्वाहकरणेन हि ॥
तस्मै गवर्णरो लार्डहार्डिञ्जः कृपयान्वितः ।
रायवाहादुरोपाधिं दत्तवानतितोषतः ॥
ततो मुरशिदावादे नवावस्य समीपतः ।
मेजाजतस्य देवानीं प्राप्तवान् वहुभाग्यतः ॥
तत्रापि च नवावस्य सन्निधौ लब्धवानयं ।
राजवाहादुरोपाधिमेकान्तमानतः स्वयं ॥ २५ ॥
गोपालकृष्णदेवस्य पुत्राश्चत्वार एव तु ।
श्रीलश्रीकृष्णदेवो यः सर्व्वेषामग्रजः स तु ॥
श्रीमद्गोकुलकृष्णस्य तनयौ द्वौ महात्मनः ।
श्रीमन्नृपेन्द्रकृष्णस्तु ज्येष्ठोऽतिनन्दिवर्द्धनः ॥ २५ ॥
श्रीमन्महेन्द्रादिनारायणदेवस्य धीमतः ।
नाद्यापि तनयो जातो गृहवैगुण्यदोषतः ॥
तथा श्रीयुतराजेन्द्रनारायणस्य कायतः ।
श्रीमद्धिरीन्द्रादिनारायणः पुत्रो व्यजायत ॥
एवं श्रीयुक्तदेवेन्द्रनारायणशरीरतः ।
सञ्जातश्च श्रीव्रजेन्द्रनारायणेतिसंज्ञितः ॥ २६ ॥
श्रीमद्भूपेन्द्रकृष्णस्य पुत्रो जातोऽतिसुन्दरः ।
श्रीजितेन्द्रियकृष्णेतिख्यातियुक्तः प्रियङ्करः ॥
श्रीमद्धरेन्द्रकृष्णस्य तनयश्चातिशोभनः ।
श्रीमद्दरेन्द्रकृष्णोऽप्यजातः सरसिजाननः ॥ २६ ॥
जगत्कृष्णस्यात्मजस्तु ज्येष्ठोऽभूदतिशीलवान् ।
श्रीमन्नारणकृष्णेतिनाम्ना ख्यातोऽतिबुद्धिमान् ॥
श्रीलप्रसन्नादिनारायणस्य सुत उत्तमः ।
श्रीमद्भूपेन्द्रादिनारायणः शशधरोपमः ॥ २६ ॥
इत्येकादिकषड्विंशपुरुषाणामतिनिर्म्मला ।
देववंशावली या सा समाप्ता मौलिकातुला ॥

# वर्णमाला।

| नागरी। | English. | বাঙ্গালা। | ଓଡ଼ିଆ। |
|---|---|---|---|
| अ | a | অ | ଅ |
| आ (ा) | á | আ (া) | ଆ (ା) |
| इ (ि) | i | ই (ি) | ଇ (ି) |
| ई (ी) | í | ঈ (ী) | ଈ (ୀ) |
| उ (ु) | u | উ (ু) | ଉ (ୁ) |
| ऊ (ू) | ú | ঊ (ূ) | ଊ (ୂ) |
| ऋ (ृ) | ṛi | ঋ (ৃ) | ଋ (ୃ) |
| ॠ (ॄ) | ṛí | ৠ (ৄ) | ୠ (ୄ) |
| ऌ (ॢ) | lṛi | ঌ (ৢ) | ଌ (ୢ) |
| ॡ (ॣ) | lṛí | ৡ (ৣ) | ୡ (ୣ) |
| ए (े) | e | এ (ে) | ଏ (େ) |
| ऐ (ै) | ai | ঐ (ৈ) | ଐ (ୈ) |
| ओ (ो) | o | ও (ো) | ଓ (ୋ) |
| औ (ौ) | au | ঔ (ৌ) | ଔ (ୌ) |
| ं | n or m | ং | ଂ |
| ः | ḥ | ঃ | ଃ |
| क | k | ক | କ |
| ख | kh | খ | ଖ |
| ग | g | গ | ଗ |
| घ | gh | ঘ | ଘ |
| ङ | ṅ | ঙ | ଙ |
| च | c' | চ | ଚ |
| छ | c'h | ছ | ଛ |
| ज | j | জ | ଜ |
| झ | jh | ঝ | ଝ |
| ञ | ñ | ঞ | ଞ |
| ट | ṭ | ট | ଟ |
| ठ | ṭh | ঠ | ଠ |
| ड | ḍ | ড | ଡ |
| ढ | ḍh | ঢ | ଢ |
| ण | ṇ | ণ | ଣ |
| त | t | ত | ତ |
| थ | th | থ | ଥ |
| द | d | দ | ଦ |
| ध | dh | ধ | ଧ |
| न | n | ন | ନ |
| प | p | প | ପ |
| फ | ph | ফ | ଫ |
| ब | b | ব | ବ |
| भ | bh | ভ | ଭ |
| म | m | ম | ମ |
| य | y | য | ଯ |
| र | r | র | ର |
| ल | l | ল | ଲ |
| व | v | ব | ଵ |
| श | ś | শ | ଶ |
| ष | sh | ষ | ଷ |
| स | s | স | ସ |
| ह | h | হ | ହ |
| क्ष | ksh | ক্ষ | କ୍ଷ |

अर्य्या, स्त्री, (ऋ + यत् + टाप् ।) वैश्यस्त्रीजातिः । इत्यमरः ॥

अर्य्याणी, स्त्री, (अर्य्य + आनुक् + ङीप् ।) वैश्यस्त्रीजातिः । इत्यमरः ॥

अर्य्यी, स्त्री, (अर्य्य + ङीप् ।) वैश्यपत्नी । इत्यमरः ॥ वैश्यस्त्रीजातिः । इति दुर्गादासः ॥

अर्व्व बधे । (इति कविकल्पद्रुमः) ॥ (भ्वादिं-परं-सकं-सेट् ।) अर्व्वति । इति दुर्गादासः ॥ अन्तःस्थवकारान्तोऽयं ॥

अर्व्वती, स्त्री, (अर्व्व + बाहुलकात् वनिप् + ङीप् ।) घोटकी । इति हलायुधः ॥ कुट्टनी । इति त्रिकाण्डशेषः ॥

अर्व्वा, [न्] पुं, (ऋ + वनिप् ।) घोटकः । इत्यमरः ॥ इन्द्रः । गोकर्णपरिमाणं । इति विश्वः ॥ कुत्सिते त्रि । इत्यमरः ॥

अर्व्वाक्, व्य, (अवरे काले देशे वा अञ्चति, अन्च + क्विन्, पृषोदरादित्वात् अर्व्वादेशः ।) पूर्व्वकालतः पश्चात् । तत्पर्य्यायः । अवरः २ । इत्यमरः ॥ निकटं । इति भरतः । अर्व्वाच् इति केचित् ॥

अर्व्वाचीनः, त्रि, (अर्व्वाग्भवः, खः ।) पश्चाज्जातः । विपर्य्यस्तं । इति धरणिः ॥ (इदानीन्तनः । अधोभागस्थितः । अवरदेशगतः ।
("यदूर्द्धं पृथिव्या अर्व्वाचीनमन्तरीक्षात्" । इति शतपथब्राह्मणे ।)

अर्शं, क्ली, (अर्श् + अच् ।) अर्शोरोगः । इति शब्दरत्नावली ॥ (बलिकाकारः गुह्यस्थरोगभेदः ।)

अर्शः, [स्] क्ली, (ऋ + असुन्, शुट् ।) स्वनामख्यातपायुरोगः । तत्पर्य्यायः । दुर्नामकं २ । इत्यमरः ॥ दुर्नाम ३ गुदकीलः ४ गुदाङ्कुरः ५ । इति राजनिर्घण्टः ॥ अनामकं ६ । इति शब्दरत्नावली ॥ यथा । अथार्शोऽधिकारः । तत्रार्शसः सन्निकृष्टनिदानान्याह ।
"पृथग्दोषैः समस्तैश्च शोणितात् सहजानि च ।
अर्शांसि षट्प्रकाराणि विद्याद्गुदवलित्रये" ॥
केचिद्रुधिरस्यापि दोषत्वं मन्यन्ते । तन्मतमाश्रित्याह । शोणितादिति । सहजानि शरीरेण सह जातानि । सङ्ख्यामाह । षट्प्रकाराणीति । गुदवलित्रये सार्द्धचतुरङ्गुलं गुदस्य मानं तस्यावयवभूतास्तिस्रो वलयः शङ्खावर्त्तनिभा उपर्य्युपरि सन्ति । तासां नाम प्रवाहिणी विसर्ज्जनी संवरणी चेति । तत्र गुदौष्ठोऽर्द्धाङ्गुलमानस्तदूर्द्धमङ्गुलमाना प्रथमा वलिः । सार्द्धैकाङ्गुलमाना द्वितीया । तृतीया च तावती । उक्तञ्च ।
"अर्द्धाङ्गुलप्रमाणेन गुदौष्ठं परिचक्षते ।
गुदौष्ठादङ्गुलं चैकं प्रथमान्तु वलिं विदुः ॥
सार्द्धैकाङ्गुलमानेन पृथगन्ये प्रकीर्त्तिताः" ॥ * ॥
अथ वातार्शसो विप्रकृष्टं निदानमाह ।
"कषायकटुतिक्तानि रूक्षशीतलघूनि च ।
प्रमिताल्पाशनं तीक्ष्णं मद्यं मैथुनसेवनं ॥
लङ्घनं देशकालौ च शीतौ व्यायामकर्म्म च ।
शोको वातातपस्पर्शौ हेतुर्व्वातार्शसां मतः" ॥
प्रमितमपरिमितं । तीक्ष्णमिति मद्यविशेषणं । शैत्यादिमद्गुणस्य वातसमकत्वात् । आतपस्तूष्णवीर्य्योऽप्युद्भूतरौक्ष्याद्वातप्रकोपे हेतुः वातार्शसां । नन्वर्शांसि सर्व्वाणि त्रिदोषजानि । यतआह ।
"पञ्चात्मा मारुतः पित्तं कफो गुदवलित्रये ।
सर्व्व एव प्रकुप्यन्ति गुदजानां समुद्भवे" ॥ इति ।
तथा सति कथं वातार्शसामिति उच्यते । तत्तदाधिक्याद्व्यपदेशभेद इति न दोषः । अतएव अग्रे वक्ष्यते । पित्तोल्बणानामिति तथाच चरकः ।
"अर्शांसि नाम जायन्ते नासन्निपतितैस्त्रिभिः ।
दोषैर्दोषविशेषात्तु विशेषः कथ्यतेऽर्शसां" ॥
इति ॥ * ॥ अथ पित्तार्शसो विप्रकृष्टनिदानमाह ।
"कट्वम्ललवणोष्णानि व्यायामाग्न्यातपप्रभाः ।
देशकालावशिशिरौ क्रोधो मद्यमसूयनं
विदाहि तीक्ष्णमुष्णं यत् तत् सर्व्वं पानभोजनं ।
पित्तोल्बणानां विज्ञेयः प्रकोपे हेतुरर्शसां" ॥
उष्णद्रव्यस्य स्पर्शनादि बोद्धव्यं उष्णपानभोजनस्याग्रे वक्ष्यमाणत्वात् । अग्न्यातपप्रभा अग्न्यातपयोः प्रभा तेजः । अथवा अग्न्यातपेतरतेजस्विद्रव्यस्य दीप्तिः प्रभा । अशिशिरो देशो मरुः । असूयनं परसम्पत्तिद्वेषः । पानभोजनं पीयत इति पानं । भुज्यते इति भोजनं प्रकोपे उत्पत्तौ ॥ * ॥
अथ कफार्शसो विप्रकृष्टं निदानमाह ।
"मधुरस्निग्धशीतानि लवणाम्लगुरूणि च ।
अव्यायामदिवास्वप्नशय्यासनसुखे रतिः ॥
प्राग्वातसेवाशीतौ च देशकालावचिन्तनं ।
श्लैष्मिकाणां समुद्दिष्टमेतत् कारणमर्शसां" ॥
अचिन्तनं निश्चिन्तता ॥ * ॥ अथ त्रिदोषार्शसो विप्रकृष्टं निदानमाह ।
"सर्व्वो हेतुस्त्रिदोषाणां सहजैर्लक्षणं समं" ।
जनकत्वेन त्रयो दोषा येषां तानि त्रिदोषाणि अर्शांसि तेषां सर्व्वो हेतुः । पृथग्वातपित्तकफार्शोहेतुः । त्रिदोषार्शसां लक्षणञ्च सहजैः सहजार्शोभिः समं सदृशं । ननु त्रिदोषाणां इति विशेषणं व्यर्थं । यतः सर्व्व एव व्याधयस्त्रिदोषजाः । उक्तञ्च ।
"द्रव्यमेकरसं नास्ति न रोगोऽप्येकदोषजः ।
एकस्तु कुपितो दोष इतरावपि कोपयेत्" ॥
इति । युक्तिमप्याह । स्वकारणादृद्धो वायुः शैत्याच्छीतलं श्लेष्माणं लाघवात्तेजोरूपं पित्तं वर्द्धयते । तथा पित्तं कटुकत्वात् वातं द्रवत्वात् कफं वर्द्धयते । श्लेष्मा च शैत्याद्वायुं द्रवत्वात् पित्तं वर्द्धयते इति । उच्यते । यत्र स्वस्वकारणात्त्रयो दोषाः कुप्यन्ति तत्र त्रिदोषजव्यपदेश इति न दोषः ॥ * ॥ अथार्शसां पूर्व्वरूपमाह ।
"विष्टम्भोऽन्नस्य दौर्ब्बल्यं कुक्षेराटोप एव च ।
कार्श्यमुद्गारबाहुल्यं सक्थिसादोऽल्पविट्कता ॥
ग्रहणीदोषपाण्ड्वर्त्तेराशङ्का चोदरस्य च ।
पूर्व्वरूपाणि निर्द्दिष्टान्यर्शसामभिवृद्धये" ॥
दौर्ब्बल्यमालस्यं । आटोपः गुड़्गुड़ाशब्दः । अभिवृद्धये उत्पत्तये ॥ * ॥ अथार्शसां संप्राप्तिपूर्व्वकं सामान्यं लक्षणमाह ।
"दोषास्त्वङ्मांसमेदांसि संदूष्य विविधाकृतीन् ।
मांसाङ्कुरानपानादौ कुर्व्वन्त्यर्शांसि तान् जगुः" ॥
त्वङ्मांसपदेन त्वङ्मांसाश्रितं रक्तमपि गृह्यते । चिकित्सायां रक्तस्रावणोपदेशात् । अपानं गुदं । आदिशब्दान्नासानेत्रनाभिमेढ्रादिष्वपि कुर्व्वन्ति ॥ * ॥
अथ वातार्शोलक्षणमाह ।
"गुदाङ्कुरा बह्वनिलाः शुष्काश्चिमिचिमान्विताः ।
म्लानाः श्यावारुणाः स्तब्धा विशदाः परुषाः खराः ॥
मिथोविसदृशा वक्रास्तीक्ष्णा विस्फुटिताननाः ।
विम्बीकर्क्कन्धुखर्ज्जूरकार्पासीफलसन्निभाः ॥
केचित्कदम्बपुष्पाभाः केचित् सिद्धार्थकोपमाः ।
शिरःपार्श्वांसकट्यूरुवङ्क्षणाभ्यधिकव्यथाः ॥
क्षवथूद्गारविष्टम्भहृद्ग्रहारोचकप्रदाः ।
कासश्वासाग्निवैषम्यकर्णनादभ्रमावहाः ॥
तैरार्त्तो ग्रथितं स्तोकं सशब्दं सप्रवाहिकं ।
रुक्फेनपिच्छानुगतं विबद्धमुपवेश्यते ॥
कृष्णत्वङ्नखविण्मूत्रनेत्रवक्त्रश्च जायते ।
गुल्मप्लीहोदराष्ठीलासम्भवस्तत एव च" ॥
बह्वनिलाः वातोल्बणाः । गुदाङ्कुराः अर्शांसि । चिमिचिमान्विताः चिमिचिमा व्यथाविशेषः चरचराव इति लोके तदन्विताः । श्यावारुणाः श्यावा धूम्रवर्णाः । अरुणा ईषद्रक्ताः । स्तब्धाः कठिनाः । विशदाः अपिच्छिलाः । परुषाः गोजिह्वावत् स्पर्शे कर्कशाः । खराः कर्कोटकफलवत् सूक्ष्मानेककण्टकाचिताः । विम्बादिफलसन्निभाः आकृत्याः । अत्र विकल्पबोधकं वक्ष्यमाणं केचित् केचिदिति पदं सम्बन्धनीयं ।
"कदम्बपुष्पाभाः स्थूला अनेकसूक्ष्मशिखराः ।
सिद्धार्थकोपमाः पीतसूक्ष्मपिड़काश्रिताः" ॥
तैरार्त्त इति अर्शोभिः पीड़ितः । तैरार्त्तो विड़ुपवेश्यत इत्यार्त्तस्य प्रयोज्यकर्त्तुः कर्म्मतार्थत्वात् । ग्रथितं मलगुटिकाग्रथितविड़्वर्त्तिरूपं । पिच्छा पिच्छिलो द्रवभागः । बद्धं संहतं । विट्शब्दो नपुंसकेऽप्यस्ति । उपवेश्यते त्यज्यते । अतएव वातार्शस एव गुल्मादीनां सम्भवः । अष्ठीला नाभेरधोभागे पाषाणपिण्डिकावद्वातव्याधिविशेषः ॥ * ॥ अथ पित्तार्शोलक्षणमाह ॥
"पित्तोत्तरा नीलमुखा रक्तपीतासितप्रभाः ।
तन्वस्रस्राविणो विस्रास्तनवो मृदवः श्लथाः ॥
शुष्कजिह्वायकृत्खण्डजलौकोवक्त्रसन्निभाः ।
दाहपाकज्वरस्वेदतृष्णामूर्च्छारतिप्रदाः ॥
सोष्माणो द्रवनीलोष्णपीतरक्तामवर्च्चसः ।
यवमध्या हरित्पीतहारिद्रत्वङ्नखादयः" ॥
पित्तोत्तराः पित्तोल्बणाः । तनु अघनं । श्लथाः लम्बिनः । सन्निभाः आकृत्या । पाको गुदस्य । सोष्माणः उष्णस्पर्शाः । हरित्श्यामवर्णं । पीतं हरितालवर्णं । हारिद्रं हरिद्रावर्णं । आदिशब्दान्मलमूत्रमुखानां ग्रहणं ॥ * ॥ अथ केचिद्रुधिरस्यापि दोषत्वं मन्यन्ते तन्मतमाश्रित्य रक्तार्शोलक्षणमाह ।

"रक्तोल्वणा गुदे कीलाः पित्ताकृतिसमन्विताः ।
वटप्ररोहसदृशा गुञ्जाविद्रुमसन्निभाः ॥
तेऽत्यर्थं दुष्टमुष्णञ्च गाढ़विट्कप्रपीड़िताः ।
स्रवन्ति सहसा रक्तं तस्य चातिप्रवृत्तितः ॥
भेकाभः पीड्यते दुःखैः शोणितक्षयसम्भवैः ।
हीनवर्णबलोत्साहो हतौजाः कलुषेन्द्रियः ॥
विट् श्यावं कठिनं रूक्षमधोवायुर्न वर्त्तते ।
तनु चारुणवर्णञ्च फेनिलञ्चासृगर्शसां ॥
कट्यूरुगुदशूलञ्च दौर्ब्बल्यं यदि चाधिकं ।
तत्रानुबन्धो वातस्य हेतुर्यदि च रूक्षणं ॥
शिथिलं श्वेतपीतञ्च विट् स्निग्धं गुरु शीतलं ।
यद्यर्शसां घनञ्चासृक् तन्तुमत् पाण्डु पिच्छिलं ॥
गुदं सपिच्छं स्तिमितं गुरु स्निग्धञ्च कारणं ।
श्लेष्मानुबन्धो विज्ञेयस्तत्र रक्तार्शसां बुधैः" ॥
गुदे कीला अर्शांसि । पित्ताकृतिसमन्विताः पित्तार्शोलक्षणयुक्ताः । आकारेण च वटप्ररोहादिसदृशाः । दुःखै रोगैः । त्वक्पारुष्याम्बुशीतप्रार्थनादिभिः । कलुषेन्द्रियः व्याकुलसर्वेन्द्रियः ॥ ० ॥ रक्तजस्यापि वातोल्वणस्य लक्षणमाह ॥ तत्र रक्तार्शसि । अनुबन्धः उल्वणत्वं । रूक्षणं रूक्षयतीति रूक्षणं रूक्षं द्रव्यं । पित्तोल्वणस्य तु लक्षणं ।

"रक्तोल्वणा गुदे कीलाः पित्ताकृतिसमन्विताः"।
इत्यादिनैवोक्तं । रक्तपित्तयोः समानलिङ्गत्वात् ॥ ॥*॥ कफोल्वणस्य लक्षणमाह । सपिच्छं पिच्छिलाद्रं । स्तिमितमार्द्रचर्म्मावगुण्ठितमिव ॥*॥ अथ श्लेष्मार्शोलक्षणमाह ।

"श्लेष्मोल्वणा महामूला घना मन्दरुजः सिताः ।
उत्सन्नोपचिताः स्निग्धाः स्तब्धवृत्तगुरुस्थिराः ॥
पिच्छिलास्तिमिताः श्लक्ष्णाः कण्ड्वाढ्याः स्पर्शनप्रियाः
करीरपनसास्थ्याभास्तथा गोस्तनसन्निभाः ॥
वङ्क्षणानाहिनः पायुवस्तिनाभिविकर्षिणः ।
सकासश्वासहृल्लासप्रसेकारुचिपीनसाः ॥
मेहकृच्छ्रशिरोजाड्यशिशिरज्वरकारिणः ।
क्लैब्याग्निमार्दवच्छर्द्दिरामप्रायविकारदाः ॥
वसाभसकफप्राज्यपुरीषाः सप्रवाहिकाः ।
न स्रवन्ति न भिद्यन्ते पाण्डुस्निग्धत्वगादयः" ॥
उत्सन्नाः उन्नताः । उपचिताः स्थूलाः । स्निग्धाः सस्नेहाः । स्थिरा निश्चलाः । पिच्छिलाः कफारब्धत्वात् । स्तिमिताः आर्द्रवस्त्रगुण्ठिता इव । श्लक्ष्णा मसृणचम्मलक्षणाः । करीरो वंशाङ्कुरः । पनसास्थिगोस्तनाः तदाकृतयः । वङ्क्षणानाहिनः वङ्क्षणयोरानाहकारिणः । पाय्वादिष्वाकर्षणवत् पीड़ाकारिणः । कृच्छ्रं मूत्रकृच्छ्रं । शिरोजाड्यं शिरसो भाराक्रान्तत्वमिव । क्लैब्यं स्त्रीष्वनिच्छा । अत्र छर्द्दिशब्दः सान्त आर्षत्वात् । आमप्रायविकारदाः आमबहुला व्याधयोऽतीसारग्रहण्यादयः तान् ददाति ॥ * ॥ अथ द्वन्द्वजार्शोलक्षणमाह ।

"हेतुलक्षणसंसर्गाद्विद्यात् द्वन्द्वोल्वणानि च" ॥*॥
अथ त्रिदोषार्शसः सहजार्शसश्च लक्षणमाह ।
"सर्व्वैः सर्व्वात्मकान्याहुर्लक्षणैः सहजानि च"।
सर्व्वैर्लक्षणैर्वातपित्तश्लेष्मार्शोलक्षणैः प्रागुक्तैः । सर्व्वात्मकानि सान्निपातिकान्यर्शांस्याहुः । तथा तरेव लक्षणैः सहजानि चार्शांस्याहुः ॥ * ॥ तन्मान्तरे सहजार्शोलक्षणं पृथगाह ।

"अर्शांसि सहजातानि दारुणानि भवन्ति हि ।
दुर्द्दर्शनानि पाण्डूनि परुषाण्यरुणानि च ॥
अन्तर्म्मुखानि तैरार्त्तः क्षीणः क्षीणस्वरो भवेत् ।
क्षीणानलः क्षीणरेताः शिरासन्ततविग्रहः ॥
अल्पप्रजः क्रोधशीलः सन्तताध्मानगान्वितः ।
शिरोहृत्कर्णनासासु रोगी क्षुत्क्षेपसेकवान्" ॥ * ॥
अथ सुखसाध्यार्शोलक्षणमाह ।

"वाह्यायान्तु वलौ जातान्येकदोषोल्वणानि च ।
अर्शांसि सुखसाध्यानि न चिरोत्पतितानि च" ॥
वाह्यायां वलौ संवरण्यां । न चिरोत्पतितानि अनतिक्रान्तसंवत्सराणि । एतानि लक्षणानि मिलितानि सुखसाध्यत्वबोधकानि ॥ * ॥ अथ कष्टसाध्यार्शोलक्षणमाह ।

"द्वन्द्वजानि द्वितीयायां वलौ यान्याश्रितानि च ।
कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च" ॥
द्वितीयायां वलौ विसर्जन्यां । परिसंवत्सराणि परिगतः संवत्सरो येषां तानि । अतिक्रान्तसंवत्सराणि इति यावत् । एतानि प्रत्येकं कष्टसाध्यलक्षणानि ॥ * ॥ अथासाध्यार्शोलक्षणमाह ।

"सहजानि त्रिदोषाणि यानि चाभ्यन्तरां वलिं ।
जायन्तेऽर्शांसि संसृज्य तान्यसाध्यानि निर्दिशेत्" ॥
अभ्यन्तरां वलिं प्रवाहिणीं । एतान्यपि प्रत्येकमसाध्यलक्षणानि ।

"शेषत्वादायुषस्तानि चतुष्पादसमन्वये ।
याप्यन्ते दीप्तकायाग्नेः प्रत्याख्येयान्यतोऽन्यथा" ॥
यद्यायुषः शेषो वर्त्तते चिकित्सायाश्चत्वारः पादास्ते यथा । वद्यवचनकारी धनवानुदारो जितेन्द्रियो रोगी । १ । शास्त्रे कर्म्मणि च कुशलो वैद्यः । २ । अनलस आप्तः प्रियः परिचारकः । ३ । नवं रसवीर्य्यादियुक्तमौषधं । ४ । एषां समन्वये संयोगे सति दीप्तकायाग्नेः पुरुषस्य । तानि अर्शांसि । याप्यन्ते चिकित्सया । अतोऽन्यथा प्रत्याख्येयानि न चिकित्स्यानीत्यर्थः ॥ * ॥ अथार्शोऽरिष्टमाह ।

"हस्ते पादे मुखे नाभ्यां गुदे वृषणयोस्तथा ।
शोथो हृत्पार्श्वशूलञ्च यस्यासाध्योऽर्शसो हि सः ॥
असाध्यः सन्निहितमरणो बोद्धव्यः । अर्शसः अर्शोरोगयुक्तः । एतन्मिलितमरिष्टलक्षणं ।

"हृत्पार्श्वशूलं संमोहश्छर्द्दिरङ्गस्य रुग्ज्वरः ।
तृष्णा गुदास्यपाकश्च निहन्युर्गुदजातुरं ॥
गुदस्य यदास्यमोष्ठदेशस्तस्य पाकः । हृत्पार्श्वशूलादिसमस्तं व्यस्तं चारिष्टलक्षणं ॥

"तृष्णारोचकशूलार्त्तमतिप्रस्रुतशोणितं ।
शोथातिसारसंयुक्तमर्शांसि क्षपयन्ति हि" ॥*॥
अथ मेढ्रादिजार्शोलक्षणमाह ।

"मेढ्रादिष्वपि वक्ष्यन्ते यथास्वं नाभिजानि च ।
गण्डूपदास्यरूपाणि पिच्छिलानि मृदूनि च" ॥
यथास्वं यथात्मीयलक्षणं । न चात्रोक्तनिदानपूर्व्वरूपसंप्राप्तिलक्षणयुक्तं । तत्र तत्रार्शःपदं तु मांसाङ्कुरसाम्यात् । गण्डूपदः किञ्चुलकः ॥ * ॥ अत्र मांसाङ्कुरसाम्यादत्राधिकारे चर्म्मकीलस्य संप्राप्तिपूर्ब्बकं लक्षणमाह ।

"व्यानो गृहीत्वा श्लेष्माणं करोत्यर्शस्त्वचो वहिः ।
कीलोपमं स्थिरखरञ्चर्मकीलन्तु तद्विदुः" ॥
चर्म्मा इति लोके । खरं कर्कशं ॥ * ॥ तस्यैव वातादिभेदेन लक्षणमाह ।

"वातेन तोदपारुष्यं पित्तादसितरक्तता ।
श्लेष्मणा स्निग्धता तस्य ग्रथितत्वं सवर्णता" ॥
सवर्णता शरीरसमानवर्णता ॥ * ॥ अथ सामान्यतः अर्शसश्चिकित्सा ।

"यद्वायोरानुलोम्याय यदग्निबलवृद्धये ।
अन्नपानौषधं सर्वं तत्सेव्यं नित्यमर्शसैः" ॥
अर्शसैः अर्शोरोगयुक्तैः ।

"शालियष्टिकगोधूमयवान्नानि घृतैः सह ।
अजाक्षीरेण वा निम्बपटोलानां रसेन वा ॥
कन्दैर्व्वार्त्ताकुमूलोत्थै रसैर्मांसरसेन वा ।
जीवन्त्युपोदिकाशाकैस्तण्डुलीयकवास्तुकैः" ॥१॥
कन्दोऽत्र सूरणः । अत्र मूलं मूलकं ।

"अन्यैश्च सृष्टविण्मूत्रमरुद्भिर्वह्निदीपनैः ।
अर्शांसि भिन्नवर्चांसि हन्याद्वातातिसारवत् ॥
सतक्रं लवणं दद्याद्वातवर्चोऽनुलोमनं ।
न प्ररोहन्ति गदजाः पुनस्तक्रसमाहताः ॥
तक्राभ्यासोऽर्शसैः कार्य्यो बलवर्णाग्निवृद्धये ।
स्रोतःसु तक्रशुद्धेषु सम्यक् चलति यद्रसः ॥
तेन पुष्टिस्तथा तुष्टिर्बलं वर्णश्च जायते ।
वातश्लेष्मविकाराणां शतञ्च विनिवर्त्तयेत् ॥
मृल्लिप्तं शौरणं कन्दं पक्त्वाग्नौ पुटपाकवत् ।
अद्यात् सतैललवणं दुर्नामविनिवृत्तये ॥ २ ॥
चिरिविल्वाग्निसिन्धूत्थनागरेन्द्रयवारलून् ।
तक्रेण पिबतोऽर्शांसि निपतन्त्यसृजा सह" ॥
चिरिविल्वः करञ्जः तस्य फलस्यात्र मज्जा ग्राह्या । अरलुः श्योनाकः । करञ्जादिचूर्णं ॥ ३ ॥

"लेपं रजनिचूर्णेन सुधादुग्धयुतेन च ।
अर्शोरोगनिवृत्त्यर्थं कारयेत्तच्चिकित्सकः ॥ ४ ॥
पिप्पलीसैन्धवं कुष्ठं शिरीषस्य फलं तथा ।
स्नुग्दुग्धमर्कदुग्धं वा लेपोऽयं गुदजान् हरेत् ॥५॥
हरिद्राजालिनीचूर्णं कटुतैलसमन्वितं ।
एष लेपो वरः प्रोक्तो ह्यर्शसामन्तकारकः" ॥
जालिनी कटुतुरइ इति लोके ॥ ६ ॥

"असितानां तिलानान्तु पलं शीतजलेन तु ।
खादतोऽर्शांसि शाम्यन्ति दृढ़ा दन्ता भवन्ति हि॥७॥
शस्त्रैर्व्वाथ जलौकोभिः प्रोच्छूनकठिनार्शसः ।
शोणितं सञ्चितं दृष्ट्वा हरेत् प्राज्ञः पुनः पुनः ॥ ८ ॥
कासीसं सैन्धवं कृष्णा शुण्ठी कुष्ठञ्च लाङ्गली ।
शिलाभिदश्वमारश्च दन्तीजन्तुघ्नचित्रकं ॥
तालकं कुनटी स्वर्णक्षीरी चैतैः पचेद्भिषक् ।
तैलं स्नुह्यर्कपयसा गवां मूत्रे चतुर्गुणे ॥
एतदभ्यङ्गतोऽर्शांसि क्षारेणेव पतन्ति हि ।
क्षारकर्म्मकरं चैतन्न च संदूषयेद्वलिं" ॥
कासीसं कौसीस इति लोके । लाङ्गली करहारी

इति लोके। शिलाभित् पाषाणभेदः। अश्ममारः कनैल इति लोके। स्वर्णक्षीरी चोक इति लोके। कृष्णलासीसाद्यं तैलं॥ ९॥

"शुण्ठीकणामरिचनागदलत्वगेलं
चूर्णीकृतं क्रमविवर्द्धितमूर्द्धमन्त्यात्।
खादेदिदं समसितं गुदजाग्निमान्द्य-
गुल्मारुचिश्वसनकण्ठहृदामयेषु"॥

तद्यथा। एलाच सूक्ष्मा ग्राह्या। यत आह मदनपालः।

"एला सूक्ष्मा कफश्वासकासार्शोमूत्रकृच्छ्रहृत्"।

इत्यादि। तस्या वीजभागः १ तजभागः २ दलं पत्रं। यत आह निघण्टौ धन्वन्तरिः।

"तमालपत्रकं पत्रं स्यात् पलाशं दलाह्वयम्"।

इति तस्य भागः ३। नागो नागकेशरं। यत आह निघण्टौ धन्वन्तरिः।

"नागपुष्पं मतं नागं केशरं नागकेशरम्"॥

इत्यादि। तस्य भागः ४ मरीचभागः ५ पिपरिभागः ६ शुण्ठीभागः ७ चिनिभागः २८। समशर्करचूर्णं॥ १०॥

"त्रिपलं शृङ्गवेरस्य चतुष्कं मरिचस्य च।
पिप्पल्याः कुडवार्द्धञ्च चव्यायाः पलमेव च॥
तालीशपत्रस्य पलं पलार्द्धं केशरस्य च।
द्विपलं पिप्पलीमूलमर्द्धकर्षञ्च पत्रकात्॥
सूक्ष्मैलाकर्षमेकन्तु कर्षञ्च त्वङ्मृणालयोः।
गुड़ात् पलानि त्रिंशच्च चूर्णमेकत्र कारयेत्॥
अक्षप्रमाणगुटिका प्राणदा चेति सा स्मृता।
पूर्व्वं भक्ष्यञ्च पश्चाच्च भोजनस्य यथाबलं॥
मद्यं मांसरसं यूषं क्षारतोयं पिबेदनु।
हन्यादर्शांसि सर्व्वाणि सहजान्यस्रजानि च॥
वातपित्तकफोत्थानि सन्निपातोद्भवानि च।
पानात्यये मूत्रकृच्छ्रे उरोरोगे गलग्रहे॥
विषमज्वरपित्ते च पाण्डुरोगे तथैव च।
क्रिमिहृद्रोगिणाञ्चैव गुल्मशूलार्त्तिनां तथा॥
छर्द्यतीसाररोगाणां कामलाहिक्किनां तथा।
शुण्ठीस्थानेऽभया देया हृद्ग्रहे पित्तजे गदे॥
प्राणदेयं सितां दत्त्वा गुड़मानाच्चतुर्गुणां।
अस्रपित्ताग्निमान्द्यादौ प्रयोज्या गुदजातुरे॥
अनुपाने प्रयोक्तव्यं व्याधौ श्लेष्मभवे पलं।
पलद्वयं त्वनिलजे पित्तजे तु पलत्रयं॥

फलाम्लधान्याम्लरसाश्च युक्ता
मद्यं मतङ्गोगिणि चानुपानं।
इष्टो रसक्षारहिमाम्बु पित्ते
उष्णाम्बुयूषौ कफजे विदध्यात्॥

गण्डूषमात्रमादेयं मृदौ क्रूरे च पञ्च वा।
अनुपानं प्रयोक्तव्यं देशकालमवेक्ष्य वा"॥

इति प्राणदा गुटिका॥ ११॥

"त्रिकत्रयं वचा हिङ्गु पाठाक्षारौ निशाद्वयं।
चव्यतिक्ता कलिङ्गानि शताह्वा लवणानि च॥
ग्रन्थिविल्वाजमोदा च गणोऽष्टाविंशतिर्मतः।
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत्॥
चूर्णं विड़ालपदकं पिबेदुष्णेन वारिणा।
एरण्डतैलयुक्तं वा लिह्याच्चूर्णमिदं नरः॥
हन्यादर्शांसि सर्व्वाणि श्वासशोथभगन्दरान्।
हृच्छूलं पार्श्वशूलञ्च वातगुल्मं तथोदरं॥
हिक्कां कासं प्रमेहांश्च पाण्डुरोगं सकामलं।
आमवातमुदावर्त्तमन्त्रवृद्धिं गुदक्रिमीन्॥
अन्ये च ग्रहणीदोषा भिषग्भिर्ये प्रकीर्त्तिताः।
विजयो नाम चूर्णोऽयं तान् सर्व्वानाशु नाशयेत्॥
महाज्वरोपसृष्टानां भूतोपहतचेतसां।
अप्रजानाञ्च नारीणां हितमेतद्धि भेषजं॥
त्रिकत्रयं त्रिफलात्रिकटुत्रिसुगन्धीनि।
क्षारौ स्वर्ज्जिका यवक्षारश्च। लवणानि पञ्च।
ग्रन्थिः पिप्पलीमूलं। विड़ालपदकं कर्षं। विजयचूर्णं॥ १२॥

"मरिचमहौषधचित्रकशूरण-
भागा यथोत्तरं द्विगुणाः।
सर्व्वसमो गुड़भागः
सेव्योऽयं मोदकः प्रसिद्धफलः॥
ज्वलनं ज्वलयति जाठर-
मुन्मूलयति शूलगुल्मगदान्।
निःशेषयति श्लीपद-
मर्शांसि विनाशयत्याशु"॥

तद्यथा। मरिचभागः १ शुण्ठीभागः २ चिताभागः ४ शूरणभागः ८ गुड़भागः १५। लघुशूरणमोदकः॥१३॥

"षोड़शशूरणतोऽंशा वह्नेरष्टौ महौषधस्याथ।
अर्द्धेन भागयुक्तिर्मरिचस्य ततोऽपि चार्द्धेन॥
त्रिफला कणा समूला तालीशारुष्करक्रिमिघ्नानां।
भागा महौषधसमा दहनांशतालमूली च॥
भागः शूरणतुल्यो दातव्यो वृद्धदारकस्यापि।
भृङ्गैले मरिचांशे सर्व्वाण्येकत्र कारयेत् चूर्णं॥
द्विगुणेन गुड़ेन युतः सेव्योऽयं मोदकः प्रकामघनैः।
गुरुवृष्यभोज्यनिरतैरितरेषूपद्रवं कुर्य्यात्॥
भस्मकमनेन जनितं पूर्व्वमगस्त्यस्य योगराजेन।
भीमस्य मारुतेरपि महाशनौ येन तौ जातौ॥
अग्निबलमात्रहेतुर्न केवलं शूरणो महावीर्य्यः।
हन्ता शस्त्रक्षाराग्नीर्विनाप्यर्शसामेषः॥
श्वयथुश्लीपदगदहृद्ग्रहणीश्च वापानिलोद्भूतां।
नाशयति वलीपलितं मेधां कुरुते जरां हरते॥
हिक्कां कासं श्वासं सराजरोगान् प्रमेहांश्च।
प्लीहानञ्च तथोग्रं हन्यादाशु रसायनं पुंसां"॥

एषां भागो यथा। शूरणभागः १६ चिताभागः ८ सोठिभागः ४ मरिचभागः २। हररे वहेरा अवरा। पीपर पिपरामूल। तालीशं तालीशपत्रं। अरुष्करं भल्लातकं। तदसत्त्वे रक्तचन्दनं। विड़ङ्गं प्रत्येकं भागः ४ तालमूली मूषली तस्याः भागः ८ विधाराभागः १६ तजभागः २ एलाइचकोटीवीजभागः २ गुड़भागः ४। ७२। बृहच्छूरणो मोदकः॥ १४॥

"त्रिवृत्तेजोवती दन्ती श्वदंष्ट्रा चित्रकं शटी।
गवाक्षीमुस्तविश्वाह्वविड़ङ्गानि हरीतकी॥
पलोन्मितानि चैतानि पलान्यष्टावरुष्करात्।
वृद्धदारात् पलान्यष्टौ शूरणस्य तु षोड़श॥
जलद्रोणद्वये क्वाथ्यं चतुर्भागावशेषितं।



पूतं तु तं रसं भूयः क्वाथेभ्यः त्रिगुणं गुड़ं॥
लौहं पचेत् पुनस्तावद्यावद्दर्व्वीप्रलेपनं।
अवतार्य्य ततः पश्चात् चूर्णानीमानि दापयेत्॥
त्रिवृत्तेजोवतीकन्दचित्रकान् द्विपलांशिकान्।
एलात्वङ्मरिचं चापि नागाह्वं चापि षट्पलं॥
द्वात्रिंशच्च पलान्यत्र चूर्णयित्वा निधापयेत्।
ततो मात्रां प्रयुञ्जीत जीर्णे क्षीररसाशिनः"॥

तेजोवती तेजवती तेजवल्कल इति च।
कन्दः शूरणः।

"हन्यादर्शांसि सर्व्वाणि तथा सर्व्वोदराण्यपि।
गुल्मानपि प्रमेहांश्च पाण्डुरोगं हलीमकं॥
दीपयेदनलं मन्दं यक्ष्माणं चापकर्षति।
आढ्यवाते प्रतिश्याये पीनसेऽयं हितो मतः॥
भवन्त्यनेन पुरुषाः शतं वर्षाण्यनामयाः।
दीर्घायुषः प्रजननाः वलीपलितवर्ज्जिताः॥
गुड़ः श्रीवाहुशालोऽयं रसायनवरो मतः।
दुर्नामान्तकरो ह्येष दृष्टो वारसहस्रशः॥
यावद्दर्व्वीप्रलेपः स्याद्यावद्वा तण्डुली भवेत्।
तोयपूर्णे यदा पात्रे क्षिप्तो न स्रवते गुड़ः॥
क्षिप्तस्तु निश्चलस्तिष्ठेत् पतितस्तु न शीर्य्यति।
एष पाकः समस्तानां गुड़ानां परिकीर्त्तितः॥
सार्द्धं पलं पलञ्चार्द्धं भक्षयेद्गुड़खण्डयोः।
श्रेष्ठा तु मध्यमा हीना मात्रोक्ता मुनिभिस्त्रिधा"।

वाहुशालो गुड़ः॥ १५॥

"तिला भल्लातकं पथ्या गुड़श्चेति समांशकं।
दुर्नामश्वासकासघ्नं प्लीहपाण्डुज्वरापहं॥
पित्तश्लेष्मप्रशमनी कच्छुदद्रुरुजापहा।
गुदजान्नाशयत्याशु भक्षिता सगुड़ाभया"॥१६॥*॥

"प्रणम्य शङ्करं रुद्रं दण्डपाणिं महेश्वरं।
जीवितारोगमन्विच्छन्नारदोऽपृच्छदीश्वरं॥
सुखोपायेन हे नाथ शस्त्रक्षाराग्निभिर्व्विना।
चिकित्सामर्शसां ब्रूयां कारुण्याद्वक्तुमर्हसि॥
नारदस्य वचः श्रुत्वा नराणां हितकाम्यया।
अर्शसां नाशनं श्रेष्ठं भैषज्यं शङ्करोऽवदत्॥
पाषाणवच्चादिलौहानामादायान्यतमं शुभं।
कृत्वा निर्म्मलमादौ तु कुनट्या माक्षिकेण च॥
पत्तूरमूलकल्केन लिम्पेद्रसयुतेन च"।

कुनटी मनःशिला। माक्षिकं सुवर्णमाक्षिकं। पत्तूरं वकम इति लोके। शालिञ्चा इति रसेन्द्रचिन्तामणौ। रसः पारदः।

"वह्नौ निःक्षिप्य विधिवत् साराङ्गारेण निर्धमेत्।
ज्वाला च तस्य रोद्धव्या त्रिफलाया रसेन वा"॥

सारः काष्ठसारः। शालाङ्गारेण इति रसेन्द्रचिन्तामणौ पाठः।

"ततो विध्माय गलितं शङ्कुनोर्द्धं समुत्क्षिपेत्।
त्रिफलाया रसे पूते तदाक्रम्य तु निर्व्वपेत्॥
न सम्यग्गालितं यत्तु तेनैव विधिना पुनः।
ध्मातं निर्व्वापयेत्तस्मिन् लौहं तत् त्रिफलारसे॥
यल्लौहं न मृतं तत्र पाच्यं भूयोऽपि पूर्व्ववत्।
मारणाच्च मृतं यच्च तच्चलक्ष्णमलोहवत्॥
ततः संशोध्य विधिवत् चूर्णयेल्लौहभाजने।
लौहेनैव तथा वत्स दृषदा सूक्ष्मचूर्णितं॥

कृत्वा लोहमये पात्रे मार्द्दे वा विमलेऽस्मके ।
रसैः पङ्कोपमं कृत्वा तं पचेद्भूमयाग्निना ॥
पुटानि क्रमशो दद्यात् पृथगेषां विधानतः ।
त्रिफलायाश्च भृङ्गायाः केशराजस्य बुद्धिमान् ॥
माणकन्दकभल्लातवह्नीनां सूरणस्य च ।
हस्तिकर्णपलाशस्य कुलिशस्य तथैव च" ॥
भृङ्ग भङ्गरिया । केशराजः भृङ्गराज इति हिः ।
कुलिशं कुष्टीक्षीरं ।
"पुटे पुटे चूर्णयित्वा लोहात् षोड़शिकं पलं ।
तन्मानं त्रिफलायाश्च पलेनाधिकमाहरेत् ॥
अष्टभागावशिष्टे तु रसे तस्याः पचेद्बुधः ।
अष्टौ पलानि दत्त्वा च सर्पिषो लोहभाजने ॥
ताम्रे वा लोहदर्व्या तु चालयेद्विधिपूर्व्वकं ।
ततः पाकविधानज्ञः स्वच्छे चोर्द्धे च सर्पिषि ॥
मृदुमध्यादिभेदेन गृह्णीयात् पाकमाज्यतः ।
आरभेत विधानज्ञः कृतकौतुकमङ्गलः ॥
भामरं घृतसंयुक्तं विलिह्यादक्षिकक्रमात् ।
वर्द्धमानानुपानञ्च गव्यक्षीरेण संयुतं ॥
गव्याभावे त्वजायाश्च स्निग्धरूष्यादिभोजनं ।
सद्योवह्निकरश्चैव भस्मकञ्च नियच्छति ॥
हन्ति वातं तथा पित्तं कुष्ठानि विविधं ज्वरं ।
गुल्माग्निपाण्डुरोगांश्च निद्रालस्यमरोचकं ॥
शूलञ्च परिणामञ्च प्रमेहमववाहुकं ।
श्वयथुं रुधिरस्रावं दुर्नामानं विशेषतः ॥
बलवर्णकरश्चैव कान्तिदं स्वरवर्द्धनं ।
शरीरलाघवकरमारोग्यं पुष्टिवर्द्धनं ॥
आयुष्यं श्रीकरञ्चैव वयस्तेजस्करं शुभं ।
स्त्रीणाम्पुत्रजननं वलीपलितनाशनं ॥
दुर्नामारिरियं नाम्ना दृष्टो वारसहस्रशः ।
अनेनार्शांसि दह्यन्ते यथा तूलञ्च वह्निना ॥
सौकुमार्य्याल्पकायत्वात् मद्यसेवी यथा नरः ।
जीर्णमद्यादियुक्तादिभोजनैः सह दापयेत्" ॥
रसेन्द्रचिन्तामणौ यथास्थाने यदा तृतीयचरण-
स्थाने जीर्णे मद्ये प्रयोक्तव्यमिति पाठः ।
"लावतित्तिरवर्त्तीरमयूरशशकादयः ।
चटकः कलविङ्कश्च वर्त्तका हरितालकः ॥
श्येनकश्च कपोतश्च वनविष्करकादयः ।
पारावतमृगादीनां मांसं जाङ्गलकं शुभं ॥
वर्त्तीरः वगेरा इति लोके । चटको वन्यचटकः ।
कलविङ्को गृहचटकः । वर्त्तका वटई इति लोके ।
हरितालकः हरिताल इति लोके । विष्किरा-
वर्त्तकादयः ।
"मद्गुरो रोहितः श्रेष्ठः शकुलश्च विशेषतः ।
मत्स्यराजा इमे प्रोक्ता हितमर्शाय देहिने ॥
वन्ताकस्य फलं शस्तं पटोलं वृहतीफलं ।
प्रलम्बाभीरवेत्राग्रं तालकस्तत्कुलीयकं" ॥
प्रलम्बा लम्बालावुः । अभीरुः शतावर्य्याः पत्रशाकं ।
तालकः देवदाली । तथा च निघण्टौ धन्वन्तरिः ।
"जीमूतको देवताड़ो वृत्तकोशो गरा गरी ।
प्रोक्ताखुविषहृद्देवी देवदाली च ताड़कः ॥
देवदाली रसे तिक्ता कफार्शःशोथपाण्डुताः"
नाशयेदित्यादि ॥

"वास्तूकं धान्यशाकञ्च केमुकं चक्रवर्त्तनं" ।
चक्रवर्त्तनं चकवतशाकं ।
"नारिकेलञ्च खर्ज्जूरं दाड़िमं लवलीफलं ।
शृङ्गाटकञ्च पक्वाम्रं द्राक्षा तालफलानि च ।
जातीकोषं लवङ्गञ्च पूगं ताम्बूलपत्रकं ॥
हितान्येतानि वस्तूनि लोहमेतत् समश्नतां ।
गाम्भीयमाकुचं कोलं कर्कन्धुवदराणि च ।
जम्बीरं वीजपूरञ्च तिन्तिड़ीं करमर्द्दकं" ॥
कोलं क्षुद्रवदरं । कर्कन्धुवदराणि महान्ति ।
"आनूपानि च मांसानि शकरं पुण्डुकानपि ।
हंससारसदात्यूहशङ्कुकङ्कबलाकिकाः ॥
माणकन्दकरीराणि कतकञ्च कलिङ्गकं ।
कुष्माण्डकञ्च कर्कोटिं केमुकञ्च विशेषतः ॥
कटुकं कालशाकञ्च कशेरुं कर्कटीं तथा ।
ककारादीनि सर्व्वाणि द्विदलानि च वर्जयेत् ॥
शङ्करेण समाख्यातस्तूर्णराजोऽनुकम्पया ।
जगतामुपकाराय दुर्नामारिरयं ध्रुवं ॥
स्थानादपैति मेरुश्च पृथ्वी पर्य्येति वायुना ।
पतन्ति चन्द्रताराश्च मिथ्या चेदहमब्रुवं ॥
ब्रह्मघ्नाश्च कृतघ्नाश्च क्रूरा येऽसत्यवादिनः ।
वर्ज्जनीयाः स्वधर्म्मेण भिषजा गुरुनिन्दकाः ॥
मुनिरसपिष्टविड़ङ्गं मुनिरसलीढ़ं चिरस्थितं घर्मे ।
द्रावयति लोहदोषान् वह्निर्नवनीतपिण्डमिव" ॥
मुनिरगस्तिः ।
"काले मलप्रवृत्तिर्लाघवमुदरे विशुद्धिरुद्गारे ।
अङ्गेषु नावसादो मनःप्रसादोऽस्य परिपाके ॥
कृमिरिपुचूर्णं लीढ़ं सहितं स्वरसेन वङ्गसेनस्य ।
क्षपयत्यचिरात्नियतं लोहाजीर्णोद्भवं शूलं" ॥
वङ्गसेनस्य अगस्तेः ।
"जीर्णे लोहे पतति चूर्णं भुञ्जीत सिद्धसाराख्यं ।
लोहव्यापन्नश्यति विवर्द्धते जाठरो वह्निः" ॥
तद्यथा,—
"पथ्यासैन्धवशुण्ठीमागधिकानां पृथक् समो भागः ।
त्रिवृतो भागौ निम्बू भाव्यं तत् सिद्धसाराख्यं" ॥
"भवेद्यद्यतिसारस्तु दुग्धं पीत्वा रुजं जयेत् ।
गुञ्जाद्वादशकादूर्द्धं वृद्धिरस्य भयप्रदा" ॥
शङ्करप्रणीतं लोहं । इति सामान्यक्रिया ॥१७॥*॥
अथ रक्तार्शसां चिकित्सा ।
"रक्तार्शसामुपेक्षेत रक्तमादौ स्रवद्भिषक् ।
दुष्टास्रे निगृहीते स्युः शूलानाहास्रगामयाः ॥
चन्दनकिराततिक्तकधन्वयवासाः सनागराः क-
थिताः । रक्तार्शसां प्रशमना दार्व्वीत्वगुशीरनिम्बा
वा" ॥ चन्दनमत्र रक्तचन्दनं । चन्दनादिक्वाथः ॥१॥
नवनीततिलाभ्यासात् २ । केसरनवनीतशर्करा-
भ्यासात् ३ । दधिसरमथिताभ्यासात् ४ । गुदजाः
शाम्यन्ति रक्तावहाः ॥
"दध्नस्तूपरि यो भागो घनः स्नेहयुतः सरः" ।
मथितं सररहितं निर्ज्जलं वस्त्रपूतं दधि ।
सपद्मकेसरं क्षौद्रं नवनीतं लवं लिहन् ।
सिताकेशरसंयुक्तं रक्तार्शसः सुखीभवेत् ॥ ५ ॥
पयसा शृतेन यूषैः सतीनमुद्गाढ़कीमसूराणां ।
ओदनमद्यादर्शैर्मधुरैरोषधसुगन्धैश्च ॥ ६ ॥

समङ्गोत्पलमोचाह्वतिरीटतिलचन्दनैः ।
सिद्धं छागीपयो दद्याद् गुदजे शोणितात्मके" ।
समङ्गा लज्जालुः । मोचाह्वो मोचरसः । तिरीटो
लोध्रः । चन्दनमत्र रक्तं । समङ्गादिदुग्धं ॥ ७ ॥
"भावितं रजनीचूर्णं स्नुहीक्षीरैः पुनः पुनः ।
बन्धनात् सुदृढ़ं सूत्रं छिनत्त्यर्शोभगन्दरं" ॥
क्षारसूत्रं ॥ ८ ॥
"नासानाभिसमुत्थेषु तथा मेढ्रादिजेष्वपि ।
क्रियामर्शःसु कुर्व्वीत तत्र तत्र यथोदितां ॥
चर्म्मकीलन्तु संछिद्य दहेत् क्षारेण चाग्निना ।
वेगावरोधस्त्रीपृष्ठयानान्युत्कटकाशनं ॥
यथास्वं दोषलञ्चान्नमर्शसः परिवर्ज्जयेत्" ।
इत्यर्शोऽधिकारः ॥ * ॥ इति भावप्रकाशः ॥
अर्शसः, त्रि, (अर्शस् + अस्त्यर्थे अच् ।) अर्शोरोग-
युक्तः । इत्यमरः ॥
("हीनक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसम्" ।
इति मनुः ।
"अन्नपानौषधं सर्व्वं तत्सेव्यं नित्यमर्शसाम् ।
हस्ते पादे मुखे नाभ्यां गुदे वृषणयोस्तथा ।
शोथो हृत्पार्श्वशूलञ्च यस्यासाध्योऽर्शसो हि सः" ॥
इति भावप्रकाशः ।)
अर्शसानः, पुं, ( ऋ + असानच्, सुट् । ) अग्निः ।
इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ ("अर्श-
सानाय शत्रुणां हिंसित्रे" । इति वेदभाष्यम् ।)
अर्शो, [ न् ] त्रि, (अर्शांसस्त्यस्य, अर्श + इनि ।)
अर्शोरोगयुतः । इति शब्दरत्नावली ॥
अर्शोघ्नः, पुं, ( अर्शो हन्ति, अर्श + हन् + ट ।)
ओलः । तत्पर्य्यायः । सूरणः २ कन्दः ३ । इत्य-
मरः ॥ सूरणः ४ । इति तट्टीका ॥ ओल इति
भाषा । (अर्शोरोगविनाशकः ।
"अर्शोघ्नं कारभं मूत्रं मानुषन्तु विषापहम्" ।
इति सुश्रुते ।)
अर्शोघ्नी, स्त्री, (अर्शस् + हन् + ट + ङीप् ।) ताल-
मूली । इति मेदिनी ॥
अर्शोहितः, पुं, (अर्शसि हितः, सेवनेन तन्नाशक-
त्वात् ।) भल्लातकः । इति त्रिकाण्डशेषः । भेला
इति भाषा ।
अर्ह योग्यत्वे । ( भ्वादिं-परं-सकं-सेट् । ) पूजने ।
इति कविकल्पद्रुमः ॥ अर्हति विप्रो वेदं पठितुं ।
सकर्म्मकोऽपि ।
"यज्ञदानतपांस्यस्य कलां नार्हन्ति षोड़शीं" ।
इति दुर्गादासः ॥
("अध्यापयन् गुरुसुतो गुरुवन्मानमर्हति" ।
इति मनुः ।
"त्रिभाग्यहान्यर्हसि सोढुमर्हन्" ।
इति रघुवंशे ।
"गुरोर्गुरौ सन्निहिते गुरुवन्मानमर्हति" ।
इति मनुः ।)
अर्ह क पूजने । ( चुरां-उभं-सकं-सेट् । ) इति
कविकल्पद्रुमः ॥ क अर्हयति । इति दुर्गादासः ।
("राजार्हितं मधुपर्कपाणिः" । इति भट्टि-
काव्ये ।)

अर्हः, पुं, (अर्ह + अच् ।) इन्द्रः । इति शब्दरत्नावली ॥

अर्हः, त्रि, (अर्ह + अच् ।) योग्यः । उपयुक्तः । यथा,—
"तस्मान्नार्हा वयं हन्तुं धार्त्तराष्ट्रान् सबान्धवान्" ।
इति श्रीभगवद्गीता ॥

अर्हणा, स्त्री, (अर्ह + युच् + टाप् ।) पूजा । इत्यमरः ॥
("अर्हणामर्हते चक्रुर्मुनयो नयचक्षुषे" ।
इति रघुवंशे ।)

अर्हन्, [त्] पुं, (अर्हः प्रशंसायां शतृ ।) क्षपणकः । बुद्धः । इति मेदिनी ॥ शेषस्य पर्य्यायः । जिनः २ पारगतः ३ त्रिकालवित् ४ क्षीणाष्टकर्म्मा ५ परमेष्ठी ६ अधीश्वरः ७ शम्भुः ८ स्वयम्भूः ९ भगवान् १० जगत्प्रभुः ११ तीर्थङ्करः १२ तीर्थकरः १३ जिनेश्वरः १४ स्याद्वादी १५ अभयदः १६ सार्व्वः १७ सर्व्वज्ञः १८ सर्व्वदर्शी १९ केवली २० देवाधिदेवः २१ बोधदः २२ पुरुषोत्तमः २३ वीतरागाप्तः २४ । इति हेमचन्द्रः ॥

अर्हन्, (त्) त्रि, (अर्ह + शतृ ।) पूज्यः । मान्यः । इति मेदिनी ॥ स्तुतः । इति शब्दरत्नावली ॥
("यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते" ।
इति कुमारसम्भवे ।
"त्वमर्हतामग्रसरः स्मृतोऽसि नः" ।
इति शाकुन्तले ।)

अर्हन्तः, पुं, (अर्ह + बाहुलकात् झच् ।) बुद्धः । क्षपणकः । मान्ये त्रि । इति जटाधरः ॥ शिवः । इति शब्दरत्नावली ॥

अर्हितः, त्रि, (अर्ह + क्त ।) पूजितः । इत्यमरः ॥

अल ञ वारणपर्य्याप्तिभूषासु (भ्वादिं-उभं-सकं ।) इति कविकल्पद्रुमः ॥ ञ अलति अलते पापं गङ्गा निवारयतीत्यर्थः । पर्य्याप्तिः सामर्थ्यं ।
"पर्य्याप्तन्तु यथेष्टं स्यात् छन्ने शक्ते निवारणे" ।
इति विश्वप्रकाशात् । अलति घोटको धावितुं समर्थः स्यादित्यर्थः । अलति हारो जनं भूषयति इत्यर्थः । इति दुर्गादासः ॥

अलं, क्ली, (अल + अच् ।) वृश्चिकपुच्छकण्टकः । इति हेमचन्द्रः । विछार ऊल इति भाषा । हरितालं । इति रत्नमाला अमरटीका च ॥

अलं, व्य, भूषणं । पर्य्याप्तिः । वारणं । निरर्थकं । शक्तिः । इति मेदिनी ॥ अत्यर्थं । यथा,—
"सर्व्वं मे विमलं वदामलमलं गोलं विजानासि चेत्" । इति लीलावती ॥

अलकः, पुं, क्ली, (अलति भूषयति मुखं, अल + वुन् ।) भङ्गियुतः केशः । कर्पूरादेः क्षोदचूर्णं तस्य कुङ्कुमाद्यूर्णकुन्तलाः तद्धि तत्र न्यस्यते इत्यन्ये । अलति भूषयति मुखं इत्यलकं । इति भरतः ॥ कुटिलकुन्तलः । इति सुभूतिः । इति सारसुन्दरी । तत्पर्य्यायः । चूर्णकुन्तलः २ । इत्यमरः ।
("कर्णेषु योग्यं नवकर्णिकारं
स्तनेषु हारा अलकेष्वशोकः" ।
इति ऋतुसंहारे ।
"हस्ते लीलाकमलमलके बालकुन्दानुविद्धं" ।
इति मेघदूते ।)

अलकः, पुं, (अल + वुन् ।) अलर्कः । क्षिप्तकुक्कुरः । इत्यमरटीकायां रायमुकुटः ॥

अलकनन्दा, स्त्री, (अलति पर्य्याप्नोति, अल + वुन्, अलका, नन्दयति इति अच् नन्दा, अलका चासौ नन्दा चेति इति इति कर्म्मधारयः ।) कुमारी । इति त्रिकाण्डशेषः ॥ भारतवर्षीयगङ्गा । इति शब्दमाला ॥ "तथैवालकनन्दा दक्षिणेन तु ब्रह्मसदनाद्बहूनि गिरिकूटान्यतिक्रम्य निषध-हेमकूट-हिमकूटान्यतिरभसतररंहसा लुठन्ती भारतमपि वर्षं दक्षिणस्यां दिशि लवणजलधिमभिप्रविशति" । इति श्रीभागवतं ॥
(हिमालयादुत्पन्ना श्रीनगरस्यादूरे गङ्गया सह मिलिता स्वनामख्याता नदी । गङ्गैव देवलोके अलकनन्देत्युच्यते । इति महाभारते । यदुक्तं,—
"देवेषु गङ्गा गन्धर्व्व ! प्राप्नोत्यलकनन्दताम् ।
तथैवालकनन्दापि दक्षिणेनेति भारतं ।
प्रयाति सागरं भूत्वा सप्तभेदा महामुने" ॥
इति भागवतपुराणे ।)

अलकप्रभा, स्त्री, (अलका पर्य्याप्ता प्रभा यस्याः सा ।) कुवेरपुरी । इति शब्दरत्नावली ॥

अलकप्रियः, पुं, (अलकान् प्रीणाति अलक + प्री + क ।) वृक्षविशेषः । इति जटाधरः ॥

अलका, स्त्री, (अल + वुन् + टाप् ।) कुवेरनगरी । इत्यमरः ॥ अष्टवर्षाविधिदशवर्षपर्य्यन्तवयस्का कन्या । इति शब्दरत्नावली ॥

अलकाधिपः, पुं, (अलकाया अधिपः, षष्ठीतत्पुरुषः ।) कुवेरः । इति जटाधरः ॥

अलकाधिपतिः, पुं, (अलकाया अधिपतिः, षष्ठीतत्पुरुषः ।) कुवेरः । इति शब्दरत्नावली ॥

अलक्तः, पुं, (न रक्तोऽस्मात्, रस्य लत्वं ।) वृक्षनिर्य्यासविशेषः । लाहा । जौ इति च भाषा । तत्पर्य्यायः । राक्षा २ लाक्षा ३ जतु ४ यावः ५ द्रुमामयः ६ । इत्यमरः ॥ रक्ता ७ । इति भरतः । अरक्तः ८ । इत्यमरटीकायां भरतः ॥ जतुकं ९ यावकः १० अलक्तकः ११ रक्तः १२ । इति शब्दरत्नावली ॥ पलङ्कषा १३ क्रमिः १४ वरवर्णिनी १५ । इति जटाधरः ॥ तस्य गुणादिः ।
"लाक्षा पलङ्कषालक्ती यावो वृक्षामयो जतु ।
लाक्षा वर्ण्या हिमा बल्या स्निग्धा च तुवरा लघुः ॥
अनुष्णा कफपित्तास्रहिक्काकासज्वरप्रणुत् ।
व्रणोरःक्षतवीसर्पक्रमिकुष्ठगदापहा ॥
अलक्तको गुणैस्तद्वद्विशेषाद्व्यङ्गनाशनः" ।
इति भावप्रकाशः ॥*॥ लाक्षारसः । आलता इति भाषा । तत्पर्य्यायः । अलक्तकः २ जतुरसः ३ रागः ४ निर्म्मलनः ५ जननी ६ जनकरी ७ सम्पद्या ८ चक्रवर्त्तिनी ९ । अस्य गुणाः । तिक्तत्वं । उष्णत्वं । कफवातरोगव्रणदोषनाशित्वं । कण्ठरोगशमनत्वं । वर्णकारित्वञ्च । इति राजनिर्घण्टः ॥

अलक्तकः, पुं, (अलक्त एव, अलक्तः स्वार्थे कन् ।) निर्म्मलनं । अलक्तः । इति हलायुधो हारावली च ॥ लाक्षा । इति राजनिर्घण्टः ॥ ("अलक्तकाङ्कानि पदानि पादयोः" । इति कुमारसम्भवे ।
"पादालक्तकरक्तमौक्तिकशिलःसिद्धाङ्गनानामक्षतैः"
इति नागानन्दे ।)

अलगर्द्दः, पुं, (लगति स्पृशति, क्विप्, लग्, अर्दयति, अर्द्द + अच्, अर्दः, लग् चासौ अर्दश्चेति इति लगर्दः, नञः सम् पीडक इत्यर्थः, निर्व्विषत्वात् तद्भिन्नः ।) जलसर्पः । जलबोड़ा इति केचित् । अलाध इति केचित् । इत्यमरटीकायां भरतः ॥ (सविषो जलव्यालभेदः । विलकेउटिया इति भाषा, "तत्र सविषाः कृष्णाः कर्व्वुरा अलगर्द्दा इन्द्रायुधाः सामुद्रिका गोचनन्दाः चेति" । सुश्रुते ।)

अलगर्द्दः, पुं, (अलं गृध्यति इति गृध + अच्, पृषोदरादित्वात् साधुः ।) जलव्यालः । इत्यमरः ॥ केउटिया इति ख्यातः । जलबोड़ा इति केचित् । अलाध इति केचित् । इति भरतः ॥

अलङ्करणं, क्ली, (अलम् + कृ + भावे ल्युट् ।) भूषणं । इति शब्दरत्नावली ॥

अलङ्करिष्णुः, त्रि, (अलम् + कृ + इष्णुच् ।) अलङ्कारकर्त्ता । भूषणशीलः । इति रघुनाथचक्रवर्त्यादयः ॥ तत्पर्य्यायः । मण्डनः २ । इत्यमरः ॥ अलङ्कर्त्ता ३ । इति शब्दरत्नावली ॥*॥ अलङ्कारयुक्तार्थकः । इति सारसुन्दर्य्यादयः ॥ तत्पर्य्यायः । अलंकर्त्ता २ मण्डितः ३ प्रसाधितः ४ अलङ्कृतः ५ भूषितः ६ परिष्कृतः ७ । इत्यमरः ॥

अलङ्कर्त्ता, [र्त्तृ] त्रि, (अलम् + कृ + तृच् ।) अलङ्करिष्णुः । इत्यमरः ॥

अलङ्कर्म्मीणः, त्रि, (अलं समर्थः कर्म्मणे, खः ।) कार्य्यकुशलः । कर्म्मक्षमः । इत्यमरः ॥

अलङ्कारः, पुं, (अलम् + कृ + भावे घञ् ।) भूषणं । तत्पर्य्यायः । आभरणं २ परिष्कारः ३ विभूषणं ४ मण्डनं ५ । इत्यमरः ॥ अलङ्क्रिया ६ भूषा ७ अलङ्करणं ८ । इति शब्दरत्नावली । कलापः ९ इति जटाधरः ॥*॥ अथालङ्कारयुक्तिः । तत्रादौ रत्नादिगमुच्यते ।
"देवतास्वपि विप्रेषु हस्त्यादिष्वपि पक्षिषु ।
गजशुक्रबुधस्यापि वस्त्रालङ्कारधारणं ॥
अग्निहोत्रेष्वपि निर्दिष्टं वस्त्रालङ्कारधारणम् ।
उद्वाहे राजसम्माने ब्राह्मणानाञ्च सम्मते ॥
शिरस्त्रं मुकुटं हारः कुण्डलञ्चाङ्गदन्तथा ।
कङ्कणं वालकश्चैव मेखलाष्टाविति क्रमात् ॥
प्रधानभूषणान्येषु यथासंख्यानि निश्चयः ।
पद्मरागश्च वज्रश्च विजयो गोविदाश्चथा ॥
मुक्ता वैदूर्य्यनीलञ्च तथा मरकतं क्रमात् ।
आदित्यादिदशानां सर्व्वसम्पत्तिदायकाः ॥
सुवर्णेनापि घटना सर्व्वेष्वासु प्रयुज्यते ।
प्रधानभूषणेष्वेवमप्रधाने न निर्णयः ॥
प्रधानभूषणं प्रायः शिरसो ह्यभिधीयते ।
तस्य प्रधानभूतत्वादित्याह भृगुनन्दनः ॥
सुखदा मणयः शुद्धा दुःखदा दोषशालिनः ।
अतो मणीनां वक्ष्यामि लक्षणानि यथाक्रमं" ॥

इति युक्तिकल्पतरुः ॥ * ॥ मणिविशेषाणां लक्षणानि तत्तच्छब्दे द्रष्टव्यानि ॥ * ॥ काव्यालङ्कारः। स द्विविधः। शब्दालङ्कारः १। अर्थालङ्कारश्च २। तस्य लक्षणं। काव्यशोभाकरधर्म्मः। इति काव्यादर्शः॥ वैचित्र्यमलङ्कार इत्यलङ्कारसामान्यलक्षणं। वैचित्र्यञ्च भङ्गीविशेषः प्रतीतिसाक्षिकः। इति काव्यप्रकाशटीकायां महेश्वरः॥ अङ्गदादिवत् शब्दार्थशोभातिशयजनको रसाद्युपकारकोऽस्थिरधर्म्मः। इति साहित्यदर्पणं॥ अस्य विवरणं दण्डि-काव्यप्रकाश-साहित्यदर्पणालङ्कारकौस्तुभ-चन्द्रालोकोज्ज्वल-नीलमणि-काव्यचन्द्रिका-कुवलयानन्द-सरस्वतीकण्ठाभरणादिग्रन्थेषु ज्ञेयं। अलङ्काराणां मध्ये ये ये प्रसिद्धास्तेषां नामलक्षणोदाहरणानि चन्द्रालोकधृतानि तदतिरिक्तानि साहित्यदर्पणोक्तानि च लिख्यन्ते॥

| अथालङ्कारनामानि | तल्लक्षणानि | तदुदाहरणानि |
|---|---|---|
| अक्रमातिशयोक्तिः——१ | "अक्रमातिशयोक्तिः स्यात् सहत्वे हेतुकार्य्ययोः।१ | "आलिङ्गन्ति समं देव ज्यां शराश्च पराङ्गते" ॥१ |
| अतद्गुणः——२ | "सङ्गतानुगुणासङ्गीकारमाहुरतद्गुणं" । २ | "चिरं रागिणि मच्चित्ते निहितापि न रज्यसि"॥२ |
| अत्यन्तातिशयोक्तिः——३ | "अत्यन्तातिशयोक्तिस्तु कार्य्ये हेतुप्रशक्तिजे" ।३ | "यास्यामीत्युदिते तन्व्या वलयोऽभवदूर्म्मिका"॥३ |
| अत्युक्तिः——४ | "अत्युक्तिरद्भुतातथ्यशौर्य्यौदार्य्यादिवर्णनं" । ४ | "त्वयि दातरि राजेन्द्र याचकाः कल्पशाखिनः"॥४ |
| अधिकं——५ | "अधिकं पृथुलाधारादाधेयाधिक्यवर्णनं" । ५ | "ब्रह्माण्डानि जले यत्र तत्र मान्ति न ते गुणाः"॥५ |
| अनन्वयः——६ | "उपमानोपमेयत्वं यदेकस्यैव वस्तुनः" । ६ | "इन्दुरिवेन्दुः श्रीमानित्यादौ तदनन्वयः" ॥ ६ |
| अनुकूलं——७ | "अनुकूलं प्रातिकूल्यमनुकूलानुबन्धि चेत् । ७ | "कुपितासि यदा तन्वि निधाय करजक्षतं।<br>बधान भुजपाशाभ्यां कण्ठमस्य दृढं तदा" ॥ ७ |
| अनुगुणः——८ | "प्राक्सिद्धः स्वगुणोत्कर्षोऽनुगुणः परसन्निधेः" । ८ | "नीलोत्पलानि दधते कटाक्षैरतिनीलतां" ॥ ८ |
| अनुज्ञा——९ | "दोषस्याभ्यर्थनानुज्ञा तत्रैव गुणदर्शनात्" । ९ | "मय्येव जीर्णतां यातु यत्त्वयैव कृतं हरे।<br>नरः प्रत्युपकारार्थी विपत्तिमभिकाङ्क्षति" ॥९ |
| अनुप्रासः——१० | "अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत्" । १० | "आदाय वकुलगन्धानन्धीकुर्व्वन् पदे पदे भ्रमरान्।<br>अयमेति मन्दमन्दं कावेरीवारिपावनः पवनः"॥१० |
| अनुप्रासस्तु पञ्चविधः। एकस्य लक्षणोदाहरणे उक्ते। | "अनेकस्यैकधा साम्यसकृदाप्यनेकधा।<br>एकस्य सकृदप्येष छेकानुप्रास इष्यते" ॥ | "उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुरक्रीडत्-कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः।<br>नीयन्ते पथिकैः कथं कथमपि ध्यानावधानक्षण-प्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः"॥ |
| अपरे यथा, वृत्त्यनुप्रासः—— | | |
| श्रुत्यनुप्रासः— | "उच्चार्य्यत्वाद्यदेकत्र स्थाने तालुरदादिके"।<br>सादृश्यं व्यञ्जनस्यैतत् श्रुत्यनुप्रास उच्यते ॥ | "दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः।<br>विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः" ॥ |
| अन्त्यानुप्रासः— | व्यञ्जनञ्चेद्यथावस्थं सहाद्येन स्वरेण तु।<br>आवर्त्त्यतेऽन्त्ययोज्यत्वादन्त्यानुप्रासः स एव तत्" ॥ | "केशः काशस्तवकविकाशः कायः प्रकटितकरभविलासः। चक्षुर्दग्धवराटककल्पं त्यजति न चेतः काममनल्पं" ॥ |
| लाटानुप्रासः— | "शब्दार्थयोः पौनरुक्त्यं भेदे तात्पर्य्यमात्रतः।<br>लाटानुप्रास इत्युक्तः" ॥ | "स्मेरराजीवनयने नयने किं निमीलिते।<br>पश्य निर्ज्जितकन्दर्पं कन्दर्पवशगं प्रियं" ॥ |
| अनुमानं——११ | "अनुमानन्तु विच्छित्त्या ज्ञानं साध्यस्य साधनात्" । ११ | "जानीमहेऽस्याः किल सारसाक्ष्या विराजतेऽन्तःप्रियवक्त्रचन्द्रः। तत्कान्तिजालैः प्रसृतैस्तदङ्गेष्वापाण्डुता कुड्मलताक्षिपद्मे" ॥ ११ |
| अन्योन्यं——१२ | "अन्योन्यं नाम यत्र स्यादुपकारः परस्परं" । १२ | "त्रियामा शशिना भाति शशी भाति त्रियामया" ॥ १२ |
| अपह्नवातिशयोक्तिः——१३ | "रूपकातिशयोक्तिः स्यान्निगीर्य्याध्यवसानतः।<br>यद्यपह्नुतिगर्भत्वं सैव सापह्नवा मता" । १३ | "त्वत्सूक्तिषु सुधा, राजन् भ्रान्ताः पश्यन्ति तां विधौ" ॥ १३ |
| अप्रस्तुतप्रशंसा——१४ | "अप्रस्तुतप्रशंसा स्यात् सा यत्र प्रस्तुताश्रया"। १४ | "एकः कृती स कृत्येषु योऽन्यं शक्रान्न याचते" ॥१४ |
| अभिधाहेतुः——१५ | "अभेदेनाभिधाहेतुर्हेतोर्हेतुमता सह" । १५ | "तारुण्यविलासः। इत्यत्र वशीकरणहेतुर्नायिका वशीकरणत्वेनोक्ता। विलासहासयोस्त्वध्यवसायमूलोऽयमलङ्कारः" ॥ १५ |
| अर्थान्तरन्यासः——१६ | "उक्तिरर्थान्तरन्यासः स्यात् सामान्यविशेषयोः"।१६ | "हनूमानब्धिमतरत् दुष्करं किं महात्मनां॥<br>गुणवद्वस्तुसंसर्गात् याति स्वल्पोऽपि गौरवं।<br>पुष्पमालानुषङ्गेण सूत्रं शिरसि धार्य्यते" ॥ १६ |
| अर्थापत्तिः——१७ | "दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते।<br>क्वचित् प्राकरणिकादप्राकरणिकार्थस्यापतनं।<br>क्वचित् अप्राकरणिकात् प्राकरणिकार्थस्येति द्वौ भेदौ"। १७ | "हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले।<br>मुक्तानामप्यवस्थेयं के वयं स्मरकिङ्कराः" ॥<br>"विललाप सवाष्पगद्गदं सहजामप्यपहाय धीरतां। अतितप्तमयोऽपि मार्द्दवं भजते कैव कथा शरीरिणां" ॥ १७ |

| अथालङ्कारनामानि | तल्लक्षणानि | तदुदाहरणानि |
| --- | --- | --- |
| अल्पं ——— १८ | "अल्पन्तु सूक्ष्मादाधेयाद्यदाधारस्य सूक्ष्मता" । १८ | "मणिमालोर्म्मिका तेऽद्य करे जपवटायते" ॥ १८ |
| अवज्ञालङ्कृतिः ——— १९ | "ताभ्यां तौ यदि न स्यातामवज्ञालङ्कृतिस्तु सा" । १९ | "स्वल्पमेवाम्बु लभते पात्र्यः प्राप्यापि सागरं ।<br>मीलन्ति यदि पद्मानि का हानिरमृतद्युतेः" ॥ १९ |
| असङ्गतिः ——— २०<br>तस्य त्रीणि लक्षणानि । | "विरुद्धभिन्नदेशत्वं कार्य्यहेत्वोरसङ्गतिः ।<br>अन्यत्र करणीयस्य ततोऽन्यत्र कृतिश्च सा ॥<br>अन्यत् कर्त्तुं प्रवृत्तस्य तद्विरुद्धकृतिश्च सा" । २० | "विषं जलधरैः पीतं मूर्च्छिता पथिकाङ्गना ।<br>अपारिजातां वसुधां चिकीर्षन् द्यां तथाकृथाः ।<br>गोत्रोद्धारप्रवृत्तो हि गोत्रोद्धारं पुराकरोः" ॥ २० |
| असदर्थनिदर्शना ——— २१ | "अपरां बोधनं प्राहुः क्रियया सदसदर्थयोः" । अस्यार्थः । कस्यचित् किञ्चित् क्रियाविशिष्टस्य स्वक्रियया परान् प्रति असतः सतो वार्थस्य बोधनं वर्णनं । २१ | "नश्येद्राजविरोधीति क्षीणं चन्द्रोदये पुनः" ॥ २१ |
| असम्भवः ——— २२ | "असम्भवोऽर्थनिष्पत्तेरसम्भाव्यत्ववर्णनं" । २२ | "को वेद गोपशिशुकः शैलमुत्पाटयिष्यति" ॥ २२ |
| आवृत्तिदीपकं ——— २३<br>तत् त्रिविधं । पदावृत्तिः । अर्थावृत्तिः । उभयावृत्तिः । | "त्रिविधं दीपकावृत्तौ भवेदावृत्तिदीपकं" । २३ | "वर्षत्यम्बुदमालेयं वर्षत्येषा च शर्वरी ॥<br>उन्मीलन्ति कदम्बानि स्फुटन्ति कुटजोद्गमाः ।<br>माद्यन्ति चातकास्तृप्ता माद्यन्ति च शिखावलाः" ॥ २३ |
| आक्षेपः ——— २४<br>अस्य त्रीणि लक्षणानि लक्ष्याणि च । | "आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात् ।<br>निषेधाभासमाक्षेपं बुधाः केचन मन्वते ॥<br>आक्षेपोऽन्यो विधौ व्यक्ते निषेधे च तिरोहिते" । २४ | "चन्द्र सन्दर्शयात्मानमथवास्ति प्रियामुखं ।<br>नायं दूति तनोत्तापस्तस्याः कालानलोपमः ।<br>गच्छ गच्छसि चेत्कान्त तत्रैव स्याज्जनिर्मम" ॥ २४ |
| उत्प्रेक्षा ——— २५<br>सा वस्तुहेतुफलात्मतागोचरत्वेन त्रिविधा वस्तूत्प्रेक्षा । हेतूत्प्रेक्षा । फलोत्प्रेक्षा । तत्राद्या उक्तविषया अनुक्तविषया चेति द्विविधा । परे हेतुफलोत्प्रेक्षे सिद्धासिद्धविषयतया प्रत्येकं द्विविधे । एवमुत्प्रेक्षा षड्विधा । | "सम्भावनाः स्यादुत्प्रेक्षा वस्तुहेतुफलात्मता ।<br>उक्तानुक्तास्पदाद्यात्र सिद्धासिद्धास्पदे परे" । २५ | "धूमस्तोमं तमः शङ्के कोकीविरहशालिनां ।<br>लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ॥<br>रक्तौ तवाङ्घ्री मृदुलौ भुवि विक्षेपणाद्ध्रुवं ।<br>त्वन्मुखाभेच्छया नूनं पद्मैर्वैरायते शशी ॥<br>मध्यः किं कुचयोर्धृत्यै बद्धः कनकदामभिः ।<br>प्रायोऽब्जं त्वत्पदेनैक्यं प्राप्तुं तोये तपस्यति" ॥ २५ |
| उत्तरं ——— २६ | "किञ्चिदाकूतसहितं स्याद्गूढोत्तरमुत्तरं" । २६ | "यत्रासौ वेतसी पान्थ तत्रेयं सुतरा सरित्" ॥ २६ |
| उदात्तं ——— २७ | "उदात्तमृद्धिरचितं श्लाघ्यमाल्योपलक्षणं" । २७ | "सासौ यत्राभवद्युद्धं तव धूर्ज्जटिनाऽर्ज्जुन" ॥ २७ |
| उपमा ——— २८ | "उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः" । २८ | "हंसीव भूपतेः कीर्त्तिः स्वर्गङ्गामवगाहते" ॥ २८ |
| उपमेयोपमा ——— २९ | "पर्य्यायेण द्वयोस्तच्चेदुपमेयोपमा मता" । २९ | "धर्म्मोऽर्थ इव पूर्णश्रीरर्थो धर्म्म इव त्वयि" ॥ २९ |
| उल्लासः ——— ३० | "एकस्य गुणदोषाभ्यामुल्लासोऽन्यस्य तौ यदि" । ३० | "अपि मां पावयेत् साध्वी स्नात्वेतीच्छति जाह्नवी ॥<br>काठिन्यं कुचयोर्दृष्टं वाञ्छन्त्यः पादपद्मयोः ।<br>निन्दन्ति विश्वधातारं त्वद्धाटीष्वरियोषितः ॥<br>तदभाग्यं धनस्यैव यन्नाश्रयति सज्जनं ॥<br>लाभोऽयमेव भूपाल सेवकानां न चेद्वधः" ॥ ३० |
| उल्लेखः ——— ३१<br>लक्षणभेदेन स द्विविधः । | "बहुभिर्बहुधोल्लेखादेकस्योल्लेख इष्यते ।<br>एकोन बहुधोल्लेखोऽप्यसौ विषयभेदतः" । ३१ | "स्त्रीभिः कामोऽर्थिभिः स्वर्द्रुः कालः शत्रुभिरैक्षि सः ।<br>गुरुर्वचस्यर्जुनोऽयं कीर्त्तौ भीष्मः शरासने" ॥ ३१ |
| एकावली ——— ३२ | "गृहीतमुक्तरीत्यार्थश्रेणिरेकावली मता" । ३२ | "नेत्रे कर्णान्तविश्रान्ते कर्णौ दोःस्तम्भशासनौ ।<br>दोःस्तम्भौ जानुपर्य्यन्तप्रलम्बनमनोहरौ ।<br>जानुनी रत्नमुकुराकारे तस्य महीभुजः" ॥ ३२ |
| कारकदीपकं ——— ३३ | "क्रमिकैकगतानान्तु गुम्फः कारकदीपकं" । ३३ | "गच्छत्या गच्छति पुनः पान्थः पश्यति पृच्छति" ॥ ३३ |
| कारणमाला ——— ३४<br>सा पूर्व्वपूर्व्वपदार्थानां कारणत्ववर्णनेन एवमुत्तरोत्तरपदार्थानां कारणत्ववर्णनेन च द्विधा । | "गुम्फः कारणमाला स्याद्यथा प्रक्रान्तकारणैः" । ३४ | "नयेन श्रीः श्रिया त्यागस्त्यागेन विपुलं यशः ॥<br>भवन्ति नरकाः पापाः पापं दारिद्र्यसम्भवं ।<br>दारिद्र्यमप्रदानेन तस्माद्दानपरो भव" ॥ ३४ |
| काव्यलिङ्गं ——— ३५ | "समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनं" । ३५ | "जितोऽसि मन्द कन्दर्प मच्चित्तेऽस्ति त्रिलोचनः" ॥ ३५ |
| काव्यार्थापत्तिः ——— ३६ | "कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते" । ३६ | "स जितस्त्वन्मुखेनेन्दुः का वार्त्ता सरसीरुहां" ॥ ३६ |
| कैतवापह्नुतिः ——— ३७ | "कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नवे पदैः" । ३७ | "निर्यान्ति स्मरनाराचा बालादृक्पातकैतवात्" ॥ ३७ |
| गूढोक्तिः ——— ३८ | "गूढोक्तिरन्योद्देश्या गीर्यदन्यं प्रति कथ्यते" । ३८ | "वृषापेहि परक्षेत्रादायाति क्षेत्ररक्षकः" ॥ ३८ |
| चपलातिशयोक्तिः ——— ३९ | "चपलातिशयोक्तिस्तत्पौर्व्वापर्य्यव्यतिक्रमः" । ३९ | "अग्रे मार्गो गतः पश्चादगुणीता प्रियेण सा" ॥ ३९ |
| चित्रं ——— ४० | "पद्माद्याकारहेतुत्वे वर्णानां चित्रमुच्यते" । ४० | "मारमासुषमा चारुरुचा मारवधूत्तमा ।<br>मात्तधूर्त्ततमावासा सा वामा मेऽस्तु मारमा" ॥ ४० |

| अथालङ्कारनामानि | | तल्लक्षणानि | तदुदाहरणानि |
|---|---|---|---|
| चित्रकाव्यमनेकविधं यथा। पद्म-चक्र-धनुः-खड्ग-नागपाश-कवाट-नौका-बन्धाः। अश्वगति-त्रिपदी-गोमूत्रिकादयः। | | | |
| छेकापह्नुतिः | ४१ | "छेकापह्नुतिरन्यस्य शङ्कातस्तस्य निह्नवे"। ४१ | "प्रजल्पन् मत्पदे लग्नः कान्तः किं न हि नूपुरः"॥ ४१ |
| तद्गुणः | ४२ | "तद्गुणः स्वगुणत्यागादन्यदीयगुणग्रहः"। ४२ | "पद्मरागायते नासामौक्तिकं तेऽधरत्विषा"॥ ४२ |
| तुल्ययोगिता<br>सा त्रिधा।<br>प्रथमा यथा | ४३ | "वर्ण्यानामितरेषां वा धर्म्मैक्यं तुल्ययोगिता"। | "सङ्कुचन्ति सरोजानि स्वैरिणीवदनानि च।<br>त्वदङ्गमार्दवे दृष्टे कस्य चित्ते न भासते।<br>मालतीशशभृल्लेखा कदलीनां कठोरता॥ |
| द्वितीया यथा | | "हिताहिते वृत्तितौल्यमपरा तुल्ययोगिता। | प्रदीयते पराभूतिर्मित्रशात्रवयोस्त्वया॥ |
| तृतीया यथा | | गुणोत्कृष्टैः समीकृत्य वचोऽन्या तुल्ययोगिता"। ४३ | लोकपालो यमः पाशी श्रीदः शक्रो भवानपि"॥ ४३ |
| दीपकं | ४४ | "वदन्ति वर्ण्यावर्ण्यानां धर्म्मैक्यं दीपकं बुधाः"। ४४ | "मदेन भाति कलभः प्रतापेन महीपतिः"॥ ४४ |
| दृष्टान्तः | ४५ | "चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलङ्कृतिः"। ४५ | "त्वमेव कीर्त्तिमान्राजन् विधुरेव हि कान्तिमान्"॥ ४५ |
| निदर्शना<br>सा त्रिधा। | ४६ | "वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शना।<br>पदार्थगर्भामप्यन्ये वदन्त्यन्यां निदर्शनां॥<br>अपरां बोधनं प्राहुः क्रियया सत्तदर्थयोः"। ४६ | "या दातुः सौम्यता सेयं पूर्णेन्दोरकलङ्कता॥<br>त्वन्नेत्रयुगलं धत्ते लीलां नीलाम्बुजन्मनोः॥<br>नश्येद्राजविरोधीति क्षीणं चन्द्रोदये तमः"॥ ४६ |
| निरुक्तिः | ४७ | "निरुक्तिर्योगतो नाम्नामन्यार्थत्वप्रकल्पनं"। ४७ | "ईदृशैश्चरितैर्जाने सत्यं दोषाकरो भवान्"॥ ४७ |
| परिकरः | ४८ | "अलङ्कारः परिकरः साभिप्रायविशेषणे"। ४८ | "सुधांशुकलितोत्तंसस्तापं हरतु वः शिवः"॥ ४८ |
| परिकराङ्कुरः | ४९ | "साभिप्रायविशेष्यश्चेद्भवेत् परिकराङ्कुरः"। ४९ | "चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः"॥ ४९ |
| परिणामः | ५० | "परिणामः क्रियार्थश्चेद्विषयी विषयात्मना"। ५० | "प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा"॥ ५० |
| परिवृत्तिः | ५१ | "परिवृत्तिर्व्विनिमयो न्यूनाभ्यधिकयोर्म्मिथः"। ५१ | "ययावेकं शरं मुक्त्वा कटाक्षान् स रिपुस्त्रियाः"॥ ५१ |
| परिसंख्या | ५२ | "परिसंख्या निषिध्यैकमेकस्मिन् वस्तुयन्त्रणं"। ५२ | "स्नेहक्षयः प्रदीपेषु न स्वान्तेषु नतभ्रुवां"॥ ५२ |
| पर्य्यस्तापह्नुतिः | ५३ | "अन्यत्र तस्यारोपार्थः पर्य्यस्तापह्नुतिस्तु सा"। ५३ | "नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखं"॥ ५३ |
| पर्य्यायः<br>स द्विविधः। | ५४ | "पर्य्यायो यदि पर्य्यायेणैकस्यानेकसंश्रयः।<br>"एकस्मिन् यस्यानेकं वा पर्य्यायः सोऽपि सम्मतः"॥ ५४ | "पद्मं मुक्त्वा गता चन्द्रं कामिनीवदनप्रभा॥<br>अधुना पुलिनं तत्र यत्र स्रोतः पुराजनि"॥ ५४ |
| पर्य्यायोक्तं<br>तत् द्विविधं। | ५५ | "पर्य्यायोक्तं तु गम्यस्य वचोभङ्ग्यन्तराश्रयः।<br>पर्य्यायोक्तं तदप्याहुर्यद्व्याजेनेष्टसाधनं"॥ ५५ | नमस्तस्मै कृतो येन मुधा राहुवधूकुचौ॥<br>यामि चूतलतां द्रष्टुं युवाभ्यामास्यतामिह"॥ ५५ |
| पिहितं | ५६ | "पिहितं परवृत्तान्तज्ञातुः साकूतचेष्टितं"। ५६ | "प्रिये गृहागते प्रातः कान्ता तल्पमकल्पयत्"॥ ५६ |
| पुनरुक्तवदाभासः | ५७ | "आपाततो यदर्थस्य पौनरुक्त्यावभासनं।<br>पुनरुक्तवदाभासः स भिन्नाकारशब्दगः"॥ ५७ | "भुजङ्गकुण्डलीव्यक्तशशिशुभ्रांशुशीतगुः।<br>जगन्त्यपि सदा पायादव्याच्चेतोहरः शिवः"॥ ५७ |
| पूर्व्वरूपः<br>स द्विविधः। | ५८ | "पुनः स्वगुणसंप्राप्तिः पूर्व्वरूपमुदाहृतं।<br>पूर्व्वावस्थानुवृत्तिश्च विकृते सति वस्तुनि"॥ ५८ | हरकण्ठांशुलिप्तोऽपि शेषस्त्वद्यशसा सितः॥<br>दीपे निर्व्वापितेऽप्यासीत् काञ्चीरत्नैर्महन्महः"॥ ५८ |
| प्रतिवस्तूपमा | ५९ | "वाक्ययोरेकसामान्ये प्रतिवस्तूपमा मता"। ५९ | "तापेन भ्राजते सूर्य्यः शूरश्चापेन राजते"॥ ५९ |
| प्रतिषेधः | ६० | "प्रतिषेधः प्रसिद्धस्य निषेधस्यानुकीर्त्तनं"। ६० | "न द्यूतमेतत् कितवाक्रीड़नं निशितैः शरैः"॥ ६० |
| प्रतीपं<br>तल्लक्षणभेदेन पञ्चविधं। न तु नामभेदेन। | ६१ | "प्रतीपमुपमानस्याप्युपमेयत्वकल्पनं।<br>अन्योपमेयलाभेन वर्ण्यस्यानादरश्च तत्॥<br>वर्ण्योपमानलाभेन तथान्यस्याप्यनादरः।<br>वर्ण्येनान्यस्योपमाया अनिष्पत्तिर्वचश्च तत्॥<br>प्रतीपमुपमानस्य कैमर्थ्यमपि मन्यते"। ६१ | "तल्लोचनसमं पद्मं तद्वक्त्रसदृशो विधुः।<br>अलं गर्व्वेण ते वक्त्रकान्त्या चन्द्रो भवादृशः।<br>कः क्रौर्य्यदर्पस्ते मृत्यो त्वत्तुल्याः सन्ति हि स्त्रियः।<br>मिथ्यावादो हि मुग्धाक्षि त्वन्मुखाभं किलाम्बुजं।<br>दृष्टं चेद्वदनं तस्याः किं पद्मेन किमिन्दुना"॥ ६१ |
| प्रत्यनीकं | ६२ | "प्रत्यनीकं बलवतः शत्रोः पक्षे पराक्रमः"। ६२ | "जैत्रनेत्रानुगौ कर्णावुत्पलाभ्यामधःकृतौ"॥ ६२ |
| प्रस्तुताङ्कुरः | ६३ | "प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुताङ्कुरः"। ६३ | "किं भृङ्ग सत्यां मालत्यां केतक्या कण्टकश्रया"॥ ६३ |
| प्रहर्षणं<br>तत् त्रिविधं। | ६४ | "उत्कण्ठितार्थसंसिद्धिर्व्विना यत्नं प्रहर्षणं।<br>वाञ्छितादधिकार्थस्य संसिद्धिश्च प्रहर्षणं॥<br>यत्नादुपायसिद्ध्यर्थात् साक्षाल्लाभः फलस्य तत्"॥ ६४ | "तामेव ध्यायते तस्मै निसृष्टा सैव दूतिका॥<br>दीपमुद्योजयेद्यावत्तावदभ्युदितो रविः॥<br>निध्यञ्जनौषधीमूलं खनता साधितो निधिः"॥ ६४ |
| प्रौढ़ोक्तिः | ६५ | "प्रौढ़ोक्तिरुत्कर्षहेतौ तद्धेतुत्वप्रकल्पनं"। ६५ | "कचाः कलिन्दजातीरतमालस्तोममेचकाः"॥ ६५ |
| भाविकं | ६६ | "भाविकं भूतभाव्यर्थसाक्षात्कारस्य वर्णनं"। ६६ | "अहं विलोकयेऽद्यापि युध्यन्तेऽत्र सुरासुराः"॥ ६६ |
| भाषासमावेशः | ६७ | "शब्दैरेकविधैरेव भाषासु विविधास्वपि।<br>वाक्यं यत्र भवेत् सोऽयं भाषासम इतीष्यते"॥ ६७ | "गुञ्जन्मणिमञ्जीरे कलगम्भीरे विहारसरसीतीरे।<br>विरसासि केलिकीरे किमालि धीरे च गन्धसार-समीरे"॥ ६७ |

अतएव सर्व्वमङ्गलोपायीभूतस्य सत्त्वगुणस्यो-
त्थाय दुर्ब्बलाधिकारिभिः प्रथमं निष्कामेणान्तः-
रणेन क्रियायोगादिरूपेश्वरोपासना कार्य्येति
श्यते न हि सत्त्वभावेन परमेश्वरोपासनान्ते
जस्तमोभावाः केनापि विलापयितुं शक्येरन्।
भावे नितरां विशुद्धसत्त्वगुणोद्रेकाशा सुदूर-
ाहतैव। प्रबलरजस्तमोभ्यामस्याभिभूतत्वात्।
ं सति सर्व्वतः सात्त्विकाहारः सात्त्विकानुष्ठानं
त्त्विकाचरणमित्यादिसत्त्वभावाश्रयेण क्रमशः
जस्तमोभावं विलापयन् कैवल्याकाङ्क्षी परामात्म-
क्षात्काराभिलाषी वा साधकः कालेन परम
द्धिं ध्रुवमाप्नुयादेव। परन्तु दुर्ब्बलाधिकारिणा
थमतश्चित्तस्य स्थिरत्वापादनाय काञ्चित् सा-
ष्टां भागवतीं मूर्त्तिमालम्ब्यैवोपासना कर्त्तव्या
न्यथा तेषां सर्व्वरूपाद्युपाधिपरिवर्ज्जिते निर्व्वि-
रे निरञ्जने गुणातीतेऽवाङ्मनसगोचरे पर-
ह्मणि चित्तधारणा विडम्बनैव। परन्त्वित्यत्र न
 ईश्वरोपासनामुपलक्षीकृत्य कथं पौत्तलिका-
चारं प्रतिपादयितुं प्रयतसे इति वाच्यम्
त्मभिर्ब्रह्मविद्भिः पूर्व्वाचार्य्यैर्हि कलुषित-
त्तानां दुर्ब्बलाधिकारिणाम् चित्तशुद्धौ प्रथ-
तश्चित्तस्थैर्य्यसम्पादनाय धारणाध्यानावलम्बन-
पायां प्रतिमायामुपासनायाः कर्त्तव्यतयोपदिष्ट-
ात्। अयमर्थः यावत् न सत्त्वोद्रेकेण चित्तशुद्धि-
र्भवेत् यावन्न स्वहृदये निर्गुणपरमात्मधारणया
माधिशक्तिर्भवेत् यावन्न तत्कथादिषु दृढ़ा भक्तिः
तिश्च भवेत् तावदर्च्चादौ आदिपदेनात्र सूर्य्ये
ौ जले अभीष्टमूर्त्तौ वा उपासना कर्त्तव्ये-
र्थः। परमेवं मा मन्यध्वं यत् केवलं मृच्छिलादि-
र्म्मितप्रतिमूर्त्तिमाश्रित्यैव यावज्जीवं स्थूलो-
ासना कर्त्तव्येति॥ “आसत्त्वशोधनात् क्रमेण
हृदये दृढ़तरधारणाध्यानप्रभावेन आचित्त-
माधानाच्च”। इति कालनिर्द्देशात्। फलतः
दौ नित्याद्यवश्यकर्म्म करणीयमेव। पुरा कर्म्म-
व हि बहवः सिद्धिं गताः तथा हि भगवद्-
तायाम्। ३। १९-२०॥
स्मादसक्तः सततं कार्य्यं कर्म्म समाचर।
सक्तो ह्याचरन् कर्म्म परमाप्नोति पूरुषः॥
र्म्मणैव हि संसिद्धिमास्थिता जनकादयः”॥
ा तु रजस्तमोभावानां निवृत्तौ सत्यां बहु-
ार्ज्जितसौभाग्यवशात् तस्मिन्नेव ऐकान्तिकी
तिरुत्पद्यते तादृशस्यात्मरतेरात्मतृप्तस्य यो-
नः न तदा किञ्चिदपि कर्म्मणा प्रयोजनमस्ति
ा तत्रैव। ३। १७-१८॥
स्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।
ात्मन्येव च सन्तुष्टस्तस्य कार्य्यं न विद्यते॥
 तस्य कृतेनार्थो नाकृतेनेह कश्चन।
चास्य सर्व्वभूतेषु कश्चिदर्थव्यपाश्रयः”॥
एवं प्राप्तविद्योऽपि आचारवंवत् कर्म्माचरेत्
 तत्तु केवलं लोकशिक्षार्थमेव न तु तस्य स्वा-
र्थसिद्धये अविद्याकामकर्म्माद्यभावात् सुखदुः-
दिद्वन्द्वनिर्म्मुक्तत्वाच्च।

यथा तत्रैव ३। २१, २५ श्लोके।
“यद् यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।
स यत् प्रमाणं कुरुते लोकस्तदनुवर्त्तते॥
सक्ताः कर्म्मण्यविद्वांसो यथा कुर्व्वन्ति भारत!।
कुर्य्याद् विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम्”॥

किन्तु यावदस्मिन् त्रिधातुके शोणितशुक्रप-
रिणामपिण्डे शरीरे कर्त्तृत्वाद्यभिमानवान् तावत्
“ब्रह्मज्ञोऽस्मि अलं मे कर्म्मणा” इत्येवं मौढ्यात्
संसारासक्तोऽतत्त्वज्ञपुरुषः कर्त्तव्यं कर्म्म परि-
त्यजति चेत् उभयतो भ्रष्टत एव। तथाहि योग-
वाशिष्ठे मोक्षप्रकरणे ७४। ४१।
“संसारविषयासक्तो ब्रह्मज्ञोऽस्मीति वादिनः।
कर्म्मब्रह्मोभयभ्रष्टस्तं त्यजेदन्त्यजं यथा”॥

अतएव कर्म्मत्यागे प्रायशो दोषएव न तु
क्वचित् विधिर्लक्ष्यते यतो विद्योदये तत्त्वज्ञानी
विधिनिषेधसापेक्षो भवितुं नार्हति सर्व्ववासना-
कामकर्म्ममय्यविद्याभावात् न हि विधिनिषेधाभ्यां
सह विदुषः कोऽपि सम्बन्धः। किन्तु अदूरद-
र्शिनो मन्दस्य तत्त्वज्ञानोपदेशेन कर्म्मानुष्ठानाद्
बुद्धिभेदो न कर्त्तव्य इत्यादिशति भगवान् वासुदेवः।
यथा भगवद्गीतायां ३। २६, २९॥
“न बुद्धिभेदं जनयेदज्ञानां कर्म्मसङ्गिनाम्।
योजयेत् सर्व्वकर्म्माणि विद्वान् युक्तः समाचरन्”॥
“प्रकृतेर्गुणसंमूढ़ाः सज्जन्ते गुणकर्म्मसु।
तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत्”॥

भवतु अलं बहुना वाग्जालेन। योऽस्य विश्वस्य
आकाशवत् सर्व्वदा सर्व्वत्र ओतप्रोतरूपेण अन्त-
र्बहिर्विराजते तस्य सर्व्वव्यापिनः सर्व्वान्तर्यामिनः
परमपुरुषस्य स्वरूपभावे यावन्न साधकस्य स्वहृ-
दये धारणाध्यानादिभिः स्थैर्य्यमापद्यते तावद-
र्च्चादावेवोपासना कार्य्या दुर्ब्बलाधिकारिणेत्येव
निष्कर्षः॥ तथा हि कुलार्णवतन्त्रे ६ उल्लासे।
“चिन्मयस्याप्रमेयस्य निर्गुणस्याशरीरिणः।
साधकानां हितार्थाय ब्रह्मणो रूपकल्पना॥
अरूपं रूपिणं कृत्वा कर्म्मकाण्डरता नराः।
ब्रह्मज्ञानामृतानन्दपराः सुकृतिनो नराः”॥
किञ्च तत्रैव ९ उल्लासे।
“निर्व्विशेषं परं ब्रह्म साक्षात् कर्त्तुमनीश्वराः।
ये मन्दास्तेऽनुकल्प्यन्ते सविशेषनिरूपणैः”॥

अधिकारिभेदेनावलम्बनीयोपास्यदेवस्यापि भेदः
प्रदर्शितः। यथा। तत्रैव ९म उल्लासे।
“अग्नौ तिष्ठति विप्राणां हृदि देवो मनीषिणाम्।
प्रतिमास्वल्पबुद्धीनां सर्व्वत्र विदितात्मनाम्”॥

अपि च कति दिनानि यावत् कर्म्माणि कर्त्त-
व्यानि अर्च्चाद्यधिष्ठानेऽर्च्चनं वा कर्त्तव्यमिति विवि-
त्सायां मूढ़ान् प्रत्यनुकम्प्य तदप्युपदिदिशुः पूर्व्वा-
चार्य्याः। यथा भागवते ११। २०। ९॥
“तावत्कर्म्माणि कुर्व्वीत न निर्व्विद्येत यावता।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते”॥
तथा, तत्रैव ३। २९। २५॥
“अर्च्चादावर्च्चयेत्तावदीश्वरं मां स्वकर्म्मकृत्।
यावन्न वेद स्वहृदि सर्व्वभूतेष्ववस्थितम्”॥

ननु निःश्रेयसार्थिनां साधकानां यदि प्रथमतः
क्रियायोगएव कर्त्तव्यः तर्हि अलं प्रमाणशत-
विस्तारेण तत्र परम्पराकर्त्तव्यमेव विधीयतामिति
चेत् अवधेहि यत्पथावलम्बनेन सत्त्वे शोधिते
सति दुर्ब्बलाधिकार्य्यपि सत्वरं सबलाधिकारित्वं
याति। यथा, भागवते ३। २८। १-५।

श्रीभगवानुवाच। (कपिलदेवः।)
“योगस्य लक्षणं वक्ष्ये सवीजस्य नृपात्मजे।
मनो येनैव विधिना प्रसन्नं याति सत्पथम्॥
स्वधर्म्माचरणं शक्त्या विधर्म्माच्च निवर्त्तनम्।
दैवाल्लब्धेन सन्तोष आत्मविच्चरणार्च्चनम्॥
ग्राम्यधर्म्मनिवृत्तिश्च मोक्षधर्म्मरतिस्तथा।
मितमेध्यादनं शश्वद् विविक्तक्षेमसेवनम्॥
अहिंसा सत्यमस्तेयं यावदर्थपरिग्रहः।
ब्रह्मचर्य्यं तपः शौचं स्वाध्यायः पुरुषार्च्चनम्॥
मौनं सदासनजयः स्थैर्य्यं प्राणजयः शनैः।
प्रत्याहारश्चेन्द्रियाणां विषयान्मनसा हृदि”॥

सवीजस्य सकारणस्य योगस्य इत्यर्थः॥ विधर्म्मा-
च्छोकानिष्टकारित्वादिविरुद्धधर्म्मात्॥ दैवाल्लब्धेन
प्रारब्धलब्धेन॥ आत्मविदिति। आत्मतत्त्वज्ञानिनां
चरणसेवनम्॥ ग्राम्यधर्म्मेति मोक्षपथं विहाय
धर्म्मार्थकामादयः ग्राम्यधर्म्मत्वेनोच्यन्ते अतएव
ग्राम्यधर्म्मस्त्रैवर्गिकधर्म्मस्तस्मान्निवृत्तिः॥ मित-
मिति मितं स्वल्पं मेध्यादनं पवित्रद्रव्यभोजनम्
विविक्ते निर्ज्जने क्षेमस्य मङ्गलस्य सेवनम्॥ अस्तेय-
मचौर्य्यम्॥ यावदर्थपरिग्रह इति। यावतार्थेन
जीवेत तावन्मात्रस्य परिग्रहः॥ ब्रह्मचर्य्यं योषित्-
सङ्गराहित्यम्॥ स्वाध्याय इति स्वाध्यायः जपा-
ध्ययनादिः॥ पुरुषार्च्चनं परमपुरुषस्य उपासनम्॥
मौनमिति मौनं मुनेर्व्रताचरणं मननशीलत्वं वाचां
संयमत्वं वा॥ आसनानां स्वस्तिकादीनां विजयः॥
स्थैर्य्यं दीर्घकालमवस्थातुं शक्तिः॥ प्राणजयः प्राणा-
यामैः प्राणनिरोधकरणसामर्थ्यम्॥ प्रत्याहारेति॥
मनसा सह इन्द्रियाणां शब्दस्पर्शादिविषयात्
हृदि हृदये प्रत्याहारः प्रत्याकर्षणम्॥
तत्रैव। ३। २८। ६-९॥
“स्वाधिष्ठानामेकदेशे मनसा प्राणधारणम्।
वैकुण्ठलीलाभिध्यानं समाधानं तथात्मनः॥
एतैरन्यैश्च पथिभिर्मनो दुष्टमसत्पथम्।
बुद्ध्या युञ्जीत शनकैर्जितप्राणो ह्यतन्द्रितः॥
शुचौ देशे प्रतिष्ठाप्य विजितासन आसनम्।
तस्मिन् स्वस्तिसमासीनः ऋजुकायः समभ्यसेत्॥
प्राणस्य शोधयेन्मार्गं पूरकुम्भकरेचकैः।
प्रतिकूलेन वा चित्तं यथा स्थिरमचञ्चलम्”॥

स्वाधिष्ठानामिति। मूलाधारादिचक्राणामे-
कस्मिन् स्थाने मनसा सह प्राणानां धारणम्॥
वैकुण्ठेति। वैकुण्ठस्याकुण्ठितस्य सुखदुःखादि-
भिरपरामृष्टस्य परमपुरुषस्य लीलाभिध्यानं
सृष्ट्यादिव्यापारसमालोचनम्। आत्मनो मनसः
समाधानमैकाग्र्यसाधनम्॥ जितप्राणो निरुद्ध-
प्राणवृत्तिः। अतन्द्रितः निरलसः॥ विजितासनः
वशीकृतकरचरणादिसंस्थानविशेषः॥ प्राणस्येति।

प्रतिकूलेन विपर्य्ययक्रमेण वा चित्तं यथा येन प्रकारेण स्थिरमचञ्चलं चाञ्चल्यरहितं स्यात् तथा प्राणमार्गं शोधयेदित्यर्थः ॥ तेन किं स्यादित्यत आह । तत्रैव ३ । २ । १० ॥

"मनोऽचिरात् स्याद्विरजं जितश्वासस्य योगिनः ।
वाय्वग्निभ्यां यथा लोहं ध्मातं त्यजति वै मलम्" ॥

जितश्वासस्य योगिनः मनोऽचिरात् वह्नितापितलोहवत् अविद्याकामकर्म्मजनितमलं विषयसङ्गजनितपापनिचयमित्यर्थः विहाय विरजं निर्म्मलं स्यात् । इदानीं पूर्व्वोपदिष्टप्राणायामादिना केन कार्य्येण किं फलं स्यात् तत्सर्व्वं क्रमेण सुव्यक्तं बोधयति । तत्रैव ३ । २८ । ११-१२ ॥

"प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्बिषान् ।
प्रत्याहारेण संसर्गान् ध्यानेनानीश्वरान् गुणान् ॥
यदा मनः स्वं विरजं योगेन सुसमाहितम् ।
काष्ठां भगवतो ध्यायेत् स्वनासाग्रावलोकनः" ॥

प्राणायामद्वारा वातपित्तश्लेष्मादिदोषान् धारणया पापानि प्रत्याहारेण इन्द्रियाकर्षणेन विषयसंसर्गान् ध्यानेन अनीश्वरान् शोकमोहाभिमानदम्भक्रोधमात्सर्य्यादिदोषान् दहेदित्यन्वयः । अनेन विधिना यदा मनः स्थिरतां याति तदा युञ्जानो योगी प्रथमे धारणालम्बनस्वरूपां भगवतः काञ्चित् स्वाभीष्टां मूर्त्तिं ध्यायेदित्युपदिदेश भगवान् कपिलदेवः ॥ इदानीं ध्येयमूर्त्तिं विवृणोति । यथा, तत्रैव ३ । २८ । १३—१९ ॥

"प्रसन्नवदनाम्भोजं पद्मगर्भारुणेक्षणम् ।
नीलोत्पलदलश्यामं शङ्खचक्रगदाधरम् ॥
लसत्पङ्कजकिञ्जल्कपीतकौशेयवाससम् ।
श्रीवत्सवक्षसं भ्राजत्कौस्तुभामुक्तकन्धरम् ॥
मत्तद्विरेफकलया परीतं वनमालया ।
परार्द्ध्यहारवलयकिरीटाङ्गदनूपुरम् ॥
काञ्चीगुणोल्लसच्छ्रोणिं हृदयाम्भोजविष्टरम् ।
दर्शनीयतमं शान्तम् मनोनयनवर्द्धनम् ॥
अपीव्यदर्शनं शश्वत् सर्व्वलोकनमस्कृतम् ।
सन्तं वयसि कैशोरे भृत्यानुग्रहकातरम् ॥
कीर्त्तन्यतीर्थयशसं पुण्यश्लोकयशस्करम् ।
ध्यायेद्देवं समग्राङ्गं यावन्न च्यवते मनः ॥
स्थितं व्रजन्तमासीनं शयानं वा गुहाशयम् ।
प्रेक्षणीये हि तं ध्यायेत् शुद्धभावेन चेतसा" ॥

ध्येयमूर्त्तेः सकाशात् मनो यावत् विषयान्तरं न याति तावद्ध्यायेदितिभावः । गुहाशयं बुद्धितत्त्वे विराजमानं एवं निरन्तरध्यानेन साधकस्य चित्तं यदा भगवद्रूपे लब्धपदं भवेत् तदा चित्तस्य शनैः शनैः सौष्ठवकरणाय मूर्त्तिं धारयित्वा भगवतश्चरणारविन्दादीन्येकैकाङ्गानि ततः साभरणान्यङ्गानि ततो विलासहासादीनि च क्रमेण यथाविधि ध्यातुमुपदिष्टवान् कपिलः ॥ ततः किमित्याह । एवं चिरं ध्यात्वा योगी बहुजन्मार्जितसौभाग्यवशात् यदि हरौ प्राप्तभावो भक्त्या द्रवद्धृदय आनन्दार्णवे भासमानो भवेत् तर्हि तस्मिन् स्थूले भगवद्रूपे बडिशवत् संलग्नं चित्तं निर्गुणस्य परब्रह्मणः स्वरूपलाभार्थं तस्मादङ्गादिस्थूलरूपाद्वियोज्य निरालम्बनं निर्व्विषयं कृत्वा उपरतगुणप्रवाहः सन् ध्यातृध्येयादिज्ञानाभावात् सर्व्वोपाधिपरिवर्जितमेकमेवाद्वितीयमात्मानं पश्यत्येव ॥ यथा तत्रैव ३ । २८ । ३४-३५ ॥

"एवं हरौ भगवति प्रतिलब्धभावो
भक्त्या द्रवद्धृदय उत्पुलकः प्रमोदात् ।
औत्कण्ठ्यवाष्पकलया मुहुरर्द्यमान-
स्तच्चापि चित्तवडिशं शनकैर्वियुङ्क्ते ॥
मुक्ताश्रयं यदि हि निर्व्विषयं विरक्तं
निर्व्वाणमृच्छति मनः सहसा यथार्च्चिः ।
आत्मानमत्र पुरुषोऽव्यवधानमेक-
मन्वीक्षते प्रतिनिवृत्तगुणप्रवाहः" ॥

ननु सुचिरं साधनेन लब्धेऽप्यात्मनि किमायातं । किन्तु श्रम एवेति चेत् न यतोऽनेकजन्मसाधनबलात् यदाऽखण्डमात्मानं ईक्षते स योगी सुखदुःखादिकं सर्व्वमहङ्कारनिष्ठं पश्यति तदा देहाद्युपाधिनिर्म्मुक्तो जीवन्मुक्तो भवेत् । यथा तत्रैव ३ । २८ । ३६—३७ ॥

"सोऽप्येतया चरमया मनसो निवृत्त्या
तस्मिन् महिम्न्यवसितः सुखदुःखवाह्ये ।
हेतुत्वमसति कर्त्तरि दुःखयोर्यत्
स्वात्मन् विधत्त उपलब्धपरात्मकाष्ठः ॥
देहञ्च तं न चरमः स्थितमुत्थितं वा
सिद्धो विपश्यति यतोऽध्यगमत् स्वरूपम् ।
दैवादुपेतमथ दैववशादपेतं
वासो यथा परिकृतं मदिरामदान्धः" ॥

जीवन्मुक्तस्य देहाद्युपाधिवर्गस्य निवृत्तौ तत्र मनःसंयोगाभावात् कथं देहादेर्व्वर्त्तनमिति शङ्कयन् स्वारम्भकं प्रारब्धवीजमेवेत्यर्थः देहादेः स्थितिकारणमित्याह । तत्रैव ३ । २८ । ३८ ॥

"देहोऽपि दैववशगः खलु कर्म्म यावत्
स्वारम्भकं प्रतिसमीक्षत एव सासुः ।
तं सप्रपञ्चमधिरूढसमाधियोगः
स्वप्नं पुनर्न भजते प्रतिबुद्धवस्तुः" ॥

ननु यदि परब्रह्मज्ञानायात्मसाक्षात्कारात्तमेव चरमं देहं मन्यसे तर्हि विद्यैव सुगमोपायः श्रूयते 'तस्मिन् सति कथं वृथा कर्म्माडम्बरे प्रवर्त्तयसे इति चेत् न कर्म्मविद्ययोरधिकारिभेदात् आदावीश्वरार्पितकर्म्मणा निष्कामकर्म्मणा वा चित्तशुद्धिं विना कुतो विद्यायामधिकारः । इत्यत्राधिकारिभेदमुद्दिश्य ज्ञानकर्म्मणोः पृथक्त्वं प्रदर्शयन्नपि तत्त्वज्ञानमुपदिशन्तं भगवन्तं वासुदेवं पृष्टवान् जातसंशयोऽर्जुनः । यथा गीतायां ३ । १-२ ।

"ज्यायसी चेत् कर्म्मणस्ते मता बुद्धिर्जनार्द्दन ।
तत्किं कर्म्मणि घोरे मां नियोजयसि केशव ॥
व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम्" ॥

हे जनार्द्दन ! चेद्यदि ते कर्म्मणः सकाशात् बुद्धिर्बोधः ज्ञानमिति यावत् ज्यायसी गरीयसी मता तर्हि कथं मां घोरे कर्म्मणि नियोजयसीत्यन्वयः । व्यामिश्रेण ज्ञानकर्म्मणोर्मिश्रीभूतेन वाक्येन कथं मे बुद्धिं मोहयसीव । इत्येवं विविधोऽर्ज्जुनस्य संशयं निराकुर्व्वन्नाह भगवान् वा[illegible]देवः । तत्रैव ३ । ३-४ ॥

"लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयान[illegible]
ज्ञानयोगेन साङ्ख्यानां कर्म्मयोगेन योगिनाम् ।
न कर्म्मणामनारम्भान्नैष्कर्म्म्यं पुरुषोऽश्नुते ।
नच सन्न्यसनादेव सिद्धिं समधिगच्छति" ।

"अतः सम्यक्चित्तशुद्ध्यर्थं ज्ञानोत्पत्तिप[illegible] वर्णाश्रमोचितानि कर्म्माणि कर्त्तव्यानि अन[illegible] चित्तशुद्ध्यभावेन ज्ञानानुत्पत्तेरित्याह न कर्म्म[illegible]मिति । कर्म्मणां अनारम्भात् अननुष्ठानात् [illegible]ष्कर्म्म्यं ज्ञानं नाश्नुते न प्राप्नोति । ननु "चैत[illegible] प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" इति [illegible] संन्यासस्य मोक्षाङ्गत्वं तर्हि संन्यासादेव मो[illegible] भविष्यति किं कर्म्मभिरित्याशङ्क्योक्तं न चेति । चित्तशुद्धिं विना कृतात् संन्यसनादेव ज्ञानशू[illegible] सिद्धिं मोक्षं समधिगच्छति प्राप्नोति इति त[illegible] कारकृत् पूज्यपादश्रीधरस्वामी ।

ननु कामं ईश्वरार्पितेन निष्कामकर्म्मणा [illegible] शुद्धिः प्रजायते ततो ज्ञानं लब्ध्वा मोक्षमाप्नु[illegible] किन्तु भक्तिबलेनापि सत्त्वं संशोध्याचिरा[illegible] विद्याबन्धनात् मुक्तो भवेदित्यपि बहुत्र शा[illegible] दृश्यते । सर्व्वेभ्यो हि भक्तिमाहात्म्यस्याधिक[illegible] र्शितं महात्मभिरतो बहुप्रयाससाध्यं कर्म्मा[illegible] विहाय भक्तिपथाश्रयएव गरीयान्निश्रेयस[illegible] मिति चेन्न तदप्यधिकारिभेदेनोक्तत्वात् [illegible] दावर्च्चनादिक्रियायोगसाध्यत्वाच्च । किञ्च पुरा[illegible] निश्रेयसाय शास्त्रविहितमार्गत्रयं मुक्त्वा न[illegible] पन्थाः क्वापि दृश्यते श्रूयते वा । तथाहि श्रीम[illegible] गवते ११ । २० । ६-८ । तत्त्वजिज्ञासुमुद्धवं [illegible] यथोक्तवान् भगवान् वासुदेवः ।

"योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित[illegible]
ज्ञानं कर्म्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्र[illegible]
निर्व्विण्णानां ज्ञानयोगो न्यासिनामिह कर्म्म[illegible]
तेष्वनिर्व्विण्णचित्तानां कर्म्मयोगस्तु कामिनाम्
यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् ।
न निर्व्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धि[illegible]
यदृच्छया दैवगत्या । न निर्व्विण्णो न प्राप्तनिर्व्वे[illegible]

अतः सर्व्वत्रैव भिन्नभिन्नाधिकारमपेक्ष्य [illegible] कर्म्मभक्तियोगादयो विहिताः । यथा तत्रैव [illegible] २० अध्याये २६ ॥

"स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्त्ति[illegible]
कर्म्मणां जात्यशुद्धानां अनेन नियमः कृतः" [illegible]

यथा तत्त्वज्ञानार्थी निवृत्तवाचिककर्म्म[illegible] मतः केवलं अविद्याकर्म्मनिर्हारादीनुद्दिश्य [illegible] मकर्म्मानुष्ठानमाचरति न जातु[illegible]विशुद्ध[illegible] ऽधिरूढयोगो योगीव सहसा भेदशून्यादि[illegible] हातुमर्हति तथा प्रथमं सगुणभक्तियोगार्थ्य[illegible] ऽपि न हि युगपत् भगवत्स्वरूपतत्त्वज्ञा [illegible] भक्ता इव भगवत्प्रतिमाद्यर्च्चनादिक्रियायोगं त्यक्तुं समर्था भवेयुः किन्तु तादृशेन सगुण[illegible] योगावलम्बिना तुर्य्याधिकारिणा भगवद[illegible] पूजादिकर्म्मयोग एव कर्त्तव्यः इत्येतद[illegible]

…ग्राशक्तिः।

अथ यथाशास्त्रं निष्कृष्टसात्त्विककर्त्तुर्मन्दबुद्धिं …दर्श्य दुर्ब्बलाधिकारिणो भक्तियोगावलम्बिनः …र्त्तव्यमपि प्रदर्शयामः। यथा भागवते ३।२९।१०।

"कर्म्मनिर्हारमुद्दिश्य परस्मिन् वा तदर्पणम्।
…जेद्यष्टव्यमिति वा पृथग्भावः स सात्त्विकः"॥

दुर्ब्बलभक्तियोगाधिकारिकर्त्तव्यता च तत्रैव। …११।११।३४-४२।

"मल्लिङ्गमद्भक्तजनदर्शनस्पर्शनार्च्चनम्।
…रिचर्य्या स्तुतिः प्रह्वगुणकर्म्मानुकीर्त्तनम्॥
…त्कथाश्रवणे श्रद्धा मदनुध्यानमुद्धव।
…र्व्वलाभोपहरणं दास्येनात्मनिवेदनम्॥
…ज्जन्मकर्म्मकथनं मम पर्व्वानुमोदनम्।
…ीत-ताण्डव-वादित्र-गोष्ठीभिर्मद्गृहोत्सवः॥
…ात्रा बलिविधानञ्च सर्व्ववार्षिकपर्व्वसु।
…दिकी तान्त्रिकी दीक्षा मदीयव्रतधारणम्॥
…ममार्च्चास्थापने श्रद्धा स्वतः संहत्य चोद्यमः।
…द्यानोपवनाक्रीड़पुरमन्दिरकर्म्मणि॥
…ंमार्ज्जनोपलेपाभ्यां सेकमण्डलवर्त्तनैः।
…हशुश्रूषणं मह्यं दासवद्यदमायया॥
…मानित्वमदम्भित्वं कृतस्यापरिकीर्त्तनम्।
…पि दीपावलोकं मे नोपयुञ्ज्यान्निवेदितम्॥
…द्यदिष्टतमं लोके यच्चातिप्रियमात्मनः।
…त्तन्निवेदितं मह्यं तदानन्त्याय कल्पते॥
…र्य्योऽग्निर्ब्राह्मणो गावो वैष्णवः खं मरुज्जलम्।
…रात्मा सर्व्वभूतानि भद्र पूजापदानि च"॥

… भद्र! एतानि मम पूजास्थानानि। अधुना …स्मिन् स्थले केन यजेत इत्याह तत्रव ११।११। …३-४५।

"…र्य्ये तु विद्यया त्रय्या हविषाग्नौ यजेत माम्।
…ातिथ्येन तु विप्राग्रे गोष्वङ्ग यवसादिना॥
…ष्णवे बन्धुसत्कृत्या हृदि खे ध्याननिष्ठया।
…ायौ मुख्यधिया तोये द्रव्यैस्तोयपुरस्कृतैः॥
…ण्डिले मन्त्रहृदयैर्भोगैरात्मानमात्मनि।
…त्रज्ञं सर्व्वभूतेषु समत्वेन यजेत माम्"॥

… हृदि खे हृदयाकाशे॥ मुख्यधिया प्राणदृष्ट्या॥ …ष्णवे जलाञ्जलिप्रदानरूपतर्पणपूर्व्वकैर्द्रव्यैः॥ …स्थ- …ण्डिले भूमौ मन्त्रन्यासैः॥ भोगैरिति। देहे भोगै- …त्मानं एतैरन्नादिभिर्देहस्थपरमात्मानं यजेऽहं …त्वविद्याकर्म्मजनितं देहं बिभर्म्मीति चिन्तयेत्॥ …त्रज्ञमिति। सर्व्वभूतेषु क्षेत्रज्ञरूपेणावस्थितं …ठस्थब्रह्मचैतन्यस्वरूपं मां समत्वेन यजेत॥ •॥ …तेषु स्थानेषु तव कीदृग्रूपं ध्येयमित्यपेक्षायाह …त्रैव ११।११।४६-४७।

"…धिष्ण्येष्विति मद्रूपं शङ्खचक्रगदाम्बुजैः।
…क्तं चतुर्भुजं शान्तं ध्यायन्नर्च्चेत् समाहितः॥
…ष्टापूर्त्तेन मामेवं यो यजेत समाहितः।
…भते मयि सद्भक्तिं मत्स्मृतिः साधुसेवया"॥

…दा "मल्लिङ्गमद्भक्तजनदर्शनस्पर्शनार्च्चनम्" इत्या- …भ्य "लभते मयि सद्भक्तिम्" इत्यन्तैरेतैश्चतुर्दश- …भिर्द्वारकाभ्यासावृत्तभूतप्रतिमाद्यालम्बिन्या भक्ति- …योगवतोगिनिभिरपि सद्भक्तिलाभः प्रदर्शयामास

स्वयं भगवान्। सुतरां तदा दुर्ब्बलाधिकारिणा भक्तियोगाश्रयिणापि प्रथमे क्रियायोग एव कर्त्तव्यः इति बोध्यतेऽन्यथा चित्तशुद्ध्यभावात् ज्ञानं न लभेत इति तात्पर्य्यार्थः॥

ननु मा भूत्तत्त्वज्ञानं किन्तु शास्त्रविहितक्रिया-योगशून्यया भक्त्या क्रमेण निर्गुणाया भक्तेरुदयेनैव चरितार्थतेति चेन्न तयोस्तत्त्वज्ञाननिर्गुणभक्तियो-गयोर्लक्षणे नैक्यदर्शनात् उभयोरेवात्मसाक्षात्का-ररूपचरमफलत्वेनोक्तत्वाच्च। यथा श्रीमद्भागवते ३।२९।११-१२।

"मद्गुणश्रुतिमात्रेण मयि सर्व्वगुहाशये।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ॥
लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम्।
अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे"॥

ईदृग्भक्तिर्यदि बहुजन्मार्जितसुकृतिवशात् कस्या-पि कथञ्चिदुत्पद्येत तर्हि सालोक्यादिमुक्तिं साध-कान्तरैः प्रार्थनीयां भगवता स्वयं दीयमानामपि तादृग्भक्तो नेच्छतीति तन्निस्पृहतां दर्शयन्नाह। तत्रैव ३।२९।१३।

"सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः"॥

अपि च तत्त्वज्ञानिनो निर्गुणभक्तस्य च तयोः शब्दत एव भेदः न तु लक्षणतः यत उभावेव लक्षणादिना सर्व्वत्र एकाचारौ एकनिष्ठावेक-भावापन्नौ लक्ष्येते। यथा भागवते ११।११। २९-३२। भगवद्भक्तलक्षणमुपदिष्टवानुद्धवं प्रति भगवान्।

"कृपालुरकृतद्रोहस्तितिक्षुः सर्व्वदेहिनाम्।
सत्यसारोऽनवद्यात्मा समः सर्व्वोपकारकः॥
कामैरहतधीर्दान्तो मृदुः शुचिरकिञ्चनः।
अनीहो मितभुक् शान्तः स्थिरो मच्छरणो मुनिः॥
अप्रमत्तो गभीरात्मा धृतिमान् जितषड्गुणः।
अमानी मानदः कल्यो मैत्रः कारुणिकः कविः"॥

कविः क्रान्तदर्शी सर्व्वज्ञ इत्यर्थः।

"आज्ञायैवं गुणान् दोषान् मयादिष्टानपि स्वकान्।
धर्म्मान् सन्त्यज्य यः सर्व्वान् मां भजेत स सत्तमः॥
ज्ञात्वाज्ञात्वाथ ये वै मां यावान् यश्चास्मि यादृशः।
भजन्त्यनन्यभावेन ते मे भक्ततमा मताः"॥

तथा, ज्ञानिनोऽपि लक्षणं प्रदर्शयामास। यथा, तत्रैव ११।११।१२-१७।

"न तथा बध्यते विद्वांस्तत्र तत्रादयन् गुणान्।
प्रकृतिस्थोऽप्यसंसक्तो यथा खं सविताऽनिलः॥
वैशारद्येक्षयाऽसंगशितया छिन्नसंशयः।
प्रतिबुद्ध इव स्वप्नान् नानात्वाद् विनिवर्त्तते"॥
यस्य स्युर्वीतसङ्कल्पाः प्राणेन्द्रियमनोधियाम्।
वृत्तयः स विनिर्मुक्तो देहस्थोऽपि हि तद्गुणैः॥
यस्यात्मा हिंस्यते हिंस्रैर्येन किञ्चिद् यदृच्छया।
अर्च्यते वा क्वचित्तत्र न व्यतिक्रियते बुधः॥
न स्तुवीत न निन्देत कुर्व्वतः साध्वसाधु वा।
वदतो गुणदोषाभ्यां वर्ज्जितः समदृङ्मुनिः॥
न कुर्य्यान्न वदेत् किञ्चिन्न ध्यायेत् साध्वसाधु वा।
आत्मारामोऽनया वृत्त्या विचरेज्जडवन्मुनिः"॥

ननु भक्तिज्ञानयोश्चरमफलैकत्वेपि भक्तेः समधिक-प्रशंसादर्शनात् भक्तिरेव गरीयसीति चेत् न भक्ति-वत् ज्ञानस्यापि प्रशंसादर्शनात् आत्मसाक्षात्-कृतौ साक्षात्कारणत्वाच्च। यथा श्रीमद्भागवते ११।१९।१—५॥

श्रीभगवानुवाच।

"यो विद्याश्रुतसम्पन्न आत्मवाननुमानिकः।
मायामात्रमिदं ज्ञात्वा ज्ञानं च मयि संन्यसेत्॥
ज्ञानिनस्त्वहमेवेष्टः स्वार्थो हेतुश्च सम्मतः।
स्वर्गश्चैवापवर्गश्च नान्योऽर्थो मदृते प्रियः॥
ज्ञानविज्ञानसंसिद्धाः पदं श्रेष्ठं विदुर्मम।
ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्त्ति माम्॥
तपस्तीर्थं जपो दानं पवित्राणीतराणि च।
नालं कुर्व्वन्ति तां सिद्धिं या ज्ञानकलया कृता॥
तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव।
ज्ञानविज्ञानसम्पन्नो भज मां भक्तिभावितः"॥

किञ्च भगवद्गीतायां ४।३३-३९।

"श्रेयान् द्रव्यमयाद् यज्ञाज्ज्ञानयज्ञः परन्तप!।
सर्व्वं कर्म्माखिलं पार्थ! ज्ञाने परिसमाप्यते॥
तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः॥
यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव!।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि॥
अपि चेदसि सर्व्वेभ्यः पापिभ्यः पापकृत्तमः।
सर्व्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि॥
यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्ज्जुन!।
ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात् कुरुते तथा॥
न हि ज्ञानेन सदृशं पवित्रमिह विद्यते।
तत् स्वयं योगसंसिद्धः कालेनात्मनि विन्दति॥
श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति"॥

अतएव निर्गुणभक्तिज्ञानयोर्न कियदप्यन्तरं मन्यन्ते तत्त्वदृशः स्वरूपतस्तयोरेकात्मत्वात् अत-त्त्वदर्शिनोऽन्ये एवाविद्यामोहितत्वात् भिन्नदृशो भवन्ति॥ वरं भक्तियोगमुपदिश्योपसंहारे ज्ञान-विज्ञानसम्पन्ना भक्तिरेव ब्रह्मलब्धये सम्यक् हित-साधनीति प्रदर्शितवानुद्धवाय भगवान्। यथा भागवते ११।१८।४५-४६।

"भक्त्योद्धवानपायिन्या सर्व्वलोकमहेश्वरम्।
सर्व्वोत्पत्त्यप्ययं ब्रह्म कारणं मोपयाति सः॥
इति स्वधर्म्मनिर्णिक्तसत्त्वो निर्ज्ञातमद्गतिः।
ज्ञानविज्ञानसम्पन्नो न चिरात् समुपैति मां"।

निष्कामेणानुष्ठितभक्तिरेव शनैः शनैः सान्द्रत्वेन निर्गुणतां गच्छन्ती सती परमप्रेमानन्दरूपेण परिणमते सुतरां तदा स्वयं सान्द्रानन्दमयं तज्-ज्ञानं प्रकाशते। तयोर्हि तत्स्वरूपत्वात् न क्वापि निर्गुणभक्तिज्ञानयोगयोर्भेदः श्रूयते। यथा छा-न्दोग्ये "सत्यं ज्ञानमनन्तं ब्रह्म। आनन्दरूपममृतं यद् विभाति शान्तं शिवमद्वैतम्"। इति ज्ञाना-नन्दयोर्ब्रह्मस्वरूपत्वात् अतएव क्वचित् केनापि न पूर्णानन्दत्वेन परिणताया निर्गुणस्वरूपाया भक्ते-र्ज्ञानेन सह कियानपि भेदो दर्शयितुं शक्यते

स्वरूपतस्तयोरेकात्मत्वात्। परन्तु तत्त्वज्ञानोत्पादनक्षमा भक्तिरेवानुष्ठेया न तु संसारबन्धनकारिणी नश्वरफलदात्री अन्यभक्तिवत् सकामा भक्तिरेवानुमोदनीया तत्त्वदर्शिभिरिति बोध्यम्॥ यथा भागवते १।२।७।

"वासुदेवे भगवति भक्तियोगः प्रयोजितः।
जनयत्याशु वैराग्यं ज्ञानञ्च यदहैतुकम्"॥

विशेषतः प्रह्लादध्रुवयोरिव नित्यानित्यवस्तुवाप्तिदर्शनात्। असुरकुलजातोऽपि प्रह्लादः निष्कामभक्तियोगमाचरन् तत्प्रभावेन भ्रातृघ्नः पितृप्रयुक्तां बाधामतिक्रम्यात्मप्रसादलब्धं विमलानन्दस्वरूपं जीवन्मुक्तत्वं ततो निर्व्वाणमप्यवाप्तवान्। ध्रुवः पुनः स्वायम्भुवमनुवंशजातोऽपि विमातृवचनादीर्ष्यापरवशः सन् परमतत्त्वज्ञाद्देवर्षिनारदादप्युपदेशं लब्ध्वा अन्तःकामवीजं परिपुष्णन् कठोरतपसापि सकामभक्तियोगमनुष्ठाय कल्पस्थायिन ध्रुवाख्यलोकं लब्धवान् ततः गृहप्रत्यागमनकाले सहसा जातनिर्व्वेद आत्मधिक्कारेण मुहुरन्वशोचत्॥ इदानीं प्रदर्शयामो यथाक्रमं तयोः राजपुत्रयोः सकामनिष्कामभक्तियोगानुष्ठाननित्यानित्यफलम्॥

यथा, श्रीमद्भागवते। ४।९।२७-३५॥

"सोऽपि सङ्कल्पजं विष्णोः पादसेवोपसादितम्।
प्राप्य सङ्कल्पनिर्व्वाणं नातिप्रीतोऽभ्यगात् पुरम्॥

विदुर उवाच।

सुदुर्लभं यः परमं पदं हरेः
मायाविनस्तच्चरणार्च्चनार्ज्जितम्।
लब्ध्वाऽप्यसिद्धार्थमिवैकजन्मना
कथं स्वमात्मानममन्यतार्थवित्॥

मैत्रेय उवाच।

मातुः सपत्न्या वाग्बाणैर्हृदि विद्धस्तु तान् स्मरन्।
नैच्छन् मुक्तिपतेर्मुक्तिं तस्मात् तापमुपेयिवान्॥

ध्रुव उवाच।

समाधिना नैकभवेन यत् पदं
विदुः सनन्दादय ऊर्द्ध्वरेतसः।
मासैरहं षड्भिरमुष्य पादयो-
श्छायामुपेत्यापगतः पृथग्मतिः॥

अहोवत ममानात्म्यं मन्दभाग्यस्य पश्यत।
भवच्छिदः पादमूलं गत्वा याचे यदन्तवत्॥
मतिर्विदूषिता देवैः पतद्भिरसहिष्णुभिः।
यो नारदवचस्तथ्यं नाग्राहीषमसत्तमः॥
दैवीं मायामुपाश्रित्य प्रसुप्त इव भिन्नदृक्।
तप्ये द्वितीयेऽप्यसति भ्रातृभ्रातृव्यहृद्रुजा॥
मयैतत् प्रार्थितं व्यर्थं चिकित्सेव गतायुषि।
प्रसाद्य जगदात्मानं तपसा दुष्प्रसादनम्॥
भवच्छिदमयाचेऽहं भवं भाग्यविवर्जितः।
स्वाराज्यं यच्छतो मौढ्यान्मानो मे भिक्षितो वत॥
ईश्वरात् क्षीणपुण्येन फलीकारानिवाधनः"।

भगवता नृसिंहदेवेन प्रलोभ्यमानोऽपि प्रह्लादः निष्कामभक्तिज्ञानप्रभावेन किमपि नैच्छदिति धर्म्मनन्दनमजातशत्रुं युधिष्ठिरं श्रावयामास देवर्षिर्नारदः। यथा, भागवते। ७।९।५१-५५॥

"एतावद्वर्णितगुणो भक्त्या भक्तेन निर्गुणः।
प्रह्लादं प्रणतं प्रीतो यतमन्युरभाषत॥

श्रीभगवानुवाच।

प्रह्लाद भद्र भद्रं ते प्रीतोऽहं तेऽसुरोत्तम।
वरं वृणीष्वाभिमतं कामपूरोऽस्म्यहं नृणाम्॥
मामप्रीणत आयुष्मन् दर्शनं दुर्लभं हि मे।
दृष्ट्वा मां न पुनर्जन्तुरात्मानं तप्तुमर्हति॥
प्रीणन्ति ह्यथ मां धीराः सर्व्वभावेन साधवः।
श्रेयस्कामा महाभागाः सर्व्वासामाशिषां पतिम्॥
एवं प्रलोभ्यमानोऽपि वरैर्लोकप्रलोभनैः।
एकान्तित्वाद् भगवति नैच्छत्तानसुरोत्तमः"॥

तत्रैव ७।१०।१—५।

नारद उवाच॥

"भक्तियोगस्य तत् सर्व्वमन्तरायतयार्भकः।
मन्यमानो हृषीकेशं स्मयमान उवाच ह॥
मा मां प्रलोभयोत्पत्त्या सक्तं कामेषु तैर्वरैः।
तत्सङ्गभीतो निर्व्विण्णो मुमुक्षुस्त्वामुपाश्रितः॥
भृत्यलक्षणजिज्ञासुर्भक्तं कामेष्वचोदयत्।
भगवन् संसारवीजेषु हृदयग्रन्थिषु प्रभो!।
नान्यथा तेऽखिलगुरो! घटेत करुणात्मनः॥
यस्तु आशिष आशास्ते न स भृत्यः स वै वणिक्।
आशासानो न वै भृत्यः स्वामिन्याशिष आत्मनः॥
अहं त्वकामस्त्वद्भक्तस्त्वं च स्वाम्यनपाश्रयः।
नान्यथेहावयोरर्थो राजसेवकयोरिव"॥

अस्तु तस्य निस्पृहत्वादि किन्तु तत्त्वज्ञानं नासीदिति चेत् न यतः उपरिष्टादेव तत्त्वज्ञानमूलाया निर्गुणाया भक्तेर्लक्षणं प्रदर्शितं। यथा, भागवते ७।५।१३॥ हिरण्यकशिपुं प्रति प्रह्लादोक्तिः।

"स एष आत्मा स्वपरेत्य बुद्धिभि-
र्दुरत्ययानुक्रमणो निरूप्यते।
मुह्यन्ति यद्वर्त्मनि वेदवादिनो
ब्रह्मादयो ह्येष भिनत्ति मे मतिम्"॥

किञ्च तत्रैव ३१।

"न ते विदुः स्वार्थगतिं हि विष्णुं
दुराशया ये वहिरर्थमानिनः।
अन्धा यथान्धैरुपनीयमाना
वाचीशतन्त्र्यामुरुदाम्नि बद्धाः"॥

स्वार्थगतिमिति। स्वस्मिन् एवार्थो येषां ते स्वार्थास्तत्त्वज्ञानिनस्तेषां गतिर्ज्ञानस्वरूपस्तं। वहिरर्थमानिनः इति। वहिर्वाह्यवस्तुषु अर्थो येषां तान् गुरून् इति मन्यन्ते ये इति॥ ननु क्वचिदर्चादेर्निन्दापि लक्ष्यते यदा तदा तदुपासनं निष्फलमिति चेन्न। यतः सर्व्वतः साधुसङ्गलाभस्योत्कर्षः इति प्रदर्शयन् विशेषतः सर्व्वाभ्य उपासाभ्यः हृद्देशे आत्मध्यानमेव गरीय इत्येवोपदिदिशुः महान्तः शास्त्रकृतः। अन्यथा "मदर्चास्थापने श्रद्धा" "अर्च्चायामर्च्चयेत्तावत्" "यावन्न मे कथारतिः" इत्यादि वचनानां निष्फलत्वं स्यात्। दर्शितञ्च यथासम्भवमुपासनायां दुर्व्वलाधिकारिणां यत् यत् कर्त्तव्यं इदानीं सबलाधिकारिणां करणीयं यत्प्रशस्तपथं तदेव दर्शयामः समासेनेति। यथा, वृहदारण्यकश्रुतौ॥

"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो
ध्यासितव्यश्च"। अर्थात् आत्मैव साक्षात् क
साक्षात्कारे उपायमाह श्रवणं मननं निदि
सनञ्च किन्तत् श्रवणादि इति जिज्ञासायां
यथा। "श्रवणं नाम षड्विधलिङ्गैरशेषवेद
नामद्वितीये वस्तुनि तात्पर्य्यावधारणम्। लि
तु। उपक्रमोपसंहाराभ्यासाऽपूर्व्वताफला
दोपपत्त्याख्यानि। तत्र प्रकरणप्रतिपाद्यस्या
तदाद्यन्तयोरुपादानं उपक्रमोपसंहारौ।
छान्दोग्ये षष्ठप्रपाठके प्रकरणप्रतिपाद्यस्या
यवस्तुनः एकमेवाद्वितीयमित्यादौ "ऐतदात्म्य
सर्व्वम्"। इत्यन्ते च प्रतिपादनम्॥

प्रकरणप्रतिपाद्यस्य वस्तुनः तन्मध्ये पौनः
प्रतिपादनं अभ्यासः। यथा, तत्रैवाद्वितीय
नो मध्ये "तत्त्वमसीति" नवकृत्वः प्रतिपाद
प्रकरणप्रतिपाद्यस्य वस्तुनः प्रमाणान्त
विषयीकरणं अपूर्व्वत्वम्। यथा तत्रैवाद्वि
वस्तुनः तन्त्वौपनिषदं पुरुषं पृच्छामीत्या
उपनिषन्मात्रवेद्यत्वप्रतिपादनात्। मानान
विषयीकरणं फलन्तु प्रकरणप्रतिपाद्यस्य
ज्ञानस्य तदनुष्ठानस्य वा तत्र तत्र श्रूयमाणं
जनं यथा तत्रैव "आचार्य्यवान् पुरुषो वेद
तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्
इत्यद्वितीयवस्तुज्ञानस्य तत्प्राप्तिप्रयोजनं श्रू
प्रकरणप्रतिपाद्यस्य तत्र तत्र प्रशंसनं अर्थव
यथा, तत्रैव उततमादेशमप्राक्षो येनाश्रुतं
भवत्यमतं मतमविज्ञातं विज्ञातमित्यद्विती
प्रशंसनम्।

प्रकरणप्रतिपाद्यार्थसाधने तत्र तत्र श्रूय
युक्तिः उपपत्तिः"। यथा, तत्र "सौम्यैकेन
पिण्डेन सर्व्वं मृण्मयं विज्ञातं स्यात् वाचार
विकारो नामधेयं मृत्तिकेत्येव सत्यम्"। इ
वद्वितीयवस्तुसाधने विकारस्य वाचारम्भण
युक्तिः श्रूयते"। मननन्तु। "श्रुतस्याद्वितीयव
वेदान्तार्थानुगुणयुक्तिभिरनवरतमनुचिन्तनम्
"विजातीयदेहादिप्रत्ययरहिताऽद्वितीयवस्तु
तीयप्रत्ययप्रवाहः निदिध्यासनम्"॥ इति
न्तशास्त्रेषु॥

समाधिस्तु द्विविधः। सविकल्पको निर्व्विक
श्चेति। तत्र सविकल्पको नाम ज्ञातृज्ञा
विकल्पलयानपेक्षयाऽद्वितीयवस्तुनि तदा
कारितायाश्चित्तवृत्तेरवस्थानम्। तदा मृ
गजादिभानेऽपि मृद्भानवत् द्वैतभानेऽप्यद्वै
भासते॥

निर्व्विकल्पकस्तु ज्ञातृज्ञानादिभेदलयापेक्षया
तीयवस्तुनि तदाकाराकारिताया बुद्धिवृत्ते
तरामेकीभावेनावस्थानम्। तदा तु जला
कारितलवणानवभासेनाद्वितीयवस्तुमात्रमेवा
सते॥ इति वेदान्ते उपदिष्टं पूर्व्वर्षिभिः।
अतो ज्ञानलक्षणानि भगवद्गीतायां।१३।
"अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम्
आचार्य्योपासनं शौचं स्थैर्य्यमात्मविनिग्रहः।

न्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।
न मृत्यु-जरा-व्याधि-दुःख-दोषानुदर्शनम् ॥
सक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
त्यञ्च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥
यि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विक्तदेशसेवित्वमरतिर्जनसंसदि ॥
ध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
तज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा” ॥
तो ज्ञेयं वस्तु तत्रैवाध्याये । १२-१७ ॥
ज्ञेयं यत्तत् प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।
नादिमत् परं ब्रह्म न सत्तन्नासदुच्यते ॥
र्व्वतःपाणिपादन्तत् सर्व्वतोऽक्षिशिरोमुखम् ।
र्व्वतःश्रुतिमल्लोके सर्व्वमावृत्य तिष्ठति ॥
र्व्वेन्द्रियगुणाभासं सर्व्वेन्द्रियविवर्ज्जितम् ।
सक्तं सर्व्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥
हिरन्तश्च भूतानामचरं चरमेव च ।
क्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥
विभक्तञ्च भूतेषु विभक्तमिव च स्थितम् ।
तभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ानं ज्ञेयं ज्ञानगम्यं हृदि सर्व्वस्य विष्ठितम्” ॥
था च श्वेताश्वतरश्रुतौ आत्मज्ञानेनैव मुक्ति-
िति स्फुटं दर्शयामास । यथा,—
सर्व्वेन्द्रियगुणाभासं सर्व्वेन्द्रियविवर्ज्जितम् ।
र्व्वस्य प्रभुमीशानं सर्व्वस्य शरणं बृहत्” ॥

“आत्मा गुहायां निहितोऽस्य जन्तो-
रणोरणीयान् महतो महीयान् ।
तमक्रतुं पश्यति वीतशोको
धातुः प्रसादान्महिमानमीशम्” ॥

ानिर्व्वाणतन्त्रे च । ५ । ११ ॥
रे ब्रह्मणि विज्ञाते समस्तैर्नियमैरलम् ।
ालवृन्तेन किं कार्य्यं लब्धे मलयमारुते” ॥

नतु किमिदानीं वाग्भङ्ग्याऽद्वैतवादं संस्थाप-
ितुं प्रयतते इति चेत् दर्शयामः ।
था च श्रीविष्णुधर्म्मे,—
रात्मनो मनुष्येन्द्र विभागो हि न कल्पितः ।
ये तस्यात्मपरयोर्विभागाभाव एव हि ॥
ात्मा क्षेत्रज्ञसंज्ञोऽयं संयुक्तः प्राकृतैर्गुणैः ।
रैव विगतः शुद्धः परमात्मा निगद्यते ॥
ादिसम्बन्धवत्या क्षेत्रज्ञोऽहमविद्यया ।
ः पश्यति भेदेन ब्रह्मत्वात्मनि संस्थितम्” ।
ाहि श्वेताश्वतरश्रुतिभाष्यधृतवशिष्ठवचनं
पूर्व्वकं दर्शितम् । यथा,—
यदात्मा निर्गुणः शुद्धः सदानन्दोऽजरोऽमरः ।
ृतिः कस्य तात! स्यात् मोक्षो वाऽविद्यया विभो॥
ननाशे कथं तस्य जायते भगवान् यतः ।
ावत् सर्व्वमेतं मे वक्तुमर्हसि साम्प्रतम् ॥
स्यैव निष्कलस्य सदानन्दमयात्मनः ।
वच्छिन्नस्य जीवस्य संसृतिः कीर्त्त्यते बुधैः ।
एव हि भूतात्मा भूते भूते व्यवस्थितः ।
ा बहुधा चैव दृश्यते जलचन्द्रवत् ॥
ाकाशः सदात्मा जीवसंज्ञः सदा भवेत् ।”

तथा च शुकशिष्यो गौड़पादाचार्य्यः ॥
“यथैकस्मिन् घटाकाशे रजोधूमादिभिर्युते ।
न सर्व्वे सम्प्रयुज्यन्ते तद्वज्जीवाः सुखादिभिः” ॥
तस्मादद्वितीये परमात्मन्युपाधितो जीवेश्वरयो-
र्जीवानाञ्च परस्परं भेदव्यवस्थायाः सिद्धत्वाच्च
विशुद्धसत्त्वोपाधेरीश्वरस्याविशुद्धोपाधिजीवगताः
सुखदुःखमोहाज्ञानादयः ॥ तथा च भगवान्
पराशरः ।

ज्ञानात्मकस्यामलसत्त्वराशे-
रपेतदोषस्य सदा स्फुटस्य ।
किं वा जगत्यत्र समस्तपुंसा-
मज्ञातमस्यास्ति हृदि स्थितस्य” ॥

कथं तर्ह्यौपाधिकभेदेन बन्धमुक्त्यादिव्यवस्था सोपा-
धिकानां तेषां वा सोपाधिकेश्वरस्य वा स्वरूप-
स्येति इत्याशङ्क्य दृष्टान्तपूर्व्वकं व्यवस्थां दर्शयति ॥
“एकस्तु सूर्य्यो बहुधा जलाधारेषु दृश्यते ।
आभाति परमात्मा च सर्व्वोपाधिषु संस्थितः” ॥
“ब्रह्म सर्व्वशरीरेषु वाह्ये चाभ्यन्तरे स्थितम् ।
आकाशमिव भूतेषु बुद्ध्यावात्मा न चान्यथा” ॥
एवं सति यथा बुद्ध्या देहोऽहमिति मन्यते ।
‘अनात्मन्यात्मता भ्रान्त्या सा स्यात्संसारबन्धिनी’ ॥
सर्व्वैर्विकल्पैर्हीनस्तु शुद्धो बुद्धोऽजरोऽमरः ।
प्रशान्तो व्योमवद्व्यापी चैतन्यात्मा सकृत्प्रभुः ॥
धूमाभ्रधूलिभिर्व्योम यथा न मलिनीयते ।
प्राकृतैरपरामृष्टो विकारैः पुरुषस्तथा ॥
यथैकस्मिन् घटाकाशे जलैर्धूमादिभिर्युते ।
नान्ये मलिनतां यान्ति दूरस्थाः कुत्रचित् क्वचित् ॥
यथा द्वन्द्वैरनेकैस्तु जीवे च मलिनीकृते ।
एतस्मिन्नापरे जीवा मलिनाः सन्ति कुत्रचित्” ॥

परं ननु केवलं प्रकृतेः पृथग्रूपचैतन्यज्ञान-
मात्रेण ब्रह्मज्ञानं सम्भवितुमर्हति । यदि चैके
पण्डिताः पृथग्ज्ञानेनैव सिद्धिः स्यादिति मन्यन्ते
किन्तु नैव श्रुतय एवं परिचक्षते । यथा, श्वेताश्व-
तरोपनिषदि “ज्ञाज्ञौ द्वावजावीशानीशावजा
ह्येका भोक्तृभोग्यार्थयुक्ता अनन्तश्चात्मा विश्व-
रूपो ह्यकर्त्ता त्रयं यदा विन्दते ब्रह्ममेतत्” ॥
अतएव ब्रह्मजिज्ञासोर्योगिनः श्रुत्युपदिष्टब्रह्म-
तत्त्वविज्ञानेनैव मुक्तिः स्यात् अन्यथा भ्रमएव ।
यथा, तत्रैव “क्षरं प्रधानममृताक्षरं हरः
क्षरात्मानावीशते देवएकः । तस्याभिधानात्
योजनात् तत्त्वभावात् भूयश्चान्ते विश्वमाया-
निवृत्तिः ॥ ज्ञात्वा देवं सर्व्वपाशापहानिः क्षीणैः
क्लेशैर्जन्ममृत्युप्रहाणिः । तस्याभिध्यानात्तृतीयं देह-
भेदे विश्वैश्वर्य्य केवल आप्तकामः” ॥ परं योगा-
भ्यासादृते नैव कदाचित् तत्त्वज्ञानस्योत्पत्ति-
रिति श्रुतिस्मृत्यादीनां ज्ञानप्रतिपादकशास्त्रा-
णामुपदेशो दृश्यते यदि च पूर्व्वपूर्व्वप्रकरणे पुराण-
प्रभृतिविहितयोगादिमतं प्रदर्शितं तथापि तत्-
दृढ़ीकरणाय वैदिकमतमिदानीं प्रदर्शयामः । यथा
यजुर्व्वेदोक्तश्वेताश्वतरीययोगप्रकरणम् । ॐ“युञ्जा-
नः प्रथमम् मनस्तत्त्वाय सविता धियः ॥ अग्निं
ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥ १ ॥

युक्तेन मनसा वयं देवस्य सवितुः सवे सुवर्गेयाय
शक्त्यै ॥ २ ॥
युक्ताय मनसा देवान् सुवर्य्यतो धिया दिवं ।
बृहज्ज्योतिः करिष्यतः सविता प्रसुवाति तान् ॥ ३’

युञ्जते मन उत युञ्जते धियो
विप्रा विप्रस्य बृहतो विपश्चितः ॥
विहोत्रा दधे वयुना विदेक इत् ।
मही देवस्य सवितुः परिष्टुतिः ॥ ४ ॥

युजे वां ब्रह्म पूर्व्यं नमोभिः
विश्लोका यन्ति पथ्येव सूराः” ॥ ५ ॥
परन्तु आत्मज्ञानविशदीकरणाय दत्तसंहितैव
श्रेयसी जीवानामिति प्रदर्शयितुं भूयोऽप्यनुस-
रामः । यथा,
“ऊरुस्थोत्तानचरणः सव्ये न्यस्येतरं करम् ।
उत्तानं किञ्चिदुन्नाम्य मुखं विष्टभ्य चोरसा ॥
निमीलिताक्षः सत्त्वस्थो दन्तैर्दन्तानसंस्पृशन् ।
तालुस्थाचलजिह्वश्च संवृतास्यः सुनिश्चलः ।
संनिरुध्येन्द्रियग्रामं नातिनीचोच्छ्रितासनः ।
द्विगुणं त्रिगुणं वापि प्राणायाममुपक्रमेत्” ॥
किन्त्वेवं मा मन्यध्वं यत् गृहाश्रमित्याग अरण्यवा-
सादौ योगाभ्यासतत्त्वज्ञानादेः सुगमो भवेत्
इत्यत्र यथाह दत्तः सप्तमाध्याये ।
“लोको वशीकृतो येन येन चात्मा वशीकृतः ।
इन्द्रियार्थो जितो येन तं योगं प्रब्रवीम्यहं ॥
प्राणायामास्तथा ध्यानं प्रत्याहारस्तु धारणा ।
तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते ॥
नारण्यसेवनाद्योगो नानेकग्रन्थचिन्तनात् ।
व्रतैर्यज्ञैस्तपोभिश्च न योगः कस्यचित् भवेत् ॥
न च पद्मासनात् योगो न नासाग्रनिरीक्षणात् ।
न च शास्त्रातिरिक्तेन शौचेन स भवेत् क्वचित् ॥
न मौनमन्त्रकुहकैरनेकैः सुकृतैस्तथा ।
लोकयात्रावियुक्तस्य योगो भवति कस्यचित् ॥
अभियोगात् तथाभ्यासात् तस्मिन्नेव तु निश्चयात् ।
पुनः पुनश्च निर्व्वेदाद् योगः सिध्यति नान्यथा” ॥
अतएव निर्व्वेदादृते केवलं तपःस्वाध्यायादिभिर्न
योगसिद्धिः शास्त्रकृद्भिरनुमोदनीया । किन्तु
आदरनैरन्तर्य्येण आत्मचिन्तादयएव ब्रह्मलब्धेः
सदुपाया इति बोध्यम् यथा तत्रैव ।
“आत्मचिन्ताविनोदेन शौचक्रीड़नकेन च ।
सर्व्वभूतसमत्वेन योगः सिध्यति नान्यथा ॥
यश्चात्मनि रतो नित्यमात्मक्रीड़स्तथैव च ।
आत्मनिष्ठश्च सततमात्मन्येव स्वभावतः ॥
रतश्चैव स्वयं तुष्टः सन्तुष्टो नान्यमानसः ।
आत्मन्येव सुतृप्तोऽसौ योगस्तस्य प्रसिध्यति ॥
सुप्तोऽपि योगयुक्तः स्याज्जाग्रच्चापि विशेषतः ।
ईदृक्चेष्टः स्मृतः श्रेष्ठो गरिष्ठो ब्रह्मवादिनाम्” ॥

परन्तु विषयासक्तिवर्ज्जनं विना क्वापि कस्य-
चिदपि आत्मसिद्धिर्न प्रजायते । यथा तत्रैव,—
“य आत्मव्यतिरेकेण द्वितीयं नैव पश्यति ।
ब्रह्मीभूय स एवं हि दत्तपक्ष उदाहृतः ॥
विषयासक्तचित्तो हि यतिर्मोक्षं न विन्दति ।
यत्नेन विषयासक्तिं तस्माद् योगी विवर्ज्जयेत्” ॥

यदि च केचित् विषयेन्द्रियसंयोगैः सिद्धिर्भवेत् इति वदन्ति तत्र तेषां भ्रान्तिरेव सा यथा तत्रैव,

"विषयेन्द्रियसंयोगं केचित् योगं वदन्ति हि ।
अधर्म्मो धर्म्मबुद्ध्या तु गृह्यते तैरपण्डितैः" ॥ इति ॥

यदि चाद्वैततत्त्वज्ञानमेव सर्व्वतो निःश्रेयसकरं जीवानामित्यश्रेषतः प्रदर्शितम् किन्तु दुर्ब्बलसबलाद्यधिकारिभेदेन यथाक्रमं क्रियाभक्तिज्ञानयोगादयः सन्निवेशिता इत्यलमतिपल्लवितेन ॥*॥)

उपासितः, त्रि, (उप + आस + क्त ।) कृतोपासनः । तत्पर्य्यायः । वरिवसितः २ वरिवस्थितः ३ उपचरितः ४ । इत्यमरः ॥

उपास्तिः, स्त्री, (उप + आस + क्तिन् ।) सेवा । इति हेमचन्द्रः ॥ (यथा, मुग्धबोधे कारकप्रकरणे ७ ।
"मुक्तिर्नत्र्यैऽच्युतोपास्तिं भूतं भूतमभि प्रभुः" ॥)

उपाहितः, पुं, (उप आसन्नं आहितं फलं यस्य ।) अग्न्युत्पातः । स तु उल्कापातादिः । इत्यमरः ॥

उपाहितः, त्रि, (उप + आ + धा + क्त ।) संयोजितः । इत्यमरः ॥ आरोपितः । इति मेदिनी ॥

उपेक्षणं, क्ली, (उप + ईक्ष् + भावे ल्युट् ।) वर्ज्जनम् । त्यजनम् ॥ (यथा, महाभारते ३ । हनुमद्भीमसंवादे १५० । ४२ ।
"साम्ना दानेन भेदेन दण्डेनोपेक्षणेन च ।
साधनीयानि कार्य्याणि समासव्यासयोगतः" ॥)

उपेक्षा, स्त्री, (उप + ईक्ष् + अ + टाप् ।) अस्वीकारः । त्यागः । (औदासीन्यम् । यथा, रघुः १४ । ६५ । "कुर्य्यामुपेक्षां हतजीवितेऽस्मिन्" ।) युद्धविषये तु युद्धोपायः । "मायोपेक्षेन्द्रजालानि क्षुद्रोपाया इमे त्रयः" । इति हेमचन्द्रः ॥

उपेन्द्रः, पुं, (इन्द्रमुपगतः । कश्यपात्तेषे अदितौ वामनावतारे इन्द्रस्यानन्तरं जातत्वात् तथात्वम् ।) विष्णुः । इत्यमरः ॥ (उपेन्द्रस्यापरां व्युत्पत्तिमाह हरिवंशे ७५ । ४६ ।
"ममोपरि यथेन्द्रस्त्वं स्थापितो गोभिरीश्वरः ।
उपेन्द्र इति कृष्ण त्वां गास्यन्ति दिवि देवताः" ॥
तथा च भागवते ८ । २३ । २१, २२, २३ ।
"कश्यपस्यादितेः प्रीत्यै सर्व्वभूतभवाय च ।
लोकानां लोकपालानामकरोत् वामनं पतिम् ॥
वेदानां सर्व्वदेवानां धर्म्मस्य यशसः श्रियः ।
मङ्गलानां व्रतानां च कल्पं स्वर्गापवर्गयोः ॥
उपेन्द्रं कल्पयाञ्चक्रे पतिं सर्व्वविभूतये ।
तदा सर्व्वाणि भूतानि भृशं मुमुदिरे नृप !" ॥)

उपोढः, त्रि, (उप समीपे उह्यते स्म । उप + वह + क्त ।) निकटः । (यथा, किराते १३ । २३ "तदुपोढनभश्चरः पृथक्" ।) विवाहितः । इति मेदिनी ॥ (व्यूढः । विन्यस्तः । यथा शाकुन्तले ७म अङ्के,—
"उपोढशब्दा न रथाङ्गनेमयः
प्रवर्त्तमानं न च दृश्यते रजः" ॥)

उपोढः, पुं, (उप + वह + क्त ।) व्यूहः । इति धरणी ॥

उपोती, स्त्री, (उयते स्म या । उप + वे + क्त + ङीप् । पचादिषु वयनसादृश्यादस्य तथात्वम् ।) पूतिका । इति शब्दरत्नावली ॥ ("द्वादश्यामुपोतीं त्यक्त्वा पारणं कुर्य्यात्" । इति स्मृतिः ॥)

उपोदकी, स्त्री, (उपगता उदकम् । रसप्राधान्यात् । गौरादित्वात् ङीष् ।) पूतिका । पूँइशाक इति भाषा । तत्पर्य्यायः । कलम्बी २ पिच्छिला ३ पिच्छिलच्छदा ४ मोहनी ५ मदशाकः ६ विशाला ७ वल्लिपोदकी ८ । अस्या गुणाः । कषायत्वम् । उष्णत्वम् । कटुत्वम् । मधुरत्वम् । निद्रालस्यरुचिविष्टम्भश्लेष्मकारित्वञ्च । इति राजनिर्घण्टः ॥ (यथा, एकादशीतत्त्वे द्वादशीनियमे कूर्म्मपुराणधृतवचनम् ।
"द्वादश्यां पारणं कुर्य्यात् वर्जयित्वाप्युपोदकीम्" ॥)

उपोदिका, स्त्री, (उपाधिकमुदकमस्याम् । उत्तरपदस्य चैतुत्तरपदस्योदादेशः । कप् । टाप् ।) पूतिका । इत्यमरः ॥ अस्या गुणाः । सारकत्वम् । स्निग्धत्वम् । बलश्लेष्मकारित्वम् । हिमत्वञ्च । इति राजवल्लभः ॥ (यथा, वैद्यके ।
"तण्डुलैरामतव्याजैः संयोगे उपोदिका" ।
"मदघ्नी चाप्युपोदिका" ।
इति सूत्रस्थाने ६ अध्याये वाभटेनोक्तम् ॥
"उपोदिकादधिभ्यान्तु सिद्धा मदविनाशिनी" ।
इति चरके सूत्रस्थाने २ अध्याये ॥
"स्वादुपाकरसा वृष्या वातपित्तमदापहा ।
उपोदिका सरा स्निग्धा बल्या श्लेष्मकरी हिमा" ॥
इति सुश्रुते सूत्रस्थाने ४६ अध्यायः ॥)

उपोदीका, स्त्री, पूतिका । इति भरतः द्विरूपकोषश्च ॥

उपोद्घातः, पुं, (उप समीपे उद्धननम् । उप + उत् + हन् + घञ् ।) उदाहरणम् । इत्यमरः ॥ आरम्भः । इति भरतः ॥ सङ्गतिविशेषः । यथा,—
"सप्रसङ्ग उपोद्घातो हेतुतावसरस्तथा ।
निर्व्वाहकैककार्य्यत्वे षोढा सङ्गतिरिष्यते" ॥
तल्लक्षणं यथा,—
"चिन्तां प्रकृतसिद्धार्थामुपोद्घातं विदुर्बुधाः" ।
इत्यनुमितौ जगदीशतर्कालङ्कारः ॥

उपोषणं, क्ली, (उप + उष् दाहे + ल्युट् ।) उपवासः । इति त्रिकाण्डशेषः ॥ (यथा, तिथितत्त्वे ।
"उपोषणं नवम्यान्तु दशम्यामेव पारणम्" ।
विवृतिरस्तु उपवासशब्दे द्रष्टव्या ॥)

उपोषितं, क्ली, (उप + वस + भावे क्त ।) उपवासः । इत्यमरटीकायां भरतः ॥ (यथा, मनुः । ५ । १५५ ।
"नास्ति स्त्रीणां पृथक् यज्ञो न व्रतं नाप्युपोषितम्" ॥

उपोषितः, त्रि, (उपोष्यते स्म । उप + वस + कर्त्तरि + क्त ।) कृतोपवासः । यथा,—
"उपोषितो द्वितीयेऽह्नि पूजयेत् पुनरेव ताम्" ।
इति दुर्गोत्सवप्रकरणे तिथ्यादितत्त्वम् ॥
(यथा रघौ २ १९ ।
"पपौ निमेषालसपक्ष्मपङ्क्ति-
रुपोषिताभ्यामिव लोचनाभ्याम्" ॥)

उप्तः, त्रि, (उप्यते स्म यः क्षेत्रादिषु । वप् + क्त ।) कृतवपनः । बोना इति भाषा । यथा,—
"तदैव धनुषा इववः स रथो ह्रयाश्चो
सोऽहं रथी नृपतयो यत आनमन्ति ।
सर्व्वं क्षणेन तदभूदसदीशरिक्तं

भस्मन् हुतं कुहकराद्धमिवोप्तमूष्याम्" ।
इति श्रीभागवते १ स्कन्धे १५ । २१ ॥
श्रीकृष्णवियोग एवात्र हेतुः यस्य इत्यत्र ...
यतो येन ईशेन रिक्तं शून्यं अ...
सम्बन्धविधानेऽपि भस्मनि हुतमिव ...
लुप्तसप्तम्यन्तं पदम् । अतिमौनादपि कु...
यामिनः सकाशाद्राद्धं लब्धं यथा । ...
दिनापि उषरभूमौ उप्तं बीजमिव" । इति ...
कायां श्रीधरस्वामी ॥ * ॥ कृतमुण्डनम् । ...
"सशिरस्कं वपनं कार्य्यमाक्षामाद्रुपावरि...
इति कात्यायनकृतच्छन्दोगपरिशिष्टेऽप्येवम् ...
कश्रुतिमूलकत्वात् । तदुप्तपारस्करीये । ...
शिरसमिति सूत्रेऽपि तथैवार्थः तद्भा...
हरिशर्म्मणापि परि सर्व्वतोभावेनाप्ति...
मुण्डितशिरसमिति व्याख्यातम्" । इति ...
श्चित्ततत्त्वम् ॥

उप्तकृष्टं, त्रि, ( आदौ उप्तं पश्चात् कृष्टम् । कालेति समासः ।) बीजवपनानन्तरकर्षित... तत्पर्य्यायः । बीजाकृतम् २ । इत्यमरः ।

उब्ज, श आर्ज्जवे । इति कविकल्पद्रुमः ॥ (तुदा... अकं-सेट् ।) ऋस्वादिः । ओष्ठ्यवकारो... तेन ओभयतीति दीर्घो न स्यात् । स्वादौ... इति उब्जिजिषति । ऊर्ध्वौष्ठ्यादिर्दीर्घपाठसाम... स्वरादिने दीर्घ इति केचित् । दन्त्यवका... उब्जतीत्यत्र दीर्घ इत्यप्येके । श उब्जति उब्... आर्ज्जवमवक्रीभावः । उब्जति साधुरवक्रः स्... तयोः । इति दुर्गादासः ॥ (यथा, ऋग्वेदे । २ । १ ॥ "उब्जन्तु तं सुभ्वः पर्व्वतासो निरि... मतियाजस्य यष्ट" ॥)

उभ, श पूर्त्तौ । इति कविकल्पद्रुमः ॥ (तुदा... सकं-सेट् ।) ऋस्वादिः । श उभति कुम्भं... लोकः । उवोभ । इति दुर्गादासः ॥

उभयः, त्रि, ( उभौ अवयवौ अस्य । उभ +... उभादुदात्तो नित्यमिति । ५ । २ । ४४ । ... ऽयजादेशः । कथमुभये देवमनुष्या इति ... बहूनामुभावयवौ न घटतः । नैष दोषः । ... द्वौ राशी समुदायस्यावयवौ । एको देवानां ... मनुष्याणामिति । उभादुदात्तो नित्यमिति ... ग्रहणस्येदं प्रयोजनं वृत्तिविषये उभशब्दा... माभूत् उभयशब्दस्यैव यथा स्यादिति ।) ... इति शब्दचन्द्रिका ॥ दुइ इति भाषा । ( मनुः । २ । ५५ ॥
"पूजितं ह्यशनं नित्यं बलमूर्जञ्च यच्छति ।
अपूजितन्तु तद्भुक्तमुभयं नाशयेदिदम्" ।)

उभयतः, [ स् ] व्य (उभयस्मात् । उभय + तसि...) पार्श्वद्वये । उभयपार्श्वे । इति शब्दार... (यथा, मनुः । ८ । ३१५ ।
"शक्तिश्चोभयतस्तीक्ष्णामायसं दण्डमेव वा" ...

उभयद्युः, [ स् ] व्य, ( उभयोरह्नोः । ... दशश्च इति साधुः । ) उभयदिनम् । दिन... इत्यमरः ॥ (यथा, अथर्ब्ववेदे । १ । २५ । ...
"यो अन्येद्युरुभयद्युरभ्येति" ॥)

:, [ स् ] च ( उभयोरह्नोः । सद्यःपरुदित्यादिषु निपातितः ।) उभयदिनम् । इत्य- ॥ (यथा, ऐतरेयब्राह्मणे । ५ । २९ ।
"अग्निहोत्रमुभयेद्युरजुहवत" ॥)

, (उष् शब्दे + डुम् ।) रोषः । अङ्गीकारः । । इति मेदिनी ॥ क्रोधवर्जितः । इति शब्द- वली ॥

स्त्री, ( उ भो मा तपस्यां कुर्व्विति । यथा, ेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां ुखी जगाम" । इति कुमारोक्तेः । यद्वा ओर्ह- मा लक्ष्मीरिव । उं शिवं माति मिमीते वा । तोऽनुपसर्गेति कः । अजादित्वात् टाप् । अवति ते वा उष् शब्दे "विभाषा तिलमाषो मेति" । २ । ४ । निपातनात् मक् ॥ ) दुर्गा । (यथा, ारे । ३ । ६७ ।
"उमामुखे बिम्बफलाधरोष्ठे
व्यापारयामास विलोचनानि" ॥)
स्री । कीर्त्तिः । हरिद्रा । कान्तिः । इति ली ॥ शान्तिः । इति शब्दरत्नावली ॥ तन्नाम- ात्तिर्यथा ।
तो हि तपसे पुत्रि वनम् गन्तुञ्च मेनका ।
ति तेन सोमेति नाम प्राप तदा सती" ॥
। कालिकापुराणे ४२ अध्यायः ॥

टः, पुं, ( उमाया रजः । उमा "अलाबूति- नामभङ्गाभ्यो रजस्युपसंख्यानम्" इति कटच् ।) ाधूलिः । इति व्याकरणम् ॥ मसिनार धूला भाषा ।

रुः, पुं, ( उमाया गुरुः पिता । सती दक्ष- शिवनिन्दाश्रवणात् योगविमुक्तदेहा हिमा- त् मेनकागर्भे सम्भूतेति पौराणिकी कथात्रानु- ेया ।) हिमालयपर्व्वतः । इति त्रिकाण्डशेषः ॥

तुर्थी, स्त्री, (उमायाश्चतुर्थी । उमाजन्मतिथि- स्याः तथात्वम् । ज्यैष्ठशुक्लचतुर्थी । यथा,
ष्ठशुक्लचतुर्थ्यान्तु जाता पूर्व्वमुमा सती ।
ात् सा तत्र संपूज्या स्त्रीभिः सौभाग्यवृद्धये" ॥
संवत्सरकौमुदीधृतब्रह्मपुराणवचनम् ॥

तिः, पुं, (उमायाः पतिः ।) शिवः । इत्यमरः ॥ था, महाभारते १४ । संवर्त्तमरुत्तीये । ८ । १ प्यते तत्र भगवान् तपो नित्यमुमापतिः" ॥)

नं, क्ली, (उमायाः प्रीतये वनमिव ।) पुर- ेषः । तत्पर्य्यायः । देवीकोटः २ कोटीवर्षम् ३ पुरं ४ शोणितपुरं ५ । इति हेमचन्द्रः ॥

तः, पुं, (उमायाः सुतः पुत्त्रः ।) कार्त्तिकेयः । ि हेमचन्द्रः ।

, पुं, (उमाया ईशः पतिः ।) महादेवः । इति मचन्द्रः ॥

, पुं, ( उम् इत्यव्यक्तशब्दं ददातीति । उम् र + अच् ।) दारोर्द्धकाष्ठम् । तत्पर्य्यायः । शावयष्टी २ देहली ३ अम्बरः ४ उदुम्बरः ५ । ि हेमचन्द्रः । (गन्धर्व्वविशेषः । यथा, हरि- े पारिजातहरणे । १२६ । १४ ।
म्बरतुम्बुरुश्चैव जग्मुरन्ये च गन्धकाम्" ॥)

उम्बी, स्त्री, (उम् क्रोधवर्ज्जितं स्वभावं वाति प्राप्नो- तीति । उम + वा + क । पृषोदरादित्वात् वस्य बः ।) अर्द्धपक्वहव्यानलसंभ्रष्टयवगोधूममञ्जरी । अस्या गुणाः । कफप्रदत्वम् । बलकारित्वम् । लघुत्वम् । पित्तानिलापहत्वञ्च । इति भावप्रकाशः ॥

उम्भ, प श पूर्त्तौ इति कविकल्पद्रुमः । ( तुदा-परं- सकं-सेट् । ) उन्भ इति च पाठः ॥

उम्यं, क्ली, (उमाया अतस्या हरिद्राया वा क्षेत्रम् । उमा + "विभाषा तिलमाषोमाभङ्गाणुभ्यः" । ५।२।४। इति यत् ।) औमीनम् । अतसीक्षेत्रम् । हरिद्राक्षेत्रञ्च । इति भरतो द्विरूपकोषश्च ॥

उर, गतौ । सौत्रधातुरयम् । इति कविकल्पद्रुमः । (परं-सकं-सेट् ।) पञ्चमस्वरादिः । उरतः । इति दुर्गादासः ॥

उरः, [ स् ] क्ली, (इयर्त्ति । ऋ गतौ । "अर्त्तेरुच" ।४।१९४ इति उणादिसूत्रेण असुन् उरादेशः किच्च ।) वक्षःस्थलम् । इत्यमरः ॥
(यथा, रघुः १० । १० ।
"कौस्तुभाख्यमपां सारं बिभ्राणं बृहतोरसा" ।
तथा, माघे ७।२२।
"उरसि सरसपादलेखा
प्रतिमतयानुययावसंशयाना:" ॥)
तत्पर्य्यायः । वक्षः २ वत्सम् ३ क्रोड़म् ४ हृत् ५ भुजान्तरम् ६ । इति राजनिर्घण्टः ॥

उरः [ स् ] त्रि, (ऋ + असुन् + उरादेशः किच्च ।) उत्तमः । श्रेष्ठः । इति मेदिनी ॥

उरःसूत्रिका, स्त्री, (उरसः सूत्रमिव । इवे प्रति- कृताविति कन् ।) मुक्ताहारचितहारः । इत्यमरः ॥

उरगः, पुं, । (उरसा गच्छतीति । उरसो लोपश्चेति डप्रत्ययः सकारलोपश्च ।) सर्पः इत्यमरः ॥ (अङ्गुलीवोरगक्षता" । इति रघुः १ । २८ ।) सीसकम् । इति राजनिर्घण्टः ॥

उरगस्थानं, क्ली, (उरगाणां सर्पाणां स्थानम् ।) पातालम् । इति शब्दरत्नावली ॥

उरगाशनः, पुं, (उरगान् सर्पान् अश्नातीति । उरग + अश् + ल्यु ।) गरुड़पक्षी । इति जटाधरः ॥ ("स्वावासभागमुरगाशनकेतुयष्ट्या" । इति माघः । ५ । १३ ॥)

उरङ्गः, पुं, (उरसा गच्छतीति । उरस् + गम् + ड । निपातनात् सिद्धम् ।) उरङ्गमः । इत्यमरटीकायां रायमुकुटः ॥

उरङ्गमः, पुं, स्त्री, (उरसा गच्छतीति । उरस् + गम् + खच् ।) सर्पः । इति व्याकरणम् ॥

उरणः, पुं स्त्री, (ऋ + "अर्त्तेः क्युरुच" ।५।१७। इति उणादिसूत्रेण क्युच् उत्वं रपरत्वञ्च ।) मेषः । इत्यमरः ॥ (यथा, ऋग्वेदे २ । १४ । ४ । "यः उरणं जघान नवचखांसं नवतिञ्च बाहून्" ।
तथा हरिवंशे २६ । २९ ।
"उत्कृष्टावरणौ दृष्ट्वा रौजा महागतो महम् ॥)
मेघः । इति उणादिकोषः ॥

उरणाक्षः, पुं, (उरणस्य मेषस्याक्षीवाक्षि यस्य । तत्तुल्यपुष्पत्वात् तथात्वम् । अच्प्रत्ययोदर्शनादित्यच् ॥) हस्तविशेषः । एड़ाँचि इति भाषा । चाकुन्दा इति केचित् । तत्पर्य्यायः । प्रपुन्नाड़ः २ एड़गजः ३ दद्रुघ्न ४ चक्रमर्द्दकः ५ पद्माटः ६ । इत्यमरः ॥ उर- णाख्यः ७ प्रपुन्नडः ८ प्रपुनाड़ः ९ । इति तट्टीका ॥ (अस्य गुणादय एड़गजशब्दे ज्ञातव्याः ॥)

उरणाक्षकः, पुं, (उरणाक्ष + स्वार्थे कन् ।) उरणाक्ष- वृक्षः । इति शब्दरत्नावली ॥

उरणाख्यः, पुं, (उरणस्य मेषस्य आख्या इव आख्या यस्य ।) दद्रुघ्नवृक्षः । इत्यमरटीकायां स्वामी ॥

उरणाख्यकः, पुं, (उरणाख्य + स्वार्थे कन् ।) दद्रुघ्न- वृक्षः । इति शब्दरत्नावली ॥

उरभ्रः, पुं, स्त्री, (उरु कठोरं भ्रमति । भ्रमु चलने । अन्येभ्योऽपीति डः । पृषोदरादित्वात् साधुः ।) मेषः । इत्यमरः ॥ (मेषशब्देऽस्य गुणादिकं ज्ञेयम् ॥)

उररी, अ, (ऋ + बाहुलकात् ररीक् । सम्प्रसारणञ्च ।) स्वीकारः । विस्तारः । इत्यमरः । (यथा, साहित्य- दर्पणे २य परिच्छेदे । "इति काल्पनिकं भेद- मुररीकृत्य" ॥)

उररीकारः, पुं, (उररीकरणम् । उररी + कृ + घञ् ।) अङ्गीकारः । इति जटाधरः ॥

उररीकृतः, त्रि, (उररी + कृ + क्त ।) अङ्गीकृतः । विस्तृतः । इत्यमरः ॥

उरश्छदः पुं, (उरो वक्षःस्थलं छाद्यतेऽनेनेति । उरस + छद + घ ।) कवचः । इत्यमरः ॥ (रामायणे ३ काण्डे । "काञ्चनोरश्छदाश्चेमे पिशाचवदनाः खराः ॥)

उरसिजः, पुं, (उरसि वक्षःस्थले जायते । उरस् + जन् + ड । सप्तम्या अलुक् ।) स्तनः । इति हलायुधः ॥ (यथा, रामायणे ।)
"परिपस्पृशिरे चैनं पीनैरुरसिजैर्भुजैः" ॥)

उरसिलः, त्रि, (प्रशस्तं अतिशयितं वा उरो वक्षो यस्य । उरस् + इलच् ।) प्रशस्तवक्षोयुक्तः । इत्य मरः ॥

उरस्कटः, पुं, (उरः कट्यतेऽनेन । उरस् + कट् + क ।) वामयज्ञोपवीतकम् । वुकवाक्षाड़ इति ख्यातम् । पञ्चवटश्च तत्पर्य्यायः । इति त्रिकाण्डशेषः ॥

उरस्त्राणं, क्ली, (उरसस्त्राणं भवत्यस्मात् ।) वक्ष- स्त्राणकवचम् । तत्पर्य्यायः । नागोदरम् २ । इति हारावली ॥

उरस्यः, त्रि, (उरसा निर्म्मितः । उरस् + यत् ।) औरसजातः । इत्यमरः ॥

उरस्वान्, [ त् ] त्रि, ( प्रशस्तमतिशयितं वा उरो वक्षःस्थलं यस्य । उरस् + मतुप् + मस्य वः ।) प्रशस्तवक्षोयुक्तः । तत्पर्य्यायः । उरसिलः २ । इत्यमरः ॥

उरी, अ, (वयतेरीक् बाहुलकात् सम्प्रसारणञ्च ।) स्वीकारः । विस्तारः । इत्यमरः ॥
(यथा रघौ १५ । ७० ।
"उरीकृत्यात्मनो देहं राज्यमस्मै न्यवेदयत्" ॥)

उरीकृतः, त्रि, (उरी + कृ + क्त ।) अङ्गीकृतः । वि- स्तृतः । इत्यमरः ॥

उरुः, त्रि, (उर्व्वति । ऊर्ब्बु + "महति ह्रस्वश्च"

लक्षणं यथा, सुश्रुते चिकित्सितस्थाने ३० अः।

"छत्रासर्पस्वरूपेण वाराहीकन्दसम्भवा।
एकपत्रा महावीर्य्या भिन्नाञ्जनसमप्रभा॥
छत्रातिच्छत्रके विद्याद्रक्षोघ्ने कन्दसम्भवे॥")

छत्राकं, क्ली, (छत्रा इव कायतीति। कै+कः।) किम्याकुः। छत्रिका। इति प्रायश्चित्तविवेकः॥ (यथा, मनुः। ५। १९।
"छत्राकं विड्वराहञ्च लसुनं ग्रामकुक्कुटम्।
पलाण्डुं गृञ्जनञ्चैव मत्या जग्ध्वा पतेद्द्विजः॥")

छत्राकः, पुं, (छत्रमिव अकति आच्छादकत्वं गच्छतीति। छत्र+अक्+अच्।) जलवर्व्वूरकवृक्षः। इति राजनिर्घण्टः॥

छत्राकी, स्त्री, (छत्राक+गौरादित्वात् ङीष्।) रास्ना। इत्यमरः। २। ४। ११५॥

छत्रातिच्छत्रः, पुं, (छत्रमतिक्रम्य छदति आच्छादयतीति। अति+छद्+ष्ट्रन्।) छत्राकारजलोद्भवसुगन्धाख्यतृणविशेषः। तत्पर्य्यायः। छत्रातिच्छत्रा २ पालघ्नः ३ अतिच्छत्रा ४ सुगन्धा ५ छत्रकः ६ कटुकः ७ कटुः ८। इति शब्दरत्नावली॥

छत्राधान्यं, क्ली, (छत्रा धान्यमिव।) धन्याकम्। इति राजनिर्घण्टः॥

छत्रिका, स्त्री, (छत्रा एव। छत्रा+स्वार्थे कन्। अत इत्वञ्च।) शिलीन्ध्रम्। कोँड़कछाता इति भाषा॥ तत्पर्य्यायः। गोमयच्छत्रिका २ दिलीरम् ३ शिलीन्ध्रकम् ४ उर्व्वङ्गम् ५ वसारोहम् ६ गोलासम् ७। इति हारावली॥ छत्राकम् ८। इति स्मृतिः॥ उच्छिलीन्ध्रम् ९। इति श्रीभागवतम्॥ करीषेक्षुपलालपृथ्वीवेणुजच्छत्रिकायाः सामान्यगुणाः। शीतत्वम्। कषायत्वम्। स्वादुत्वम्। पिच्छिलत्वम्। गुरुत्वम्। छर्द्यतीसारज्वरश्लेष्मरोगकारित्वञ्च॥ पलालजच्छत्रिकागुणाः। पाके स्वादुरसत्वम्। रूक्षत्वम्। दोषकारित्वञ्च॥ शुचिस्थानकाष्ठवंशगोष्ठजश्वेतच्छत्रिकाया गुणाः। अतिदोषकारित्वम्। अन्यच्छत्रिकास्तेभ्यो विगर्हिताः। इति राजवल्लभः॥

छत्री, [न्] पुं, (छत्रं कौशलादिभिराच्छादकत्वं विद्यतेऽस्य। छत्र+इनिः।) नापितः। इति शब्दरत्नावली॥ छत्रविशिष्टे, त्रि। यथा,—
"गच्छेद्वर्षातपे छत्री दण्डी रात्र्यटवीषु च।"
इति स्मृतिः॥
(यथा च हरिवंशे। २५३। ५।
"मौञ्जी यज्ञोपवीती च छत्री दण्डाजिनी तथा।
वामनो धूमरक्ताक्षो भगवान् बालरूपधृक्॥")

छत्वरः, पुं, (छदते अपवारयति वर्षाद्यादिकमिति। छद अपवारणे+"छित्वरच्छत्वरेति।" उणां। ३। १। इति ष्वरच् प्रत्ययेन साधुः।) गृहम्। कुञ्जः। इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥

छद, त् क संवृतौ। इति कविकल्पद्रुमः॥ (अदन्तचुरां-परं-सकं-सेट्।) छदयति। इति दुर्गादासः॥ (यथा, कविरहस्ये। १९।
"छदयति सुरलोकं यो गुणैर्यश्च युद्धे
सुरयुवतिविमुक्ताश्छादयन्ति सजञ्च॥")

छद, कि भ संवृतौ। इति कविकल्पद्रुमः॥ (चुरां-पक्षे भ्वां-उभं-सकं-सेट्।) कि भ, छादयति छादयते छदति छदते द्विषं मेघः। आच्छादयति इत्यर्थः। इति दुर्गादासः॥

छद, म कि भ ऊर्ज्जने। ऊर्ज्जनं बलं जीवनञ्च। इति कविकल्पद्रुमः॥ (चुरां-पक्षे भ्वां-उभं-सकं-सेट्।) छदयति पुत्रं पिता। जीवयति बलवन्तं करोति वा इत्यर्थः। इति दुर्गादासः॥

छदः, पुं, (छदति आच्छादयतीति। छद+अच्।) पत्रम्। (यथा, रामायणे। २।५५।६।
"ततो न्यग्रोधमासाद्य महान्तं हरितच्छदम्॥")
पक्षः। ग्रन्थिपर्णवृक्षः। तमालवृक्षः। इति मेदिनी। दे, ५॥

छदनं, क्ली, (छदति आच्छादयतीति। छद+ल्युः।) पत्रम्। पक्षः। (यथा, महाभारते। ३। १५८। ९९।
"विमलस्फाटिकाभानि पाण्डरच्छदनैर्द्विजैः।
कलहंसैरुपेतानि सारसाभिरुतानि च॥"
छद+भावे ल्युट्।) पिधानम्। इति मेदिनी। ने, ६५॥ तमालपत्रम्। इति राजनिर्घण्टः॥ तेजपात इति भाषा॥

छदपत्रः, पुं, (छदानि आच्छादकानि पत्राणि यस्य।) भूर्जपत्रवृक्षः। इति काचित् रत्नमाला॥

छदिः, [स्] क्ली, (छादयतीति छाद्यतेऽनेन वा। छद्+णिच्+"अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः।" उणां। २। १०९। इति इसिः। "इस्मन्त्रन्क्विषु च।" ६। ४। ९७। इति ह्रस्वः।) पटलम्। इत्यमरः। २। २। १४॥ (यथा, भागवते। ७। १४। १३।
"क्रिमिविड्भस्मनिष्ठान्तं क्वेदं तुच्छं कलेवरम्।
क्व तदीयरतिर्भार्य्या क्वायमात्मा नभश्छदिः॥")

छद्म, [न्] क्ली, (छद्यते आव्रियते स्वरूपमनेनेति। छद+"सर्व्वधातुभ्यो मनिन्।" उणां। ४। १४४। इति मनिन्।) व्याजः। (यथा, रघुः। १२। २
"तं कर्णमूलमागत्य रामे श्रीर्न्यस्यतामिति।
कैकेयीशङ्कयेवाह पलितच्छद्मना जरा॥")
कपटः। शाठ्यम्। अपदेशः। स्वरूपाच्छादनम्। इति मेदिनी। ने, ६४॥

छद्मतापसः, पुं, (छद्मना कपटेन तापसः। अप्रकृततपस्वितया एवास्य तथात्वम्।) छलतपस्वी। तत्पर्य्यायः। सर्व्वाभिसन्धी २ वैड़ालव्रतिकः ३ वेशधारी ४। इति शब्दरत्नावली॥

छद्मिका, स्त्री, (छद्म अस्त्यस्याः। व्रीह्यादित्वादिनिः संज्ञायां कन् टाप् च।) गुडूची। इति राजनिर्घण्टः॥

छन्दः, पुं, (छन्द्यते इति। छन्द+भावे घञ्।) अभिप्रायः। (यथा, रामायणे। २। ९। ७।
"मयोच्यमानं यदि ते श्रोतुं छन्दो विलासिनि!।
[illegible]॥")
वशः। इत्यमरः। ३। ३। ८८॥ अभिलाषः। [illegible] भरतः॥ विषम्। इति शब्दचन्द्रिका। [illegible] त्रि। इत्यमरटीकासारसुन्दरी॥

छन्दः, [स्] क्ली, (चन्दयति आह्लादयति [illegible] चन्द्यतेऽनेन वा। चदि आह्लादे+"चन्देरादेश्च छः।" उणां। ४। २१८। इति [illegible] चस्य छश्च।) वेदः। (यथा, रघुः। १। [illegible]
"आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव [illegible]
स्वैराचारः। अभिलाषः। (यथा, महाभारते [illegible] १२। २०१। १२।
"कामात्मकाश्छन्दसि कर्म्मयोगा
एभिर्व्विमुक्तः परमश्नुवीत॥")
पद्यम्। इति मेदिनी। से, २२॥ अस्य ल[illegible] यथाह गङ्गादासः।
"पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा।
वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेत्।
सममर्द्धसमं वृत्तं विषमञ्चेति तत्त्रिधा।
समं समचतुष्पादं भवत्यर्द्धसमं पुनः॥
आदिस्तृतीयवद्यस्य पादस्तुर्य्यो द्वितीयवत्।
भिन्नचिह्नचतुष्पादं विषमं परिकीर्त्तितम्॥"
एतामर्थः। अक्षरसंख्यातं अक्षरगणनया [illegible] प्राप्तं वृत्तमुच्यते। मात्राकृता मात्रागण[illegible] निर्णीता जातिर्जातिसंज्ञिका भवति। [illegible] समचतुष्पादम्। अर्द्धसमं यस्य प्रथमः पा[illegible] तृतीयेन पादेन तुल्यः चतुर्थः पादो द्विती[illegible] पादेन तुल्यः। विषमं पृथक्लक्षणचतुष्पा[illegible] (तत्र समवृत्तन्तु उक्थादिसंज्ञाभेदेन [illegible] विंशतिप्रकारकम्। यदुक्तं छन्दोमञ्जर्य्याम्।
"आरभ्यैकाक्षरात् पादादेकैकाक्षरवर्द्धितैः।
पादैरुक्थादिसंज्ञं स्याच्छन्दः षड्विंशतिं गत[illegible]
उक्थात्युक्था तथा मध्या प्रतिष्ठान्या सुप्र[illegible]तिष्ठिका
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च।
त्रिष्टुप् च जगती चैव तथातिजगती मता।
शक्वरी सातिपूर्व्वा स्यादष्ट्यत्यष्टी तथा स्मृते
धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः।
विकृतिः संस्कृतिश्चैव तथातिकृतिरुत्कृतिः।"
छन्दोलक्षणोपयोगिगणास्तु दश। यदुक्तं तत्रै[illegible]
"म्यरस्तजभ्नगैर्लान्तैरेभिर्दशभिरक्षरैः।
समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना।
मस्त्रिगुरुस्त्रिलघुश्च नकारो
भादिगुरुः पुनरादिलघुर्यः।
जो गुरुमध्यगतो रलमध्यः
सोऽन्तगुरुः कथितोऽन्तलघुस्तः॥
गुरुरेको गकारस्तु लकारो लघुरेककः।"
क्रमेण चैषां रेखाभिः संस्थानं दर्श्यते यथा।
म ऽऽऽ, न ।।।, भ ऽ।।, य ।ऽऽ, ज ।ऽ।,
र ऽ।ऽ, स ।।ऽ, त ऽऽ।, ग ऽ, ल ।)
छन्दस्तु नानाविधम्। तस्य ग्रन्थाः इ[illegible] विचितिपिङ्गलच्छन्दोमञ्जरीवृत्तरत्नाकरश्रु[illegible] बोधादयः सन्ति तेषु छन्दोमञ्जर्य्यादुक्त[illegible] [illegible]नीति लिख्यन्ते॥

| छन्दसां वृत्तिनामानि। | छन्दसां लक्षणगणाः। | छन्दसामुदाहरणानि। |
|---|---|---|
| एकाक्षरा वृत्तिः। उक्था। | | |
| श्रीः | ग् श्री ऽ | श्रीस्ते। सास्ताम्॥ |
| द्व्यक्षरा वृत्तिः। अत्युक्था। | | |
| स्त्री | गौ स्त्री ऽ,ऽ | गोपस्त्रीभिः। कृष्णो रेमे॥ |
| त्र्यक्षरा वृत्तिः। मध्या। | | |
| नारी | मो नारी ऽऽऽ | गोपानां नारीभिः। श्लिष्टोऽव्यात् कृष्णो वः॥ |
| मृगी | रो मृगी ऽ।ऽ | सा मृगीलोचना। राधिका श्रीपतेः॥ |
| चतुरक्षरा वृत्तिः। प्रतिष्ठा। | | |
| कन्या | ग्मौ चेत् कन्या ऽ,ऽऽऽ | भास्वत्कन्या सैका धन्या। यस्याः कूले कृष्णोऽखेलत्॥ |
| सती | नगि सती ।।।,ऽ | सुररिपो! तव पदम्। नमति सा ननु सती॥ |
| पञ्चाक्षरा वृत्तिः। सुप्रतिष्ठा। | | |
| पङ्क्तिः | भ्गौ गिति पङ्क्तिः ऽ।।,ऽ,ऽ | कृष्णसनाथा तर्णकपङ्क्तिः। यामुनकच्छे चारु चचार॥ |
| प्रिया | सलगैः प्रिया ।।ऽ,।,ऽ | व्रजसुभ्रुवो विलसत्कलाः। अभवन् प्रिया सुरवैरिणः॥ |
| षडक्षरा वृत्तिः। गायत्री। | | |
| तनुमध्या | त्यौ चेत् तनुमध्या ऽऽ।,।ऽऽ | मूर्त्तिर्मुररात्रेरत्यद्भुतरूपा।<br>आस्तां मम चित्ते नित्यं तनुमध्या॥ |
| शशिवदना | शशिवदना न्यौ ।।।,।ऽऽ | शशिवदनानां व्रजतरुणीनाम्।<br>अधरसुधोर्म्मिं मधुरिपुरैच्छत्॥ |
| सोमराजी | द्वियां सोमराजी ।ऽऽ,।ऽऽ | हरे! सोमराजीसमा ते यशःश्रीः।<br>जगन्मण्डलस्य च्छिनत्त्यन्धकारम्॥ |
| विद्युल्लेखा | विद्युल्लेखा मो मः ऽऽऽ, ऽऽऽ | |
| वसुमती | त्सौ चेद् वसुमती ऽऽ।,।।ऽ | |
| सप्ताक्षरा वृत्तिः। उष्णिक्। | | |
| मधुमती | ननगि मधुमती ।।।,।।।,ऽ | रविदुहितृतटे नवकुसुमततिः।<br>अधित मधुमती मधुमथनमुदम्॥ |
| कुमारललिता | कुमारललिता ज्सूगाः ।ऽ।,।।ऽ,ऽ | सुरारितरुणश्री कुमारललिता सा।<br>व्रजेक्षणनयनानां ततान मुदमुच्चैः॥ |
| मदलेखा | म्सूगौ स्यात् मदलेखा ऽऽऽ,।।ऽ,ऽ | रङ्गे बाहुविरुग्णाद्दन्तीन्द्रान्मदलेखा।<br>लग्नाभून्मुरशत्रौ कस्तूरीरसचर्चा॥ |
| हंसमाला | सरगैर्हंसमाला ।।ऽ,ऽ।ऽ,ऽ | |
| अष्टाक्षरा वृत्तिः। अनुष्टुप्। | | |
| चित्रपदा | चित्रपदा यदि भौ गौ ऽ।।,ऽ।।,ऽ,ऽ | यामुनसैकतदेशे गोपवधूजनकेलौ।<br>कंसरिपोर्गतिलीला चित्रपदा जगदव्यात्॥ |
| माणवकम्<br>माणवकक्रीड़मिति केचित्। | भात्तलगा माणवकम् ऽ।।,ऽऽ।,।,ऽ | चञ्चलचूडं चपलैर्वत्सकुलैः केलिपरम्।<br>ध्याय सखे स्मेरमुखं नन्दसुतं माणवकम्॥ |
| विद्युन्माला | मो मो गो गो विद्युन्माला ऽऽऽ,ऽऽऽ,ऽ,ऽ | वासो वल्लीविद्युन्माला बर्हश्रेणी शक्रश्चापः।<br>यस्मिन्नास्तां तापोच्छित्त्यै गोमध्यस्थः कृष्णाम्भोदः॥ |
| समानिका | ग्लौ रजौ समानिका तु ऽ,।,ऽ।ऽ,।ऽ। | यस्य कृष्णपादपद्ममस्ति हृत्तडागसद्म।<br>धीः समानिका परेण नोचिताऽत्र मत्सरेण॥ |
| प्रमाणिका<br>नगस्वरूपिणी इति कुत्रापि। | प्रमाणिका जरौ लगौ ।ऽ।,ऽ।ऽ,।,ऽ | पुनातु भक्तिरच्युता सदाऽच्युताङ्घ्रिपद्मयोः।<br>श्रुतिस्मृतिप्रमाणिका भवाम्बुराशितारिका॥ |
| गजगतिः | नभलगा गजगतिः ।।।,ऽ।।,।,ऽ | रविसुतापरिसरे विहरतो दृशि हरेः।<br>व्रजवधूगजगतिर्मुदमलं व्यतनुत॥ |
| हंसरुतम् | म्नौ गौ हंसरुतमेतत् ऽऽऽ,।।।,ऽ,ऽ | |
| नाराचिका | नाराचिका तरौ लगौ ऽऽ।,ऽ।ऽ,।,ऽ | |
| नवाक्षरा वृत्तिः। बृहती। | | |
| भुजगशिशुभृता<br>भृतेत्यत्र सृतेति युतेति च केचित्। | भुजगशिशुभृता नौ मः ।।।,।।।,ऽऽऽ | हृदतटनिकटक्षोणौ भुजगशिशुभृता यासीत्।<br>सुररिपुदलिते नागे व्रजजनसुखदा साभूत्॥ |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
|---|---|---|
| मणिमध्यम् | स्यान्मणिमध्यं चेत् भमसाः ऽ॥,ऽऽऽ,॥ऽ | कालियभोगाभोगगतस्तन्मणिमध्यस्फीतरुचा ।<br>चित्रपदाभो नन्दसुतश्चारु ननर्त्त स्मेरमुखः ॥ |
| भुजङ्गसङ्गता | सजरैर्भुजङ्गसङ्गता ॥ऽ,।ऽ।,ऽ।ऽ | तरला तरङ्गरिङ्गितैर्यमुना भुजङ्गसङ्गता ।<br>कथमेतु वत्सचारकश्चपलः सदैव तां हरिः ॥ |
| हलमुखी | रान्नसाविह हलमुखी ऽ।ऽ,॥।,॥ऽ | |
| भद्रिका | भद्रिका भवति रो नरौ ऽ।ऽ,॥।,ऽ।ऽ | |
| दशाक्षरा वृत्तिः । पङ्क्तिः । | | |
| रुक्मवती<br>रूपवती क्वचित् । चम्पकमाला इति क्वापि । | रुक्मवती सा यत्र भमस्गाः ऽ॥,ऽऽऽ,॥ऽ,ऽ | कायमनोवाक्यैः परिशुद्धैर्यस्य सदा कंसद्विषि भक्तिः ।<br>राज्यपदे हर्म्म्यालिरुदारा रुक्मवती विप्रः खलु तस्य । |
| मत्ता | ज्ञेया मत्ता मभसगयुक्ता ऽऽऽ,ऽ॥,॥ऽ,ऽ | पीत्वा मत्ता मधु मधुपाली कालिन्दीये तटवनकुञ्जे ।<br>उद्दीव्यन्तीर्व्रजजनरामाः कामासक्ता मधुजिति चक्रे । |
| त्वरितगतिः | त्वरितगतिश्च नजनगैः ॥।,।ऽ।,॥।,ऽ | त्वरितगतिर्व्रजयुवतिस्तरणिसुताविपिनगता ।<br>सुररिपुणा रतिगुरुणा परिरमिता प्रमदमिता ॥ |
| मनोरमा | नरजगैर्भवेन्मनोरमा ॥।,ऽ।ऽ,।ऽ।,ऽ | तरणिजातटे विहारिणी व्रजविलासिनी विलासतः ।<br>सुररिपोस्तनुः पुनातु वः सुकृतशालिनां मनोरमा । |
| शुद्धविराट् | म्सौ ज्गौ शुद्धविराडिदं मतम् ऽऽऽ,॥ऽ,।ऽ।,ऽ | |
| पणवम् | म्नौ य्गौ चेति पणवनामेदम् ऽऽऽ,॥।,।ऽऽ,ऽ | |
| मयूरसारिणी | र्जौ रगौ मयूरसारिणी स्यात् ऽ।ऽ,।ऽ।,ऽ।ऽ,ऽ | |
| उपस्थिता | तौ जौ गुरुणेयमुपस्थिता ऽऽ।,।ऽ।,।ऽ।,ऽ | |
| दीपकमाला | दीपकमाला भ्मौ मता जगौ ऽ॥,ऽऽऽ,।ऽ।,ऽ | |
| हंसी | ज्ञेया हंसी मभनगयुता ऽऽऽ,ऽ॥,॥।,ऽ | |
| एकादशाक्षरा वृत्तिः । त्रिष्टुप् । | | |
| इन्द्रवज्रा | स्यादिन्द्रवज्रा यदि तौ जगौ गः ऽऽ।,ऽऽ।,।ऽ।,ऽ,ऽ | गोष्ठे गिरिं सव्यकरेण धृत्वा रुष्टेन्द्रवज्राहतिमुक्तवृष्टौ ।<br>यो गोकुलं गोपकुलञ्च सुस्थं चक्रे स नो रक्षतु चक्रपाणिः |
| उपेन्द्रवज्रा<br>उपेन्द्रवज्राया इन्द्रवज्रायाश्च चरणघटिता उपजातयः । ताश्च चतुर्व्वर्णप्रस्तारभेदादाद्यन्त्यौ त्यक्ता चतुर्द्दशप्रकारा भवन्ति । | उपेन्द्रवज्रा जतजास्ततो गौ ।ऽ।,ऽऽ।,।ऽ।,ऽ,ऽ<br>अनन्तरोरितलक्ष्मभाजौ<br>पादौ यदीयावुपजातयस्ताः ।<br>इत्थं किलान्यास्वपि मिश्रितासु<br>वदन्ति जातिष्विदमेव नाम ॥ | उपेन्द्रवज्रादिमणिच्छटाभिर्विभूषणानां छुरितं वपुस्ते ।<br>स्मरामि गोपीभिरुपास्यमानं सुरद्रुमूले मणिमण्डपस्थम् |
| सुमुखी | नजजलगैर्गदिता सुमुखी ॥।,।ऽ।,।ऽ।,।,ऽ | तरणिसुतातटकुञ्जगृहे वदनविधुस्मितदीधितिभिः ।<br>तिमिरमुदस्य मुखं सुमुखी हरिमवलोक्य चुचुम्ब चिरम् |
| शालिनी<br>अस्याश्चतुर्थे ततः सप्तमे च यतिः । | मात्तौ गौ चेत् शालिनी वेदलोकैः<br>ऽऽऽ,ऽऽ।,ऽऽ।,ऽ,ऽ | अंहो हन्ति ज्ञानवृद्धिं विधत्ते धर्म्मं धत्ते काममर्थञ्च सूते ।<br>मुक्तिं दत्ते सर्व्वदोपास्यमाना पुंसां श्रद्धाशालिनी विष्णुभक्तिः |
| वातोर्म्मी | वातोर्म्मीयं गदिता म्भौ तगौ गः<br>ऽऽऽ,ऽ॥,ऽऽ।,ऽ,ऽ | ध्याता मूर्त्तिः क्षणमप्यच्युतस्य<br>श्रेणी नाम्नां गदिता हेलयापि ।<br>संसारेऽस्मिन् दुरितं हन्ति पुंसां<br>वातोर्म्मीपोतमिवाम्भोधिमध्ये ॥ |
| भ्रमरविलसिता<br>भ्रमरविलसितमिति केचित् । | मो गो नौ गो भ्रमरविलसिता ऽऽऽ,ऽ,॥।,॥।,ऽ | मुग्धे ! मानं परिहर न चिरात्तारुण्यन्ते सफलयतु हरिः ।<br>फुल्लावल्ली भ्रमरविलसिताभावे शोभां कलयति किमु ताम् । |
| अनुकूला | स्यादनुकूला भतनगगाश्चेत् ऽ॥,ऽऽ।,॥।,ऽ,ऽ | वल्लववेशा सुररिपुमूर्त्तिर्गोपवधूनां रतिपूर्त्तिः ।<br>वाञ्छितसिद्ध्यै प्रणतिपरस्य स्यादनुकूला जगति न कस्य । |
| रथोद्धता | रात् परैर्नरलगै रथोद्धता ऽ।ऽ,॥।,ऽ।ऽ,।,ऽ | राधिका दधिविलोडनस्थिता कृष्णवेणुनिनदैरथोद्धता ।<br>यामुनं तटनिकुञ्जमञ्जसा सा जगाम सलिलाहृतिच्छलात् |
| स्वागता | स्वागता रनभगैर्गुरुणा च ऽ।ऽ,॥।,ऽ॥,ऽ,ऽ | यस्य चेतसि सदा मुरवैरी वल्लवीजनविलासविलोलः ।<br>तस्य नूनममरालयभाजः स्वागतादरकरः सुरराजः । |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
| --- | --- | --- |
| दोधकम् | दोधकमिच्छति भत्रितयाद्गौ ऽ।।,ऽ।।,ऽ।।,ऽ,ऽ | देव ! सदोधकदम्बतलस्थ ! श्रीधर ! तारकनामपदं मे ।<br>कण्ठतलेऽसुविनिर्गमकाले स्वल्पमपि चयमेष्यति योगम् ॥ |
| मोटनकम् | स्यान्मोटनकं तजजाश्च लगौ ऽऽ।,।ऽ।,।ऽ।,।,ऽ | रङ्गे खलु मल्लकलाकुशलं चाणूरमहाभटमोटनकम् ।<br>यः केलिलवेन चकार स मे संसाररिपुं प्रतिमोटयतु ॥ |
| श्येनी<br>श्येनिका इति क्वचित् । | श्येन्युदीरिता रजौ रलौ गुरुः ऽ।ऽ,।ऽ।,ऽ।ऽ,।,ऽ | यस्य कीर्त्तिरिन्दुकुन्दचन्दनश्येन्यशेषलोकपावनी सदा ।<br>जाह्नवीव विश्ववन्द्यविभ्रमा तं भजामि भावगम्यमच्युतम् ॥ |
| श्रीः | बाणरसैः स्यात् भतनगगैः श्रीः ऽ।।,ऽऽ।,।।।,ऽ,ऽ | |
| वृत्ता | ननसगगुरुरचिता वृत्ता ।।।,।।।,।।ऽ,ऽ,ऽ | |
| भद्रिका | ननरलगुरुभिश्च भद्रिका ।।।,।।।,ऽ।ऽ,।,ऽ | |
| मौक्तिकमाला | मौक्तिकमाला यदि भतनात् गौ ऽ।।,ऽऽ।,।।।,ऽ,ऽ | |
| उपस्थितम् | उपस्थितमिदं ज्सौ ताद् गकारौ ।ऽ।,।।ऽ,ऽऽ।,ऽ,ऽ | |
| उपचित्रम् | उपचित्रमिदं सससाल्लगौ ।।ऽ,।।ऽ,।।ऽ,।,ऽ | |
| कुपुरुषजनिता | कुपुरुषजनिता ननौ रगौ गः ।।।,।।।,ऽ।ऽ,ऽ,ऽ | |
| अनवसिता | अनवसिता न्यौ भगौ गुरुरन्ते ।।।,।ऽऽ,ऽ।।,ऽ,ऽ | |
| विध्वङ्कमाला | विध्वङ्कमाला भवेत्तौ तगौ गः ऽऽ।,ऽऽ।,ऽऽ।,ऽ,ऽ | |
| सान्द्रपदम् | सान्द्रपदं स्याद्भतनगलैश्च ऽ।।,ऽऽ।,।।।,ऽ,। | |
| शिखण्डितम् | शिखण्डितमिदं ज्सौ तगौ गुरुश्चेत्<br>।ऽ।,।।ऽ,ऽऽ।,ऽ,ऽ | |
| द्वादशाक्षरा वृत्तिः । जगती । | | |
| चन्द्रवर्त्म | चन्द्रवर्त्म निगदन्ति रनभसैः ऽ।ऽ,।।।,ऽ।।,।।ऽ | चन्द्रवर्त्म पिहितं घनतिमिरे राजवर्त्म रहितं जनगमनैः ।<br>इष्टवर्त्म तदलङ्कुरु सरसे ! कुञ्जवर्त्मनि हरिस्तव कुतुकी ॥ |
| वंशस्थविलम्<br>वंशस्तनितमिति क्वापि । | वदन्ति वंशस्थविलं जतौ जरौ ।ऽ।,ऽऽ।,।ऽ।,ऽ।ऽ | विलासवंशस्थविलं मुखानिलैः<br>प्रपूर्य यः पञ्चमरागमुद्गिरन् ।<br>व्रजाङ्गनानामपि गानशालिनां<br>जहार मानं स हरिः पुनातु नः ॥ |
| इन्द्रवंशा<br>वंशस्थविलेन्द्रवंशाचरणोभयघटिता-श्चतुर्वर्णप्रस्तारीयाद्यन्तव्यतिरिक्त-चतुर्दशप्रकारा उपजातयो भवन्ति। | स्यादिन्द्रवंशा ततजैरसंयुता ऽऽ।,ऽऽ।,।ऽ।,ऽ।ऽ | दैत्येन्द्रवंशाग्निरुदीर्णदीधितिः<br>पीताम्बरोऽसौ जगतीतमोहरः ।<br>यस्मिन् ममज्जुः शलभा इव स्वयं<br>ते कंसचाणूरमुखा मखद्विषः ॥ |
| जलोद्धतगतिः | जसौ जसयुतौ जलोद्धतगतिः ।ऽ।,।।ऽ,।ऽ।,।।ऽ | यदीयहलतो विलोक्य विपदं<br>कलिन्दतनया जलोद्धतगतिः ।<br>विलासविपिनं विवेश सहसा<br>करोतु कुशलं हली स जगताम् ॥ |
| भुजङ्गप्रयातम् | भुजङ्गप्रयातं चतुर्भिर्यकारैः ।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ | सदारात्मजज्ञातिभृत्यो विहाय<br>स्वमेतं ह्रदं जीवनं लिप्समानः ।<br>मया शिक्षितः कालियेत्थं कुरु त्वं<br>भुजङ्ग ! प्रयातं द्रुतं सागराय ॥ |
| तोटकम् | वद तोटकमब्धिसकारयुतम् ।।ऽ,।।ऽ,।।ऽ,।।ऽ | यमुनातटमच्युतकेलिकला-<br>लसदङ्घ्रिसरोरुहसङ्गरुचिम् ।<br>मुदितोऽट कलेरपनेतुमघं<br>यदि चेच्छसि जन्म निजं सफलम् ॥ |
| स्रग्विणी | कीर्त्तितैषा चतूरेफिका स्रग्विणी<br>ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | इन्द्रनीलोपलेनेव या निर्मिता<br>शातकुम्भद्रवालङ्कृता शोभते ।<br>नव्यमेघच्छविः पीतवासा हरे-<br>र्मूर्त्तिरास्तां ममेवोरसि स्रग्विणी ॥ |
| वैश्वदेवी | बाणाश्वैश्छिन्ना वैश्वदेवी ममौ यौ<br>ऽऽऽ,ऽऽऽ,।ऽऽ,।ऽऽ | अर्चामन्येषां त्वं विहायामराणा-<br>मद्वैतेनैकं श्याममभ्यर्च भक्त्या ।<br>तत्राशेषात्मन्यर्चिते भाविनी ते<br>भ्रातः ! सम्पन्नाराधना वैश्वदेवी ॥ |

| छन्दसां वृत्तिनामानि। | छन्दसां लक्षणगणाः। | छन्दसामुदाहरणानि। |
|---|---|---|
| प्रमिताक्षरा | प्रमिताक्षरा सजससैः कथिता ।।ऽ,।ऽ।,।।ऽ,।।ऽ | अमृतस्य शीकरमिवोद्गिरती<br>रदमौक्तिकांशुलहरीच्छुरिता।<br>प्रमिताक्षरा सुररिपोर्भणिति-<br>र्व्रजसुभ्रुवामभिजहार मनः॥ |
| द्रुतविलम्बितम् | द्रुतविलम्बितमाह नभौ भरौ ।।।,ऽ।।,ऽ।।,ऽ।ऽ | तरणिजापुलिने नववल्लवी-<br>परिषदा सह केलिकुतूहलात्।<br>द्रुतविलम्बितचारुविहारिणं<br>हरिमहं हृदयेन सदा वहे॥ |
| मन्दाकिनी | ननररघटिता तु मन्दाकिनी ।।।,।।।,ऽ।ऽ,ऽ।ऽ | बलिदमनविधौ बभौ सङ्गता<br>पदजलरुहि यस्य मन्दाकिनी।<br>सुरनिहितसिताम्बुजस्रङ्निभा<br>हरतु जगदघं स पीताम्बरः॥ |
| कुसुमविचित्रा | नयसहितौ न्यौ कुसुमविचित्रा ।।।,।ऽऽ,।।।,।ऽऽ | विपिनविहारे कुसुमविचित्रा<br>कुतुकितगोपीमहितचरित्रा।<br>सुररिपुमूर्तिर्मुखरितवंशा<br>चिरमवताद्वस्तरलवतंसा॥ |
| तामरसम् | इह वद तामरसं नजजा यः ।।।,।ऽ।,।ऽ।,।ऽऽ | स्फुटसुषमामकरन्दमनोज्ञं<br>व्रजललनानयनालिनिपीतम्।<br>तव मुखतामरसं मुरशत्रो!<br>हृदयतडागविकाशि ममास्तु॥ |
| मालती<br>यमुनेति क्वापि। | भवति नजावथ मालती जरौ ।।।,।ऽ।,।ऽ।,ऽ।ऽ | इह कलयाच्युतकेलिकानने<br>मधुरससौरभसारलोलुपः।<br>कुसुमकृतस्मितचारुविभ्रमा<br>मलिरपि चुम्बति मालतीं मुहुः॥ |
| मणिमाला<br>अस्याः षड्वर्णैर्यतिः। | त्यौ त्यौ मणिमाला छिन्ना गुहवक्त्रैः<br>ऽऽ।,।ऽऽ,ऽऽ।,।ऽऽ | प्रह्वामरमौलौ रत्नोपलकॢप्ते<br>जातप्रतिबिम्बा शोणा मणिमाला।<br>गोविन्दपदाब्जे राजी नखराणा-<br>मास्तां मम चित्ते ध्वान्तं शमयन्ती॥ |
| जलधरमाला<br>अस्याश्चतुर्भिरष्टाभिश्च यतिः। | मो भः स्मौ चेज्जलधरमालाब्ध्यन्त्यैः<br>ऽऽऽ,ऽ।।,।।ऽ,ऽऽऽ | या भक्तानां कलिदुरितोत्तप्तानां<br>तापोच्छेदे जलधरमाला नव्या।<br>भव्याकारा दिनकरपुत्रीकूले<br>केलीलोला हरितनुरव्यात् सा वः॥ |
| पुटः | वसुयुगविरतिर्नौ म्यौ पुटोऽयम् ।।।,।।।,ऽऽऽ,।ऽऽ | |
| प्रमुदितवदना<br>प्रभेति मल्लिनाथः। गौरीति<br>कौमुदीकारः। | प्रमुदितवदना भवेन्नौ च रौ ।।।,।।।,ऽ।ऽ,ऽ।ऽ | |
| प्रियंवदा | भुवि भवेन्नभजरैः प्रियंवदा ।।।,ऽ।।,।ऽ।,ऽ।ऽ | |
| ललिता | धीरैरभाणि ललिता तभौ जरौ ऽऽ।,ऽ।।,।ऽ।,ऽ।ऽ | |
| उज्ज्वला | ननभरसहिता गदितोज्ज्वला ।।।,।।।,ऽ।।,ऽ।ऽ | |
| नवमालिका | इह नवमालिका नजभयैः स्यात् ।।।,।ऽ।,ऽ।।,।ऽऽ | |
| ललना | पञ्चमुनि भमौ सात् सयुता ललना<br>ऽ।।,ऽऽऽ,।।ऽ,।।ऽ | |
| ललितम् | ललितमभिहितं नौ म्रौ नामतः ।।।,।।।,ऽऽऽ,ऽ।ऽ | |
| द्रुतपदम् | द्रुतपदं भवति नभनयाश्चेत् ।।।,ऽ।।,।।।,।ऽऽ | |
| विद्याधारः<br>. | सर्वे मा यस्मिन् सोऽयं विद्याधारः स्यात्<br>ऽऽऽ,ऽऽऽ,ऽऽऽ,ऽऽऽ | |
| पञ्चचामरम् | लघुर्गुरुर्वदन्ति पञ्चचामरम् ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ | |
| सारङ्गम् | सारङ्गसंज्ञं समस्तैस्तकारैस्तु ऽऽ।,ऽऽ।,ऽऽ।,ऽऽ। | |
| मौक्तिकदाम | समस्तजमीरय मौक्तिकदाम ।ऽ।,।ऽ।,।ऽ।,।ऽ।, | |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
|---|---|---|
| मोटकम् | मोटकनाम समस्तभमीरय ऽ।।,ऽ।।,ऽ।।,ऽ।। | |
| तरलनयनम् | वरिलघु तरलनयनमिह ।।।।।।।।।।।। | |
| त्रयोदशाक्षरावृत्तिः। अतिजगती। | | |
| प्रहर्षिणी<br>त्रिभिर्दशभिश्च यतिः। | म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्<br>ऽऽऽ,।।।,।ऽ।,ऽ।ऽ,ऽ | गोपीनामधरसुधारसस्य पाने-<br>रुत्तुङ्गस्तनकलसोपगूहनेन ।<br>आश्चर्यैरपि रतिविभ्रमैर्मुरारेः<br>संसारे मतिरभवत् प्रहर्षिणीह ॥ |
| रुचिरा<br>चतुर्भिर्नवभिश्च यतिः। | जभौ सजौ गिति रुचिरा चतुर्ग्रहैः<br>।ऽ।,ऽ।।,।।ऽ,।ऽ।,ऽ | पुनातु वो हरिरतिरासविभ्रमी<br>परिभ्रमन् व्रजरुचिराङ्गनान्तरे ।<br>समीरणोल्लसितलतान्तरालगो<br>यथा मरुत्तरलतमालभूरुहः ॥ |
| मत्तमयूरः<br>चतुर्भिर्नवभिश्च यतिः। | वेदरन्ध्रैर्म्तौ यसगा मत्तमयूरः<br>ऽऽऽ,ऽऽ।,।ऽऽ,।।ऽ,ऽ | लीलानृत्यन्मत्तमयूरध्वनिकान्तं<br>नृत्यद्गोपामोदिपयोदानिलरम्यम् ।<br>कामक्रीडालम्पटमना गोपवधूभिः<br>कंसध्वंसी निर्जनवृन्दावनमाप ॥ |
| चण्डी | नयुगलसयुगलगैरिति चण्डी ।।।,।।।,।।ऽ,।।ऽ,ऽ | जयति दितिजरिपुताण्डवलीला-<br>कुपितकवलकरकालियमौलौ ।<br>चरणकमलयुगचापलचण्डी<br>पदनखरुचिजितभोगमणिश्रीः ॥ |
| मञ्जुभाषिणी<br>सुनन्दिनीति शम्भौ | सजसा जगौ च यदि मञ्जुभाषिणी<br>।।ऽ,।ऽ।,।।ऽ,।ऽ।,ऽ | अमृतोर्मिशीतलकरेण लालयं-<br>स्तनुकान्तिचोरितविलोचनो हरे ! ।<br>नियतं कलानिधिरसीति वल्लवी<br>मुदमच्युते व्यधित मञ्जुभाषिणी ॥ |
| चन्द्रिका<br>उत्पलिनीति क्वापि। विद्युदिति चमेति च क्वापि। सप्तभिः षड्भिश्च यतिः। | ननततगुरुभिश्चन्द्रिकाऽश्वर्तुभिः ।।।,।।।,ऽऽ।,ऽऽ।,ऽ | शरदमलतरचन्द्रिकाधालिते<br>दिनकरतनयातीरदेशे हरिः ।<br>विहरति रभसाद्बल्लवीभिः समं<br>त्रिदिवयुवतिभिः कोऽपि देवो यथा ॥ |
| कलहंसः<br>सिंहनादः क्वापि। | सजसाः सगौ च कथितः कलहंसः<br>।।ऽ,।ऽ।,।।ऽ,।।ऽ,ऽ | यमुनाविहारकुतुके कलहंसो<br>व्रजकामिनीकमलिनीकृतकेलिः ।<br>जनचित्तहारिकलकण्ठनिनादः<br>प्रमदं तनोतु तव नन्दतनूजः ॥ |
| प्रबोधिता | सजसा जगौ च भवति प्रबोधिता ।।ऽ,।ऽ।,।।ऽ,।ऽ।,ऽ | प्रथिता त्वया चटुलमानिद्रया<br>रतिकेलिकुञ्जनिलये विलासिनी ।<br>मुरवैरिणा वदनचुम्बनादिना<br>स्मितमाततान सपदि प्रबोधिता ॥ |
| मृगेन्द्रमुखम् | भवति मृगेन्द्रमुखं नजौ जरौ गः ।।।,।ऽ।,।ऽ।,ऽ।ऽ,ऽ | गुरुभुजवीर्य्यभरं हरिं मदान्धा<br>युधि समुपेत्य न दानवा जिजीवुः ।<br>क्षुधितमृगेन्द्रमुखं मृगा उपेत्य<br>क्व नु खलु बिभ्रति जीवनस्य योगम् ॥ |
| चञ्चरीकावली | यमौ रौ विख्याता चञ्चरीकावली गः<br>।ऽऽ,ऽऽऽ,ऽ।ऽ,ऽ।ऽ,ऽ | |
| चन्द्रलेखा | नसरयुगगैश्चन्द्रलेखर्त्तुलोकैः ।।।,।।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ | |
| कन्दुकम् | इदं कन्दुकं यत्र येभ्यश्चतुर्भ्यो गः ।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,ऽ | |
| मृगेन्द्रमुखम् | भवति मृगेन्द्रमुखं नजौ जरौ गः ।।।,।ऽ।,।ऽ।,ऽ।ऽ,ऽ | |
| उपस्थितम् | उपस्थितमिदं ज्सौ त्सौ यदि गुरुः स्यात्<br>।ऽ।,।।ऽ,ऽऽ।,।।ऽ,ऽ | |
| मञ्जुहासिनी | जतौ सजौ गो भवति मञ्जुहासिनी<br>।ऽ।,ऽऽ।,।।ऽ,।ऽ।,ऽ | |
| नन्दिनी | इह नन्दिनी सजससैर्गुरुयुक्तैः ।।ऽ,।ऽ।,।।ऽ,।।ऽ,ऽ | |

| छन्दसां वृत्तिनामानि। | छन्दसां लक्षणगणाः। | छन्दसामुदाहरणानि। |
|---|---|---|
| कुटजगतिः | कुटजगतिर्नजौ सम्प्तु भृतौ गुरुः<br>।।।,।ऽ।,ऽऽऽ,ऽऽ।,ऽ | |
| प्रभावती। | यस्यां प्रिये ! प्रथमकमक्षरद्वयं<br>तुर्य्यं तथा गुरु नवमं दशान्तिमम्।<br>सान्त्यं भवेद्‌यतिरपि चेद्‌युगग्रहैः<br>सा लक्ष्यतामम्टतरुते ! प्रभावती॥ | |
| चतुर्द्दशाक्षरा वृत्तिः। शर्करी।<br>असम्बाधा<br>पञ्चभिर्नवभिश्च यतिः। | मो गो गो नौ मः शरनवभिरसम्बाधा<br>ऽऽऽ,ऽ,ऽ,।।।,।।।,ऽऽऽ | वीर्य्याग्नौ येन ज्वलति रणरसात् क्षिप्ते<br>दैत्येन्द्रे जाता धरणिरियमसम्बाधा।<br>धर्म्मस्थित्यर्थं प्रकटिततनुसम्बन्धः<br>साधूनां बाधां प्रशमयतु स कंसारिः॥ |
| वसन्ततिलकम्<br>अष्टाभिः षड्भिश्च यतिः। सिंहोन्नता क्वापि। सिंहोन्नता इति सुनिकाश्यपः। उद्धर्षिणी इति सुनिसैतवः॥ | ज्ञेयं वसन्ततिलकं तभजा जगौ गः<br>ऽऽ।,ऽ।।,।ऽ।,।ऽ।,ऽ,ऽ | फुल्लं वसन्ततिलकं तिलकं वनाल्या<br>लीलापरं पिककुलं कलमत्र रौति।<br>वात्येष पुष्पसुरभिर्मलयाद्रिवातो<br>यातो हरिः स मथुरां विधिना हताः स्मः। |
| अपराजिता<br>सप्तभिर्यतिः। | ननरसलघुगैः स्वरैरपराजिता ।।।,।।।,ऽ।ऽ,।।ऽ,।,ऽ | यदनवधिभुजप्रतापहतास्सदा<br>यदुनिचयचमूः परैरपराजिता।<br>व्यजयत समरे समस्तरिपुव्रजं<br>स जयति जगतां गतिर्गरुड़ध्वजः॥ |
| प्रहरणकलिका<br>सप्तभिर्व्वर्णैर्यतिः। | ननभनलगिति प्रहरणकलिका ।।।,।।।,ऽ।।,।।।,।,ऽ | व्यथयति कुसुमप्रहरण ! कलिका<br>प्रमदवनभवा तव धनुषि तता।<br>विरहविपदि मे शरणमिह ततो<br>मधुमथनगुणस्मरणमविरतम्॥ |
| वासन्ती | मात्तो नो मो गौ यदि गदिता वासन्तीयम्<br>ऽऽऽ,ऽऽ।,।।।,ऽऽऽ,ऽ,ऽ | भ्राम्यद्‌भृङ्गीनिर्भरमधुरालापोद्गीतैः<br>श्रीखण्डाद्रेरद्भुतपवनैर्मन्दान्दोला।<br>लीलालोला पल्लवविलसद्धस्तोल्लासैः<br>कंसारातौ नृत्यति सदृशी वासन्तीयम्॥ |
| लोला<br>अस्याः सप्तभिर्यतिः। | द्विःसप्तच्छिद् लोला मृसौ म्भौ गौ चरणे चेत्<br>ऽऽऽ,।।ऽ,ऽऽऽ,ऽ।।,ऽ,ऽ | मुग्धे यौवनलक्ष्मीर्विद्युद्विभ्रमलोला<br>त्रैलोक्याद्भुतरूपो गोविन्दोऽतिदुरापः।<br>तद्‌वृन्दावनकुञ्जे गुञ्जद्‌भृङ्गसनाथे<br>श्रीनाथेन समेता स्वच्छन्दं कुरु केलिम्॥ |
| नान्दीमुखी<br>अस्याः सप्तभिर्यतिः। | स्वरभिदि यदि नौ तौ च नान्दीमुखी गौ<br>।।।,।।।,ऽऽ।,ऽऽ।,ऽ,ऽ, | सरसखगकुलालापनान्दीमुखीयं<br>लहरिभुजलता चारुफेनस्मितश्रीः।<br>सुरहरकलयासक्तिमासाद्य किन्ते<br>प्रमुदितहृदया भानुजा नृत्यतीह॥ |
| इन्दुवदना | इन्दुवदना भजसनैः सगुरुयुग्मैः ऽ।।,।ऽ।,।।ऽ,।।।,ऽ,ऽ | |
| नदी<br>सप्तभिर्यतिः। | ननतजगुरुगैः सप्तयतिर्नदी स्यात्<br>।।।,।।।,ऽऽ।,।ऽ।,ऽ,ऽ | |
| लक्ष्मीः | लक्ष्मीरन्तविरामा मृसौ तभौ गुरुयुग्मम्<br>ऽऽऽ,।।ऽ,ऽऽ।,ऽ।।,ऽ,ऽ | |
| सुपवित्रम् | त्रिननगगिति वसुयति सुपवित्रम्<br>।।।,।।।,।।।,।।।,ऽ,ऽ | |
| मध्यक्षामा | मध्यक्षामा युगदशविरमा म्भौ न्यौ गौ<br>ऽऽऽ,ऽ।।,।।।,।ऽऽ,ऽ,ऽ | |
| कुटिलम् | युगदिग्भिः कुटिलमिति सभौ न्यौ गौ चेत्<br>।।ऽ,ऽ।।,।।।,।ऽऽ,ऽ,ऽ | |
| प्रमदा | नजभजला गुरुश्च भवति प्रमदा<br>।।।,।ऽ।,ऽ।।,।ऽ।,।,ऽ | |

| छन्दसां वृत्तिनामानि। | छन्दसां लक्षणानि। | छन्दसामुदाहरणानि। |
|---|---|---|
| मञ्जरी<br>पञ्चमे नवमे च यतिः। | सजसा यलौ गिति शरग्रहैर्मञ्जरी<br>IIऽ,IऽI,IIऽ,Iऽऽ,I,ऽ | |
| कुमारी<br>अष्टमे नवमे च यतिः। | नजभजगैर्गुरुश्च वसुषट् कुमारी<br>III,IऽI,ऽII,IऽI,ऽ,ऽ | |
| सुकेसरम् | नरनरैर्लगौ च रचितं सुकेसरम्<br>III,ऽIऽ,III,ऽIऽ,I,ऽ | |
| चन्द्रौरसः | म्भौ न्यौ लगौ चेदिह भवति च चन्द्रौरसः<br>ऽऽऽ,ऽII,III,Iऽऽ,I,ऽ | |
| चक्रपदम् | चक्रपदमिह भननगलगुरुभिः<br>ऽII,III,III,III,I,ऽ | |
| वासन्ती | वासन्तीयं स्यादिह खलु मतौ न्यौ गौ चेत्<br>ऽऽऽ,ऽऽI,III,Iऽऽ,ऽ,ऽ | |
| पञ्चदशाक्षरा वृत्तिः। अतिशर्करी। | | |
| शशिकला | गुरुनिधनमनुलघुरिह शशिकला<br>IIIIIIIIIIIIII,ऽ | मलयजतिलकसमुदितशशिकला<br>व्रजयुवतिलसदलिकगगनगता।<br>सरसिजनयनहृदयसलिलनिधिं<br>व्यतनुत विततरभसपरितरलम्॥ |
| स्रक्<br>अस्याः षड्भिर्नवभिश्च यतिः। | सगियमपि च रसनव-रचितयतिः<br>IIIIII,III,IIIII,ऽ | अयि सहचरि! रुचिरतरगुणमयी<br>मृदिमवसतिरनपगतपरिमला।<br>स्रगिव निवस विलसदनुपमरसा<br>सुमुखि! मुदितदनुजदलनहृदये॥ |
| मणिगुणनिकरः<br>अष्टभिः सप्तभिश्च यतिः। | वसुमुनियतिरिति मणिगुणनिकरः<br>IIIIII,I,IIIII,ऽ | नरकरिपुरवतु निखिलसुरगति-<br>रमितमहिमभरसहजनिवसतिः।<br>अनवधिमणिगुणनिकरपरिचितः<br>सरिदधिपतिरिव धृततनुविभवः॥ |
| मालिनी<br>अष्टभिः सप्तभिश्च यतिः। | ननमयययुतेयं मालिनी भोगिलोकैः<br>III,III,ऽऽऽ,Iऽऽ,Iऽऽ | मृगमदकृतचर्चा पीतकौषेयवासा<br>रुचिरशिखिशिखण्डाबद्धधम्मिल्लपाशा।<br>अनृजुनिहितमंशे वंशमुत्क्वाणयन्ती<br>धृतमधुरिपुलीला मालिनी पातु राधा॥ |
| लीलाखेलः | एकन्यूनौ विद्युन्मालापादौ चेल्लीलाखेलः<br>ऽऽऽ,ऽऽऽ,ऽ,ऽ,ऽऽऽ,ऽऽऽ,ऽ | पायाद्वो गोविन्दः कालिन्दीकूलच्चौणीचक्रे<br>रासोल्लासक्रीडद्गोपीभिः सार्द्धं लीलाखेलः।<br>मन्दाकिन्यास्तीरोपान्ते स्वैरक्रीडाभिर्लोलो<br>यद्वद्देवानामीशः स्वर्वेश्याभिः खेलन्तीभिः॥ |
| विपिनतिलकम् | विपिनतिलकं नसनरेफयुग्मैर्भवेत्<br>III,IIऽ,III,ऽIऽ,ऽIऽ | विपिनतिलकं विकसितं वसन्तागमे<br>मधुकृतमदैर्मधुकरै रणद्भिर्वृतम्।<br>मलयमरुता रचितलास्यमालोकयन्<br>व्रजयुवतिभिर्विहरति स्म मुग्धो हरिः॥ |
| तूणकम् | तूणकं समानिकापदद्वयं विनान्तिमम्<br>ऽ,I,ऽIऽ,IऽI,ऽ,I,ऽIऽ,Iऽ | सा सुवर्णकेतकं विकाशि भृङ्गपूरितं<br>पञ्चबाणबाणजालपूर्णहेमतूणकम्।<br>राधिका विलक्ष्य माधवाद्य माधवे<br>मोहमेति निर्भरं त्वया विना कलानिधे!॥ |
| चन्द्रलेखा<br>सप्तमे अष्टमे च यतिः। | म्रौ मो यौ चेद्भवेतां सप्ताष्टकैश्चन्द्रलेखा<br>ऽऽऽ,ऽIऽ,ऽऽऽ,Iऽऽ,Iऽऽ, | विच्छेदे ते मुरारे! पाण्डुप्रकाशा कृशाङ्गी<br>म्लानच्छायं दुकूलं न भ्राजते बिभ्रती सा।<br>राधाम्भोदस्य गर्भे लीना यथा चन्द्रलेखा<br>किम्वार्त्तां त्वां स्मरन्ती धत्ते ध्रुवं जीवयोगम्॥ |
| चित्रा | चित्रा नामच्छन्दश्चित्रञ्चेत् त्रयो मा यकारौ<br>ऽऽऽ,ऽऽऽ,ऽऽऽ,Iऽऽ,Iऽऽ | गोपाली लीलालोला यद्वत् कलिन्दात्मजान्ते<br>खेलन्मुक्ताहारा वन्यसम्भारसम्भूषचित्रा।<br>कंसारातेर्मूर्त्तिस्तद्वन्मे हृदि क्रीडतीयं<br>कोऽन्यः स्वर्गो मोक्षो वास्माद्विद्यते तन्न जाने॥ |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
|---|---|---|
| प्रभद्रकम् | भवति नजौ भजौ रसहितौ प्रभद्रकम्<br>।।।,।ऽ।.ऽ।।,।ऽ।,ऽ।ऽ | |
| एला<br>पञ्चभिर्दशभिश्च यतिः । | सजना नयौ शरदशयतिरियमेला<br>।।ऽ,।ऽ।,।।।,।।।,।ऽऽ | |
| कामक्रीड़ा | माः पञ्च स्युर्यस्यां सा कामक्रीड़ासंज्ञा ज्ञेया<br>ऽऽऽ,ऽऽऽ,ऽऽऽ,ऽऽऽ,ऽऽऽ | |
| सुखेलकम् | नजभजरैर्विराजितमिदं सुखेलकम्<br>।।।, ।ऽ।,ऽ।।,।ऽ।,ऽ।ऽ | |
| चन्द्रकान्ता<br>सप्तभिरष्टाभिश्च यतिः । | चन्द्रकान्ताभिधा रौ मृसौ यो विरमः स्वराष्टौ<br>ऽ।ऽ,ऽ।ऽ,ऽऽऽ,।।ऽ,।ऽऽ | |
| उपमालिनी<br>अष्टाभिः सप्तभिश्च यतिः । | ननतभरहतास्वरैरुपमालिनी<br>।।।,।।।,ऽऽ।,ऽ।।,ऽ।ऽ | |
| ऋषभः | ऋषभाख्यमेतदुदितं सजसा सयौ चेत्<br>।।ऽ,।ऽ। ।।ऽ,।।ऽ,।ऽऽ | |
| मानसहंसः | कथयन्ति मानसहंसनाम सजौ जभराः<br>।।ऽ,।ऽ।,।ऽ।.ऽ।।,ऽ।ऽ | |
| नलिनी | सगणैः शिववक्त्रमितैर्गदिता नलिनी<br>।।ऽ,।।ऽ,।।ऽ,।।ऽ,।।ऽ, | |
| निशिपालकम् | शंस निशिपालकमिदं भजसनाश्च रः<br>ऽ।।,।ऽ।,।।ऽ,।।।,ऽ।ऽ | |
| षोड़शाक्षरा वृत्तिः । अष्टिः । | | |
| चित्रम् | चित्रसंज्ञमीरितं समानिका पदद्वयन्तु<br>ऽ,।,ऽ।ऽ,।ऽ।,ऽ,।,ऽ।ऽ,।ऽ। | विद्रुमारुणाधरोष्ठशोभिवेणुवाद्यहृष्ट-<br>वल्लवीजनाङ्गसङ्गजातमुग्धकण्टकाङ्ग !।<br>त्वां सदैव वासुदेव ! पुण्यलभ्यपादसेव !<br>वन्यपुष्पचित्रकेश ! संस्मरामि गोपवेश ! ॥ |
| ऋषभगजविलसितम्<br>गजतुरगविलसितमिति शम्भौ ।<br>सप्तभिर्नवभिश्च यतिः । | भनिनगैः स्वराङ्कर्षभगजविलसितम्<br>ऽ।।,ऽ।ऽ,।।।,।।।,।।।,ऽ | यो हरिरुग्रधाम खरतरनखरशरै-<br>र्दुर्ज्जयदैत्यसिंहसुविकटहृदयतटम् ।<br>किञ्चिदिह चित्रमेष यदखिलमपहृतवान्<br>कंसनिदेशदृप्यदृषभगजविलसितम् ॥ |
| चकिता<br>अस्या अष्टमे यतिः । | भात् समतनगैरष्टच्छेदे स्यादिह चकिता<br>ऽ।।,।।ऽ,ऽऽऽ,ऽऽ।,।।।,ऽ | दुर्ज्जयदनुजश्रेणीदुश्चेष्टाशतचकिता<br>यद्भुजपरिघत्राता याता साध्वसविगमम् ।<br>दीव्यति दिवि यन्माला स्वच्छं नन्दनविपिने<br>गच्छत शरणं कृष्णं तं भीता भवरिपुतः ॥ |
| पञ्चचामरम् | प्रमाणिका पदद्वयं वदन्ति पञ्चचामरम्<br>।ऽ।,ऽ।ऽ,।,ऽ,।ऽ।,ऽ।ऽ,।,ऽ | सुरद्रुमूलमण्डपे विचित्ररत्ननिर्म्मिते<br>लसद्वितानभूषिते सलीलविभ्रमालसम् ।<br>सुराङ्गनाभवल्लवीकरप्रपञ्चचामर-<br>स्फुरत्समीरवीजितं सदाच्युतं भजामि तम् । |
| मदनललिता<br>चतुर्थे षष्ठे च यतिः । | म्भौ नो म्नौ गो मदनललिता वेदैः ऋतुभिः<br>ऽऽऽ,ऽ।।,।।।,ऽऽऽ,।।।,ऽ | विभ्रश्यत्स्रग्गलितचिकुरा धौताधरपुटा<br>म्लायत्पत्रावलिकुचतटोच्छ्वासोर्म्मितरला ।<br>राधात्यर्थं मदनललितान्दोलालसवपुः<br>कंसारातेरतिरसमहो चक्रेऽतिचटुलम् ॥ |
| वाणिनी | नजभजरैर्यदा भवति वाणिनी गयुक्तैः<br>।।।,।ऽ।,ऽ।।,।ऽ।,ऽ।ऽ,ऽ | स्फुरतु ममाननेऽद्य ननु वाणि ! नीतिरम्यं<br>तव चरणप्रसादपरिपाकतः कवित्वम् ।<br>भवजलराशिपारकरणक्षमं मुकुन्दं<br>सततमहं स्तवैः स्वरचितैः स्तवानि नित्यम् । |
| प्रवरललितम् | यमौ नः स्रौ गश्च प्रवरललितं नाम वृत्तम्<br>।ऽऽ,ऽऽऽ,।।।,।।ऽ,ऽ।ऽ,ऽ | भुजोत्क्षेपः सूर्य्ये चलवलयझङ्कारयुक्तो<br>सुधा पादन्यासः प्रकटिततुलाकोटिनादः ।<br>स्मितं वक्त्रेऽकस्माद्दृशि पटुकटाक्षोर्म्मिलीला<br>हरौ जीयादीदृक् प्रवरललितं वल्लवीनाम् । |

| छन्दसां वृत्तिनामानि। | छन्दसां लक्षणगाथाः। | छन्दसामुदाहरणानि। |
|---|---|---|
| अचलधृतिः | द्विगुणितवसुलघुभिरचलधृतिरिह<br>IIIIIII,IIIIIII | तरणिसुदुहितृतटवनिचरतरवसति-<br>रमरमुनिसुखजननिविहितधृतिरिह।<br>मधुरिपुरभिनवजलधरवपितनु-<br>रचलधृतिरुदयति सुकृतिहृदि खलु॥ |
| गरुडरुतम् | गरुडरुतं नजौ भजतगा यदा सुखदा<br>III,ISI,SII,ISI,SSI,S | अमरमयूरमानसमुदे पयोदध्वनि-<br>र्गरुडरुतं सुरारिभुजगेन्द्रसन्त्रासने।<br>धरणिभरावतारविधिडिण्डिमाडम्बरः<br>स जयति कंसरङ्गभुवि सिंहनादो हरेः॥ |
| धीरललिता | संकथिता भरौ नरनगाश्च धीरललिता<br>SII,SIS,III,SIS,III,S | |
| अश्वगतिः | पञ्चभकारयुताऽश्वगतिर्यदि चान्त्यगुरुः<br>SII,SII,SII,SII,SII,S | |
| मणिकल्पलता | नजरभमैन गेन च स्यान्मणिकल्पलता<br>III,ISI,SIS,SII,SII,S | |
| रूपम् | यस्मिन् सर्वे गा राजन्ते अष्टादशं तद्रूपं नाम<br>S,S,S,S,S,S,S,S,S,S,S,S,S,S,S,S,S,S | |
| वरयुवतिः | भो रयना नगौ च यस्यां वरयुवतिरियम्<br>SII,SIS,ISS,III,III,S | |
| मन्दाक्रान्ता वृत्तिः। अत्यष्टिः। | | |
| शिखरिणी<br>षष्ठे एकादशे च यतिः। | रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी<br>ISS,SSS,III,IIS,SII,I,S | करादस्य भ्रष्टे ननु शिखरिणी दृश्यति शिशो-<br>र्विलीनाः क्षः सत्यं नियतमवधेयं तदखिलैः।<br>इति प्रस्यन्नोपाश्रुचितनिभृतालापजनितं<br>स्मितं बिभ्रद्देवो जगदवतु गोवर्द्धनधरः॥ |
| पृथ्वी<br>अष्टमे नवमे च यतिः। | जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः<br>ISI,IIS,ISI,IIS,ISS,I,S | दुरन्तदनुजेश्वरप्रकरदुःसहष्टथ्वीभरं<br>जहार निजलीलया यदुकुलेऽवतीर्यात्र यः।<br>स एष जगतीगतिर्दुरितभारमस्माद्दृशां<br>हरिष्यति हरिः स्तुतिस्मरणचाटुभिस्तोषितः॥ |
| वंशपत्रपतितम्<br>वंशदलमिति शम्भौ वंशपत्रपतिता इति केचित्। अस्य दशमे सप्तमे च यतिः। | दिङ्मुनि वंशपत्रपतितं भरनभनलगैः<br>SII,SIS,III,SII,III,I,S | गतनवंशपत्रपतितं रजनिजललवं<br>पश्य सुकुन्द! मौक्तिकमिवोत्तममरकतगम्।<br>एष च तं चकोरनिकरः प्रपिबति मुदितो<br>वाञ्छमवैत्य चन्द्रकिरणैरमृतकणमिव॥ |
| मन्दाक्रान्ता<br>अस्याश्चतुर्थे षष्ठे सप्तमे च यतिः।<br>इयं दौत्यवर्णनोपयोगिनी शस्ता। | मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्<br>SSS,SII,III,SSI,SSI,S,S | प्रेमालापैः प्रियवितरणैः प्रीणितालिङ्गनाद्यै-<br>र्मन्दाक्रान्ता तदनु नियतं वश्यतामेति बाला।<br>एवं शिक्षावचनसुधया राधिकायाः सखीनां<br>प्रीतः पायात् स्मितसुवदनो देवकीनन्दनो नः॥ |
| हरिणी<br>षष्ठे चतुर्थे सप्तमे च यतिः। | नसमरसला गः षड्वेदैर्हयैर्हरिणी मता<br>III,IIS,SSS,SIS,IIS,I,S | व्यधित स विधिर्नेत्रं नीत्वा ध्रुवं हरिणीगणाद्-<br>व्रजनन्दगदृशां सन्दोहस्योल्लसन्नयनश्रियम्।<br>यदयमनिशं दूर्वाश्यामे मुरारिकलेवरे<br>व्यकिरदधिकं वक्राकाङ्क्षं विलोलविलोचनम्॥ |
| नर्दटकम् | यदि भवतो नजौ भजजला गुरु नर्दटकम्<br>III,ISI,SII,ISI,ISI,I,S | व्रजवनिता वसन्तलतिका विलसन्मधुपं<br>मधुमथनं प्रणम्यजनवाञ्छितकल्पतरुम्।<br>विभुमभिनौति कोऽपि सुकृती मुदितेन हृदा<br>रुचिरपदावलीघटितनर्दटकेन कविः॥ |
| कोकिलकम्<br>अस्य सप्तमे षष्ठे चतुर्थे च यतिः। | हयऋतुसागरैर्यतियुतं यदि कोकिलकम्<br>III,ISI,SII,ISI,ISI,I,S | लसदरविन्दं मधुरभाषणमोदकरं<br>मधुसमयागमे सरसकेलिभिरुल्लसितम्।<br>अलिललितद्युतिं रविसुतावनकोकिलकं<br>ननु कलयामि तं सखि! सदा हृदि नन्दसुतम्॥ |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
|---|---|---|
| हारिणी<br>अस्याश्चतुर्थे षष्ठे सप्तमे च यतिः । | वेदर्त्वश्वैर्मभनमयला गश्चेत्तदा हारिणी<br>२२२,२॥,॥।,२२२,।२२,।,२ | यस्या नित्ये श्रुतिकुवलये श्रीशालिनी लोचने<br>रागः स्वीयोऽधरकिसलये लाक्षारसारञ्जनम्।<br>गौरी कान्तिः प्रकृतिरुचिरा रम्याङ्गरागच्छटा<br>सा कंसारेरजनि न कथं राधा मनोहारिणी |
| भाराक्रान्ता<br>चतुर्थे षष्ठे सप्तमे च यतिः । | भाराक्रान्ता मभनरसला गुरुः श्रुतिषड्हयैः<br>२२२,२॥,॥।,२।२,॥२,।,२ | भाराक्रान्ता मम तनुरियं गिरीन्द्रविधारणात्<br>कम्पं धत्ते श्रमजलकणां तथा परिस्रवति। |
| हरिः | रसयुगहययुङ् नौ म्रौ स्लो लगौ हि यदा हरिः<br>॥।,॥।,२२२,२।२,॥२,।,२ | इत्याकर्णन् जयति जलदश्यामाकुलवल्लवी-<br>संश्लेषोत्थं स्मरविलसितं विलोक्य गुरुं हरिः। |
| कान्ता | भवेत् कान्ता युगरसहयैर्यभौ नरसा लगौ<br>।२२,२॥.॥।,२।२,॥२,।,२ | |
| चित्रलेखा<br>दशमे सप्तमे च यतिः । | ससजा भजगा ग दिक्स्वरैर्भवति चित्रलेखा<br>॥२,॥२,।२।,२॥,।२।,२,२ | |
| अतिशायिनी | ससजैरतिशायिनी मता भजपरैर्गुरुभ्याम्<br>॥२,॥२,।२।,२॥,।२।,२,२ | |
| पञ्चचामरम् | अवेहि पञ्चचामरं जरौ जरौ जगौ लघुश्च<br>।२।,२।२,।२।,२।२,।२।,२,। | |
| अष्टादशाक्षरा वृत्तिः । धृतिः । | | |
| कुसुमितलतावेल्लिता<br>पञ्चमे षष्ठे सप्तमे च यतिः । | स्यादूतर्त्वश्वैः कुसुमितलतावेल्लिता म्तौ नयौ यौ<br>२२२,२२।,॥।,।२२,।२२,।२२ | क्रीडत्कालिन्दीललितलहरीवारिभिर्दाक्षिणात्यै-<br>र्वातैः खेलद्भिः कुसुमितलता वेल्लिता मन्दमन्दम्<br>भृङ्गालीगीतैः किसलयकरोल्लासितोल्लास्यलक्ष्मीं<br>तन्वाना चेतो रभसतरलं चक्रपाणेश्चकार । |
| नन्दनम्<br>एकादशे सप्तमे च यतिः । इद-<br>मेव वेदरेफैश्छिन्ना महामालिका<br>चाधिकदशभिस्तारका दशवसु-<br>भिर्लसा इति कुत्रापि । | नजभजरैस्तु रेफसहितैः शिवैर्हयैर्नन्दनम्<br>॥।,।२।,२॥,।२।,२।२,२।२ | तरणिसुतातरङ्गपवनैः सलीलमान्दोलितं<br>मधुरिपुपादपङ्कजरजःसुपूतपृथ्वीतलम्।<br>सुरहरचित्रचेष्टितकलाकलापसंस्मारकं<br>क्षितितलनन्दनं व्रज सखे ! सुखाय वृन्दावनम्। |
| नाराचम् | इह ननरचतुष्कसृष्टन्तु नाराचमाचक्षते<br>॥।,॥।,२।२,२।२,२।२,२।२ | दिनकरतनयातटीकानने चारुसञ्चारिणी<br>श्रवणनिकटकृष्टमेणीदृशा कृष्ण ! राधा त्वयि।<br>ननु विकिरति नेत्रनाराचमेषातिकृच्छ्रेदनं<br>तदिह मदनविभ्रमोद्भ्रान्तचित्तावधत्स्व द्रुतम्। |
| चित्रलेखा<br>चन्द्रलेखा इति क्वचित् । | मन्दाक्रान्ता नपरलघुयुता कीर्त्तिता चित्रलेखा<br>२२२,२॥,॥।,।,२२।,२२।,२,२ | शङ्केऽमुष्मिन् जगति मृगदृशां सारसङ्घं यदादौ-<br>दाकृष्येदं व्रजयुवतिसभा वेधसा सा व्यधायि।<br>नैतादृक् चेत् कथमुदधिसुतामन्तरेणाच्युतस्य<br>प्रीतं तस्यां नयनयुगमभूच्चित्रलेखाद्भुतायाम्। |
| शार्दूलललितम्<br>द्वादशे चरणान्ते च यतिः । | मः सो जः सतसा दिनेशऋतुभिः शार्दूलललि-<br>तम्<br>२२२,॥२,।२।,॥२,२२।,॥२ | हत्वा कंसमृगे पराक्रमविधिं शार्दूलललितं<br>यश्चक्रे क्षितिभारकारिषु सुरारातिष्वतिदरम्।<br>सन्तोषं परमन्तु देवनिवहे त्रैलोक्यशरणं<br>श्रेयो वः स तनोत्वपारमहिमा लक्ष्मीप्रियतमः। |
| हरिणप्लुतम्<br>हरिणप्लुतेति कुत्रापि । | मात् सो जौ भरसंयुतौ करिबाणखैर्हरिणप्लुतम्<br>२२२,॥२,।२।,।२।,२॥,२।२ | |
| अश्वगतिः | पञ्चभकारयुताश्वगतिर्यदि चान्त्यसरचिता<br>२॥,२॥,२॥,२॥,२॥,॥२ | |
| सुधा | सुधा तर्कैस्तर्कैर्भवति ऋतुभिर्यो मो नससतसाः<br>।२२,२२२,॥।,॥२,२२।,॥२ | |
| चित्रलेखा | वर्णाश्वैर्मननततमकैः कीर्त्तिता चित्रलेखेयम्<br>२२२,॥।,॥।,२२।,२२।,२२२, | |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
|---|---|---|
| भ्रमरपदकम् | भाद्रगना नसौ भ्रमरपदकमिदमभिहितम्<br>ऽ।।,ऽ।ऽ,।।।,।।।,।।।,।।ऽ | |
| शार्दूलम् | शार्दूलं वद मासषट्कयति मः सो जसौ रो मश्चेत्<br>ऽऽऽ,।।ऽ,।ऽ।,।।ऽ,ऽ।ऽ,ऽऽऽ | |
| केसरम् | अर्थाश्वाश्वैर्मभनयरयुगैर्वृत्तं मतं केसरम्<br>ऽऽऽ,ऽ।।,।।। ।ऽऽ,ऽ।ऽ,ऽ।ऽ | |
| चलम् | भ्रौ नृजौ भ्रौ चेच्चलमिदमुदितं युगैर्मुनिभिः स्वरैः<br>ऽऽऽ,ऽ।।,।।।,।ऽ।,ऽ।।.ऽ।ऽ | |
| लालसा | सैका वसुविरतिस्तनौ रैश्चतुर्भिर्युता लालसा<br>ऽऽ।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | |
| लता | भवति नयुगलं रभौ रौ दशभिर्गजेन्द्रैर्लता<br>।।।,।।।,ऽ।ऽ,ऽ।।,ऽ।ऽ,ऽ।ऽ | |
| सिंहविस्फूर्ज्जितम् | तद्भूतत्वैश्वैर्मौ भमौ विरतिश्चेत् सिंहवि-<br>स्फूर्ज्जितं यौ<br>ऽऽऽ,ऽऽऽ,ऽ।।,ऽऽऽ,।ऽऽ,।ऽऽ | |
| हरनर्त्तनम्<br>विबुधप्रिया इति च क्वापि । | रसौ जजौ भरसंयुतौ करिवाणखैर्हरनर्त्तनम्<br>ऽ।ऽ,।।ऽ,।ऽ।,।ऽ।,ऽ।।,ऽ।ऽ | |
| क्रौड़चक्रम् | इदं क्रौड़चक्रं सदीर्घं समस्तैर्यकारैः समेतम्<br>।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ, | |
| हीरकम् | हीरकमुदितं भसनजनैरिह रगणोऽन्ततः<br>ऽ।।,।।ऽ,।।।,।ऽ।,।।।,ऽ।ऽ | |
| ऊनविंशत्यक्षरा वृत्तिः। अतिधृतिः। | | |
| मेघविस्फूर्ज्जिता<br>षष्ठे षष्ठे सप्तमे च यतिः । | रसर्त्वश्वैर्य्मौ नसौ ररगुरुयुतौ मेघविस्फूर्ज्जिता स्यात् ।<br>।ऽऽ,ऽऽऽ,।।।,।।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ | कदम्बामोदाढ्या विपिनपवनाः केकिनः कान्तकेका<br>विनिद्राः कन्दल्यो दिशि दिशि मुदा दर्दुरा दृप्तनादाः ।<br>निशा नृत्यद्विद्युद्विलसितलसन्मेघविस्फूर्ज्जिता चेत्<br>प्रियः स्वाधीनोऽसौ दनुजदलनो राज्यमस्मात् किमन्यत् ॥ |
| छाया<br>षष्ठे द्वादशे अन्ते च यतिः । | भवेत् सैवच्छाया तयुगगयुता स्यात् द्वादशान्ते यदा<br>।ऽऽ,ऽऽऽ,।।।,।।ऽ,ऽऽ।,ऽऽ।,ऽ | अभीष्टं जुष्टो यो वितरति लसद्दोश्चारुशाखोज्ज्वलः<br>स्फुरन्मागाररत्नस्तवकिततनुश्चित्रांशुकालम्बितः ।<br>न यस्याङ्घ्रिच्छायामुपगतवतां संसारतीव्रातप-<br>स्तनोति प्रोत्तापं स जगदवतात् कंसारिकल्पद्रुमः ॥ |
| शार्दूलविक्रीड़ितम्<br>द्वादशे ऊनविंशतौ च यतिः । | सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूल-<br>विक्रीड़ितम्<br>ऽऽऽ,।।ऽ,।ऽ।,।।ऽ,ऽऽ।,ऽऽ।,ऽ | गोविन्दं प्रणमोत्तमाङ्ग ! रसने ! त्वं घोषयाहर्निशं<br>पाणी ! पूजयतं मनः ! स्मर पदे ! तस्यालयं गच्छतम् ।<br>एवञ्चेत् कुरुताखिलं मम हितं शीर्षादयस्तद् ध्रुवं<br>न प्रेक्षे भवतां कृते भवमहाशार्दूलविक्रीड़ितम् ॥ |
| सुरसा<br>सप्तमे चतुर्दशे अन्ते च यतिः । | म्रौ भ्नौ यो नौ गुरुश्चेत् स्वरमुनिकरणैराह<br>सुरसाम्<br>ऽऽऽ,ऽ।ऽ,ऽ।।,।।।,।ऽऽ,।।।,ऽ | कामक्रीड़ासतृष्णो मधुसमयसमारम्भरभसात्<br>कालिन्दीकूलकुञ्जे विहरणकुतुकाकृष्टहृदयः ।<br>गोविन्दो वल्लवीनामधररससुधां प्राप्य सुरसां<br>शङ्के पीयूषपानप्रभवजनसुखं व्यस्मरदसौ ॥ |
| फुल्लदाम<br>पञ्चमे द्वादशे अन्ते च यतिः ।<br>पुष्पदाम इति केचित् । | मो गौ नौ तौ गौ स्वरहयतुरगैः फुल्लदाम प्रसि-<br>द्धम्<br>ऽऽऽ,ऽ,ऽ,।।।,।।।,ऽऽ।,ऽऽ।,ऽ,ऽ | शश्वल्लोकानां प्रकटितकदनं ध्वस्तमालोक्य कंसं<br>हृष्यच्चेतोभिश्छिदिववसतिभिर्व्योमसंस्थैर्विसृष्टम् ।<br>सुग्धामोदेन स्थगितदशदिगाभोगमाभूतभृङ्गं<br>मौलौ दैत्यारेर्न्यपतदनुपमं स्वस्तरोः फुल्लदाम ॥ |
| पञ्चचामरः | नयुगलगलत्र रजौ रलगा यदा स पञ्चचामरः<br>।।।,।।।,ऽ,।,ऽ।ऽ,।ऽ।,ऽ।ऽ,।,ऽ | |
| बिम्बम् | वृत्तं बिम्बाख्यं शरमुनितुरगैर्म्तौ नसौ ततौ<br>चेद्गुरुः<br>ऽऽऽ,ऽऽ।,।।।,।।ऽ,ऽऽ।,ऽऽ।,ऽ | |

| छन्दसां वृत्तिनामानि। | छन्दसां लक्षणगणाः। | छन्दसामुदाहरणानि। |
| --- | --- | --- |
| मकरन्दिका | रसैः षड्भिर्लोकैर्यमनसजजा गुरुर्मकरन्दिका<br>।ऽऽ,ऽऽऽ,।।।,।।ऽ,।ऽ।,।ऽ।,ऽ | |
| मणिमञ्जरी | इनाश्वैः स्यात् यभनयजजगाः कीर्त्तिता मणि-मञ्जरी<br>।ऽऽ,ऽ।।,।।।,।ऽऽ,।ऽ।,।ऽ।,ऽ | |
| समुद्रतता | मजाश्वितुरगैर्जसौ जसतभा गश्चेत् समुद्रतता<br>।ऽ।,।।ऽ,।ऽ।,।।ऽ,ऽऽ।,ऽ।।,ऽ | |
| विंशत्यक्षरा वृत्तिः। कृतिः। | | |
| सुवदना<br>सप्तमे चतुर्दशे विंशतौ च यतिः। | ज्ञेया सप्ताश्वषड्भिर्मरभनययुता भ्लौ गः सुवदना<br>ऽऽऽ,ऽ।ऽ,ऽ।।,।।।,।ऽऽ, ऽ।।,।,ऽ | प्रत्याहृत्येन्द्रियाणि त्वदितरविषयाण्यासाद्यनयना<br>त्वां ध्यायन्ती निकुञ्जे परमतररसं हर्षोत्थपुलका।<br>आनन्दाश्रुप्लुताक्षी वसति सुवदना योगैकरसिका<br>कामार्त्तिं त्यक्तुकामा ननु नरकरिपो! राधा मम सखी॥ |
| गीतिका | सजजा भरौ सलगा यदा कथिता तदा खलु गीतिका<br>।।ऽ,।ऽ।,।ऽ।,ऽ।।,ऽ।ऽ,।।ऽ,।,ऽ | करतालचञ्चलकङ्कणस्वनमिश्रणेन मनोरमा<br>रमणीयवेणुनिनादरङ्गिमसङ्गमेन सुखावहा।<br>बहुलानुरागनिवासरासिसमुद्भवा भवरागिणां<br>विदधौ हरिं खलु वल्लवीजनचारु चामरगीतिका॥ |
| वृत्तम् | वृत्तमीदृशन्तु नामतो रजौ रजौ रजौ गुरुर्लघुश्च<br>ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽ।,ऽ,। | चित्रनृत्तलीलया निसर्गरम्यदेहरूपविभ्रमेण<br>राजमानसद्वयोविलाससम्पदा कलाकुतूहलेन।<br>यः समं व्रजाङ्गनाजनैः सुराङ्गनानिभैः सुखं समेत<br>विष्णुरुल्लसच्चित्तपद्मकोषषट्पदः स मे सदास्तु॥ |
| शोभा<br>षष्ठे त्रयोदशे अन्ते च यतिः। | रसाश्वाश्वैः शोभा यमननततगा मेघविस्फूर्ज्जिता चेत्<br>।ऽऽ,ऽऽऽ,।।।,।।।,ऽ,ऽ।ऽ,ऽ।ऽ,ऽ | सपीयषोन्मीलत्सरसिजयुगला मध्यनम्रा फलाभ्यां<br>तयोरूर्द्ध्वं राजत्तरलकिसलयाश्लिष्टसुस्निग्धशाखा।<br>लसन्मुक्तारक्तोत्पलकुवलयवच्चन्द्रबिम्बाञ्चिताग्रा<br>महाशोभा मौलौ मिलदलिपटलैः कृष्ण! सा कापि वल्ली॥ |
| सुवंशा | ख्याता पूर्व्वैः सुवंशा यदि मरभना तद्द्वयं गो गुरुश्च<br>ऽऽऽ,ऽ।ऽ,ऽ।।,।।।,ऽऽ।,ऽऽ।,ऽ,ऽ | |
| मत्तेभविक्रीडितम्<br>त्रयोदशे यतिः। | सभरा नमौ यलगाश्चयोदशयतिर्मत्तेभविक्रीडितम्<br>।।ऽ,ऽ।।,ऽ।ऽ,।।।,ऽऽऽ,।ऽऽ,।,ऽ | |
| एकविंशत्यक्षरा वृत्तिः। प्रकृतिः। | | |
| स्रग्धरा<br>सप्तमे चतुर्दशे एकविंशतौ च यतिः। | म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्<br>ऽऽऽ,ऽ।ऽ,ऽ।।,।।।,।ऽऽ,।ऽऽ,।ऽऽ | व्याकोषेन्दीवराभा कनककपिलसत्पीतवासाः सुहासा<br>बर्हैश्चन्द्रकान्तैर्व्वलयितचिकुरा चारुकर्णावतंसा।<br>अंसव्यासक्तवंशध्वनिसुखितजगद्वल्लवीभिर्लसन्ती<br>मूर्त्तिर्गोपस्य विष्णोरवतु जगति वः स्रग्धरा हारिहारा॥ |
| सरसी<br>सिद्धकमिति सलिलनिधिरिति च कापि। | नजभजजा जरौ यदि तदा गदिता सरसी कवीश्वरैः<br>।।।,।ऽ।,ऽ।।,।ऽ।,।ऽ।,।ऽ।,ऽ।ऽ | चिकुरकलापशैवलकृतप्रमदासु लसद्रसोर्म्मिषु<br>स्फुटवदनाम्बुजासु विलसद्भुजवालमृणालवल्लिषु।<br>कुचयुगचक्रवाकमिथुनानुगता सुकलाकुतूहली<br>व्यरचयदच्युतो व्रजमृगीनयनासरसीषु विभ्रमम्॥ |
| द्वाविंशत्यक्षरा वृत्तिः। आकृतिः। | | |
| हंसी<br>अष्टमे द्वाविंशतौ च यतिः। | मौ गौ नाश्चत्वारो गो गौ वसुभुवनयतिरिति भवति हंसी<br>ऽऽऽ,ऽऽऽ,ऽ,ऽ,।।।,।।।,।।।,।।।,ऽ,ऽ | सार्द्धं कान्तेनैकान्तेऽसौ विकचकमलमधुसुरभि पिबन्ती<br>कामक्रीडाकूतस्फीतप्रमदरसरभसमलघु रसन्ती।<br>कालिन्दीये पद्मारण्ये पवनपतनपरितरलपरागे<br>कंसाराते! पश्य स्वैच्छं सरभसगतिरिह विलसति हंसी॥ |
| मदिरा | सप्तभकारयुतैकगुरुर्गदितेयमुदारतरा मदिरा<br>ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ | माधवमासि विकस्वरकेशरपुष्पलसन्मदिरामुदिते-<br>र्भृङ्गकुलैरुपगीतवने वनमालिनमालि! कलानिलयम्।<br>कुञ्जगृहोदरपल्लवकल्पिततल्पमनल्पमनोज्ञरसं<br>त्वं भज माधविका मृदुनर्त्तकयासुनवातलतोपगमा॥ |

<table>
<tr><th>छन्दसां वृत्तिनामानि ।</th><th>छन्दसां लक्षणगणाः ।</th><th>छन्दसामुदाहरणानि ।</th></tr>
<tr><td>भद्रकम्</td><td>भौ नरना रनावथ गुरुर्दिगर्कविरमं हि भद्रकमिदम्<br>ऽ||,ऽ|ऽ,|||,ऽ|ऽ,|||,ऽ|ऽ,|||,ऽ</td><td></td></tr>
<tr><td>लालित्यम्</td><td>लालित्यं भुजगेन्द्रेण भाषितमेतच्चेन् मसरक्त-<br>जनगुभिः<br>ऽऽऽ,||ऽ,ऽ|ऽ,||ऽ,ऽऽ|,|ऽ|,|||,ऽ</td><td></td></tr>
<tr><td>महास्रग्धरा</td><td>सजता नसौ ररौ गः फणितुरगहयैः स्यान्महा<br>स्रग्धराख्या<br>||ऽ,|ऽ|,ऽऽ|,|||,||ऽ,ऽ|ऽ,ऽ|ऽ,ऽ</td><td></td></tr>
<tr><td>त्रयोविंशत्यक्षरा वृत्तिः। विकृतिः।<br>अद्रितनया<br>अश्वललितमित्यन्यत्र ।</td><td>नजभजभा जभौ लघुगुरू बुधैस्तु गदितेय-<br>मद्रितनया<br>|||,|ऽ|,ऽ||,|ऽ|,ऽ||,|ऽ|,ऽ||,|,ऽ</td><td>खरतरशौर्यपावकशिखापतङ्गनिभमग्नदग्धदनुजो<br>जलधिसुताविलासवसतिः सतां गतिरशेषमान्यमहिमा ।<br>भुवनहितावतारचतुरश्चराचरधरोऽवतीर्ण इह हि<br>क्षितिवलयेऽस्ति कंसशमनस्त्वेति नमतोचदद्रितनया ॥</td></tr>
<tr><td>मत्ताक्रीडम्<br>अष्टमे त्रयोदशे त्रयोविंशतौ च यतिः। मत्ताक्रीडा इति क्वचित् ॥</td><td>मत्ताक्रीडं वस्विष्वाशायति मयुगगयुगमनुलघु-<br>गुरुभिः<br>ऽऽऽ,ऽऽऽ,ऽ,ऽ,||||||||||||||,ऽ</td><td>मुग्धोन्मीलन्मत्ताक्रीडं मधुसमयसुलभमधुरमधुरसात्<br>गाने याने किञ्चित्स्पन्दत्पदमरुणनयनयुगलसरसिजम् ।<br>राधोल्लासक्रीडत्कम्प्रव्रजयुवतिजनरचितभुजरसं<br>साक्षानन्दं वृन्दारण्ये स्मरत हरिमनघचरणपरिचयम् ॥</td></tr>
<tr><td>सुन्दरिका</td><td>इह सुन्दरिका पिङ्गलमुनिनोक्ता सजयतो<br>भसता जलभगाः<br>||ऽ,||ऽ,ऽ||,||ऽ,ऽऽ|,|ऽ|,|,ऽ||,ऽ</td><td></td></tr>
<tr><td>चतुर्विंशत्यक्षरा वृत्तिः। संस्कृतिः।<br>तन्वी<br>पञ्चमे द्वादशे चतुर्विंशतौ च यतिः।</td><td>भूतमुनीनैर्यतिरिह भतनाः स्भौ भनयाश्च यदि<br>भवति तन्वी<br>ऽ||,ऽऽ|,|||,||ऽ,ऽ||,ऽ||,|||,|ऽऽ</td><td>माधव मुग्धैर्मधुकरविरुतैः कोकिलकूजितमलयसमीरैः<br>कम्पमुपेता मलयजसलिलैः प्लावनतोऽप्यधिगततनुदाहा ।<br>पद्मपलाशैर्विरचितशयना देहजसंज्वरभरपरिदूनै<br>निःश्वसती सा मुहुरतिपरुषं ध्यानलये तव निवसति तन्वी ॥</td></tr>
<tr><td>किरीटम्</td><td>नाम किरीटमिदं भगणा यदि पिङ्गलनाग-<br>मुनीन्द्रमतं किल<br>ऽ||,ऽ||,ऽ||,ऽ||,ऽ||,ऽ||,ऽ||,ऽ||</td><td></td></tr>
<tr><td>दुर्मिलम्</td><td>सगणैरिह वृत्तवरं वसुभिः किल दुर्मिलमुक्तमिदं<br>कविभिः<br>||ऽ,||ऽ,||ऽ,||ऽ,||ऽ,||ऽ,||ऽ,||ऽ</td><td></td></tr>
<tr><td>पञ्चविंशत्यक्षरा वृत्तिः। अतिकृतिः।<br>क्रौञ्चपदा<br>पञ्चमे दशमे अष्टादशे पञ्चविंशतौ च यतिः।</td><td>क्रौञ्चपदा स्यात् भो मसभाश्चेदिषुशरवसुमुनि-<br>यति मनुलघुगैः<br>ऽ||,ऽऽऽ,||ऽ,ऽ||,||||||||||||,ऽ</td><td>क्रौञ्चपदालीचिचिततीरा मदकलखगकुलकलकलरुचिरा<br>फुल्लसरोजश्रेणिविलासा मधुमुदितमधुपरवरभसकरी ।<br>फेनविलासप्रोज्ज्वलहासा ललितलहरिभरपुलकितसुतनुः<br>पश्य हरेऽसौ कस्य न चेतो हरति तरलगतिरहिम-<br>किरणजा ॥</td></tr>
<tr><td>षड्विंशत्यक्षरा वृत्तिः। उत्कृतिः।<br>भुजङ्गविजृम्भितम्<br>अष्टमे जनविंशतौ षड्विंशतौ च यतिः।</td><td>वस्वीशाश्वैश्छेदोपेतं ममतननयुग रसलगै-<br>र्भुजङ्गविजृम्भितम्<br>ऽऽऽ,ऽऽऽ,ऽऽ|,|||,|||,|||,ऽ|ऽ,||ऽ,|,ऽ</td><td>हेलोदञ्चन्नाचत्पादप्रकटविकटनटनभरो रणत्करतालक-<br>श्रावप्रेङ्खच्चूडाबर्हः स्फुरितरुचिरकिसलयस्तरङ्गित-<br>हारभृत् ।<br>अस्यन्नागस्त्रीभिर्भक्त्या मुकुलितकरकमलयुगं कृतस्तुति-<br>रच्युतः<br>पायाद्भिन्दन् कालिन्दीह्रदलुठितनिजवसतिर्भुजङ्ग-<br>विजृम्भितम् ॥</td></tr>
<tr><td>अपवाहम्</td><td>मो नाः षट् सगागिति यदि नवरसरसशर-<br>यतियुतमपवाहाख्यम्<br>ऽऽऽ,|||,|||,|||,|||,|||,|||,||ऽ,ऽ,ऽ</td><td></td></tr>
</table>

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
|---|---|---|
| अथ दण्डकाः ।<br>सप्तविंशत्यक्षरा वृत्तिः । | | |
| चण्डवृष्टिप्रपातः | यदिह नयुगलं ततः सप्तरेफास्तदा चण्ड-<br>वृष्टिप्रपातो भवेद्दण्डकः<br>111,111,212,212,212,212,212,212,212, | प्रलयघनघटामहारम्भमेघावलीचण्डवृष्टिप्रपाताकुलं गो<br>सपदि समवलोक्य सव्येन हस्तेन गोवर्द्धनं नाम शैलं<br>दधल्लीलया<br>कमलनयन ! रक्ष रक्षेति गर्ज्जत्समुग्धगोपाङ्गनालिङ्ग-<br>नानन्दि<br>गलदभिनवधातुधाराविचित्राङ्गरागो मुरारातिरस्तु<br>प्रमोदाय वः |
| प्रचितकः | प्रचितकसमभिधो धीरधीभिः स्मृतो दण्डको<br>नद्वयादुत्तरैः सप्तभिर्यैः<br>111,111,122,122,122,122,122,122,122 | सुरहर ! यदुकुलाम्भोधिचन्द्र ! प्रभो ! देवकीगर्भरत्न !<br>त्रिलोकैकनाथ<br>प्रचितकपटमुरारिव्रजोद्दामदन्तावलस्तोमविद्रावणै<br>केशरीन्द्र !<br>चरणनखरसुधांशुच्छटोन्मेषनिःशेषितध्यायिचेतो<br>निविष्टान्धकार<br>प्रगतजनपरितापोग्रदावानलोच्छेदमेघ ! प्रसीद प्रसीद<br>प्रसीद । |
| कुसुमस्तवकम् | सगणः सकलः खलु यत्र भवेत्तमिह प्रवदन्ति<br>बुधाः कुसुमस्तवकम्<br>112,112,112,112,112,112,112,112,112 | विरराज यदीयकरः कनकद्युतिबन्धुरवामदृशः<br>कुचकुड्मलगो<br>भ्रमरप्रकरेण यथावृतमूर्त्तिरशोकलताविलसत्कुसुमस्तव<br>स नवीनतमालदलप्रतिमच्छविबिभ्रदतीवविलोचनहारि<br>चपलाबचिरांशुकवल्लिधरो हरिरस्तु मदीयहृदम्बुज-<br>मध्यगतः |
| मत्तमातङ्गलीलाकरः | यत्र रेफः परं स्वेच्छया गुम्फितः स स्मृतो दण्डको<br>मत्तमातङ्गलीलाकरः<br>212,212,212,212,212,212,212,212,212 | हेमगौरं वसानोऽंशुकं शक्रनीलासिते वर्ष्मणि सादरया<br>कुलेपाङ्गि<br>हारतारांशुवन्योनभश्चित्रमालाञ्चितो भव्यभूषोज्ज्वलाङ्गः<br>समं सीरिणा<br>अञ्जनाभास्वरेणेन्दुकुन्दाभ देहेन लीलापरिहास-<br>हासोर्म्मिकौतूहले<br>कंसरङ्गाङ्गिपः पातु वश्चक्रपाणिर्गतिक्रीड़या मत्तमातङ्ग-<br>लीलाकरः |
| अष्टविंशत्यक्षरा वृत्तिः ।<br>अशोकपुष्पमञ्जरी | यत्र दृश्यते गुरोः परो लघुः क्रमात् स उच्यते<br>बुधैरशोकपुष्पमञ्जरीति<br>21212121212121212121212121 | मूर्द्धि चारुचम्पकस्रजा सलीलवेष्टनं लसल्लवङ्गचारु-<br>चन्द्रिका कर्ण<br>कर्णयोरशोकपुष्पमञ्जरीवतंसको गलेच कान्तकेशरी-<br>पकल्पदाम<br>फुल्लनागकेशरादिपुष्परेणुरूषणं तनौ विचित्रमित्यपास-<br>वेश ग<br>केशवः पुनातु वः सुपुष्पभूषितः स मूर्त्तिमानिवागतो<br>मधुर्विहङ्गम |
| अनङ्गशेखरः | लघुर्गुरुर्निरन्तरं निजेच्छया यदा निवेश्यते तदैष दण्डको<br>भवत्यनङ्गशेखरः<br>12121212121212121212121212 | उदेत्यसौ सुधाकरः पुरो विलोकयाद्य राधिके ! विदग्ध-<br>माधगौरदीधिति<br>रतिस्वहस्तनिर्म्मितः कलाङ्कुतूहलेन चारुचम्पकैरनङ्ग-<br>शेखरः किमु<br>इति प्रमोदकारिणीं प्रियाप्रमोदलक्षणां गिरं समुद्गिर-<br>न्मुरारिरद्भुतां<br>प्रदोषकालसङ्गमोल्लसन्मना मनोजकेलिकौतुकी करोतु वः<br>कृतार्थताम् । |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
|---|---|---|
| त्रिंशदक्षरा वृत्तिः । अर्णः | प्रतिचरणविवृद्धरेफाः स्युरर्णोऽर्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयः प्रतिचरणं चण्डवृष्टिप्रपातस्य रत्यर्थः । ।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | जय जय जगदीश विष्णो हरे राम दामोदर श्रीनिवासाच्युतानन्त नारायण त्रिदशगणगुरो मुरारे मुकुन्दासुरारे हृषीकेश पीताम्बर श्रीपते माधव । गरुडगमन कृष्ण वैकुण्ठ गोविन्द विश्वम्भरोपेन्द्र चक्रायुधाधोक्षज श्रीनिधे बलिदमन नृसिंह शौरे । भवाम्भोधिघोरार्णसि त्वं निमज्जन्तमभ्युद्धरोपेत्य माम् ॥ |
| सिंहविक्रीड़ः | यकारैः कवीच्छानुरोधान्निबद्धैः प्रसिद्धो विशुद्धोऽपरो दण्डकः सिंहविक्रीड़नामा ।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ | |
| त्रयस्त्रिंशदक्षरा वृत्तिः । अर्णवः | ।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | अर्णोवदर्णवादीनामप्युदाहरणानि बोद्धव्यानि ॥ |
| अशोकमञ्जरी | स्वेच्छया रजौ क्रमेण संनिवेशयत्युदारधीः कविः स दण्डकः स्मृतो जयत्यशोकमञ्जरी ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽ।,ऽ।ऽ | |
| षट्त्रिंशदक्षरा वृत्तिः । व्यालः | ।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | |
| ऊनचत्वारिंशदक्षरा वृत्तिः । जीमूतः | ।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | |
| द्वाचत्वारिंशदक्षरा वृत्तिः । लीलाकरः | ।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | |
| पञ्चचत्वारिंशदक्षरा वृत्तिः । उद्दामः | ।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | |
| सिंहविक्रान्तः | नयुगलगुरुयुगैवं यकाराः कवीच्छानुरोधात्तदा यत्र बध्यन्त एषोऽपरो दण्डकः पण्डितैरीरितः सिंहविक्रान्तनामा ।।।,।।।,।,ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ | |
| अष्टचत्वारिंशदक्षरा वृत्तिः । शङ्खः इत्यादयः । | ।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | |
| इति समवृत्तानि समाप्तानि ॥*॥ | | |
| अथार्द्धसमवृत्तानि । | | |
| उपचित्रम् ११ । ११ वृत्तिः । | विषमे यदि सौ सलगा दले भौ युजि भाद्गुरुकावुपचित्रम् । द्विरावृत्त्या श्लोकः पूरयितव्यः | |
| प्रथमपादे तृतीयपादे च | ।।ऽ,।।ऽ,।।ऽ,।,ऽ | सुरवैरिवपुस्तनुतां सुदं हेमनिभांशुकचन्दनलिप्तम् । |
| द्वितीयपादे चतुर्थपादे च | ऽ।।,ऽ।।,ऽ।।,ऽ,ऽ | गगनस्थघनाभिलिप्तं यथा शारदनीरधरैरुपचित्रम् ॥ |
| वेगवती १० । ११ वृत्तिः । | विषमे प्रथमाक्षरहीनं दोधकमेव हि वेगवती स्यात् | |
| प्रथमपादे तृतीयपादे च | ।।ऽ,।।ऽ,।।ऽ,ऽ | स्मर वेगवती व्रजरामा केशववंशरवैरतिमुग्धा । |
| द्वितीयपादे चतुर्थपादे च | ऽ।।,ऽ।।,ऽ।।,ऽ,ऽ | रभसान्न गुरून् गणयन्ती केलिनिकुञ्जगृहाय जगाम ॥ |

| छन्दसां वृत्तिनामानि। | छन्दसां लक्षणगणाः। | छन्दसामुदाहरणानि। |
|---|---|---|
| भद्रविराड़् १०।११ वृत्तिः। | ओजे तपरौ जरौ गुरुश्चेत् मृसौ जगौ ग भद्रविराड़् भवेदनोजे | |
| प्रथमपादे तृतीयपादे च | ऽऽ।,।ऽ।,ऽ।ऽ,ऽ | |
| द्वितीयपादे चतुर्थपादे च | ऽऽऽ,।।ऽ,।ऽ।,ऽ,ऽ | |
| केतुमती १०।११ वृत्तिः। | असमे सजौ सगुरुयुक्तौ केतुमती समे भरनगाद् गः | |
| प्रथमपादे तृतीयपादे च | ।।ऽ,।ऽ।,।।ऽ,ऽ | |
| द्वितीयपादे चतुर्थपादे च | ऽ।।,ऽ।ऽ,।।।,ऽ,ऽ | |
| विपरीतपूर्व्वा ११।११ वृत्तिः। | जतौ जगौ गो विषमे समे चेत् तौ जगौ ग एषा विपरीतपूर्व्वा | |
| प्रथमपादे तृतीयपादे च | ।ऽ।,ऽऽ।,।ऽ।,ऽ,ऽ | |
| द्वितीयपादे चतुर्थपादे च | ऽऽ।,ऽऽ।,।ऽ।,ऽ,ऽ | |
| आख्यानकी ११।१२ वृत्तिः। | आख्यानकी तौ जगुरू ग ओजे जतावनोजे जगुरू गुरुश्चेत् | |
| प्रथमपादे तृतीयपादे च | ऽऽ।,ऽऽ।,।ऽ।,ऽ,ऽ | |
| द्वितीयपादे चतुर्थपादे च | ।ऽ।,ऽऽ।,।ऽ।,ऽ,ऽ | |
| हरिणप्लुता ११।१२ वृत्तिः। | अयुजि प्रथमेन विवर्ज्जितं द्रुतविलम्बितकं हरिणप्लुता | |
| प्रथमपादे तृतीयपादे च | ।।,ऽ।।,ऽ।।,ऽ।ऽ | स्फुटफेनचया हरिणप्लुता बलिमनोज्ञतटा तरणेः सुता। |
| द्वितीयपादे चतुर्थपादे च | ।।।,ऽ।।,ऽ।।,ऽ।ऽ | कलहंसकुलारवशालिनी विहरतो हरति स्म हरेर्म्मनः॥ |
| अपरवक्त्रम् ११।१२ वृत्तिः। | अयुजि ननरला गुरुः समे तदपरवक्त्रमिदं नजौ जरौ | |
| प्रथमे तृतीये च पादे | ।।।,।।।,ऽ।ऽ,।,ऽ | स्फुटसुमधुरवेणुगीतिभिस्तमपरवक्त्रमवेत्य माधवम्। |
| द्वितीये चतुर्थे च पादे | ।।।,।ऽ।,।ऽ।,ऽ।ऽ | मृगयुवतिगणैः समं स्थिता व्रजवनिता धृतचित्तविभ्रमाः॥ |
| द्रुतमध्या ११।१२ वृत्तिः। | भत्रयमोजगतं गुरुणी चेद् युजि च नजौ ज्यगुतौ द्रुतमध्या | |
| प्रथमपादे तृतीयपादे च | ऽ।। ऽ।।,ऽ।।,ऽ,ऽ | |
| द्वितीयपादे चतुर्थपादे च | ।।।,।ऽ।,।ऽ।,।ऽऽ | |
| मालभारिणी ११।१२ वृत्तिः। | विषमे ससजा यदा गुरू चेत् सभरा येन तु मालभारिणीयम् | |
| प्रथमपादे तृतीयपादे च | ।।ऽ,।।ऽ,।ऽ।,ऽ,ऽ | |
| द्वितीयपादे चतुर्थपादे च | ।।ऽ,ऽ।।,ऽ।ऽ,।ऽऽ | |
| कौमुदी १२।१२ वृत्तिः। | अयुजि ननभभा समकेऽपि तु नयुगरयुगलं तदा कौमुदी | |
| प्रथमपादे तृतीयपादे च | ।।।,।।।,ऽ।।,ऽ।। | |
| द्वितीयपादे चतुर्थपादे च | ।।।,।।।,ऽ।ऽ,ऽ।ऽ | |
| पुष्पिताग्रा १२।१३ वृत्तिः। | अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा | |
| प्रथमपादे तृतीयपादे च | ।।।,।।।,ऽ।ऽ,।ऽऽ | करकिसलयशोभया विभान्ती कुचफलभारविनम्रदेहयष्टिः। |
| द्वितीयपादे चतुर्थपादे च | ।।।,।ऽ।,।ऽ।,ऽ।ऽ,ऽ | स्मितरुचिरविलासपुष्पिताग्रा व्रजयुवतिव्रततो हरेर्मुदेऽभूत्॥ |
| जत्रमती १२।१३ वृत्तिः। | स्यादयुग्मके रजौ रयौ समे चेत् जरौ जरौ गुरुश्चैवात् परा मतीयम् | |
| प्रथमपादे तृतीयपादे च | ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽऽ | |
| द्वितीयपादे चतुर्थपादे च | ।ऽ।,ऽ।ऽ,।ऽ।,ऽ।ऽ,ऽ | |
| मञ्जुसौरभम् १२।१३ वृत्तिः। | यदि विषमे भवतो नजौ जरौ संजयाः समे तु जगौ मञ्जुसौरभम् | |
| प्रथमपादे तृतीयपादे च | ।।।,।ऽ।,।ऽ।,ऽ।ऽ | |
| द्वितीयपादे चतुर्थपादे च | ।।ऽ,।ऽ।,।ऽऽ,।ऽ।,ऽ | |

| छन्दसां वृत्तिनामानि । | | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
|---|---|---|---|
| सुन्दरी १०।११ वृत्तिः । | | अयुजोर्यदि सौ जगौ युजोः सभरा लगौ यदि सुन्दरी तदा | |
| प्रथमे तृतीये पादे च | | ।।ऽ,।।ऽ,।ऽ।,ऽ | यदवोचदवेक्ष्य सुन्दरी परितः स्नेहमयेन चक्षुषा । |
| द्वितीये चतुर्थे पादे च | | ।।ऽ,ऽ।।,ऽ।ऽ,।,ऽ | अपि कंसहरस्य दुर्लभं वचनमन्तर्हृदधीत विस्मयम् ॥ |
| अर्द्धसमवृत्तानि समाप्तानि ॥ * ॥ | | | |
| अथ विषमवृत्तानि । | | | |
| उद्गता | | प्रथमे सजौ यदि सलौ च नसजगुरुकाण्यनन्तरम् । यद्यथ भनभगाः स्युरथो सजसा जगौ च भवतीयमुद्गता ॥ | |
| प्रथमे पादे | १० | ।।ऽ,।ऽ।,।।ऽ,। | विललास गोपरमणीषु तरलितनयाप्रभोद्गता । |
| द्वितीये | १० | ।।।,।।ऽ,।ऽ।,ऽ | लसन्नयनचकोरयुगे दधती सुधांशुकिरणोर्म्मिविभ्रमम् ॥ |
| तृतीये | १० | ऽ।।,।।।,ऽ।।,ऽ | |
| चतुर्थे | १३ | ।।ऽ,।ऽ।,।।ऽ,।ऽ।,ऽ | |
| अन्यविधोद्गता | | प्रथमे सजौ यदि सलौ च नसजगुरुकाण्यनन्तरम् । यद्यथ भनजलगाः स्युरथो सजसा जगौ च भवतीयमुद्गता ॥ | |
| प्रथमे पादे | १० | ।।ऽ,।ऽ।,।।ऽ,। | अथ वासवस्य वचनेन रुचिरवदनस्त्रिलोचनम् । |
| द्वितीये | १० | ।।।,।।ऽ,।ऽ।,ऽ | क्लान्तिरहितमभिराधयितुं विधिवत्तपांसि विदधे धनञ्जयः ॥ |
| तृतीये | ११ | ऽ।।,।।।,।ऽ।,।,ऽ | इति भारवावुद्गताभेदः । १२ । १ ॥ |
| चतुर्थे | १३ | ।।ऽ,।ऽ।,।।ऽ,।ऽ।,ऽ | |
| सौरभम् | | त्र्यसुद्गता सदृशमेव पदमिह तृतीयमन्यथा । जायते रनभगैर्ग्रथितं कथयन्ति सौरभकमेतदीदृशम् ॥ | |
| प्रथमे पादे | १० | ।।ऽ,।ऽ।,।।ऽ,। | परिभूतफुल्लशतपत्रवर्णविसृतगन्धविभ्रमा । |
| द्वितीये | १० | ।।।,।।ऽ,।ऽ।,ऽ | कस्य कृष्ण हरतीह हरे मुखपद्मसौरभकला तवाद्भुता ॥ |
| तृतीये | १० | ऽ।ऽ,।।।,ऽ।।,ऽ | |
| चतुर्थे | १३ | ।।ऽ,।ऽ।,।।ऽ,।ऽ।,ऽ | |
| ललितम् | | नयुगं सकारयुगलञ्च भवति चरणे तृतीयके । तदुदितमुरुमतिभिर्ललितं यदि शेषमस्य सकलं यथोद्गता । | |
| प्रथमे पादे | १० | ।।ऽ,।ऽ।,।।ऽ,। | व्रजसुन्दरीसमुदयेन मुदितमनसा स पीयते । |
| द्वितीये | १० | ।।।,।।ऽ,।ऽ।,ऽ | हिमकरगलितमिवामृतकं ललितं मुरारिमुखचन्द्रविच्युतम् ॥ |
| तृतीये | १२ | ।।।,।।।,।।ऽ,।।ऽ | |
| चतुर्थे | १३ | ।।ऽ,।ऽ।,।।ऽ,।ऽ।,ऽ | |
| वक्त्रम् | | वक्त्रं युग्भ्यां मगौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम् । | |
| प्रथमे पादे | ८ | ऽऽऽऽ।ऽऽऽ | वक्त्राम्भोजं सदा स्मेरं चक्षुर्नीलोत्पलं फुल्लम् । |
| द्वितीये | ८ | ऽऽऽऽ।ऽऽऽ | वल्लवीनां मुरारातेश्चेतोभृङ्गं जहारोच्चैः ॥ |
| तृतीये | ८ | ऽ।ऽऽ।ऽऽऽ | |
| चतुर्थे | ८ | ऽऽऽऽ।ऽऽऽ | |
| पथ्यावक्त्रम् | | युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्त्तितम् । | |
| प्रथमे पादे | ८ | ऽ।ऽ।।ऽऽ। | रासकेलिसतृष्णस्य कृष्णस्य मधुवासरे । |
| द्वितीये | ८ | ऽऽ।।।ऽ।ऽ | आसीद्गोपाङ्गनाचीर्णा पथ्या वक्त्रमधुश्रुतिः ॥ |
| तृतीये | ८ | ऽऽऽ।।ऽऽऽ | |
| चतुर्थे | ८ | ऽऽऽ।।ऽ।ऽ | |

| छन्दसां वृत्तिनामानि । | | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
|---|---|---|---|
| अनुष्टुप् | | पञ्चमं लघु सर्व्वत्र सप्तमं द्विचतुर्थयोः । | |
| | | गुरु षष्ठञ्च पादानां शेषेष्वनियमो मतः ॥ | |
| | | प्रयोगे प्रायिकं प्राहुः केऽप्येतद्वक्तलक्षणम् । | |
| | | लोकेऽनुष्टुबिति ख्यातं तस्याष्टाक्षरता मता ॥ | |
| प्रथमे चरणे | ८ | ऽ।ऽ।।ऽऽ। | पञ्चमं लघु सर्व्वत्र सप्तमं द्विचतुर्थयोः । |
| द्वितीये | ८ | ऽ।ऽ।।ऽ।ऽ | गुरु षष्ठञ्च पादानां शेषेष्वनियमो मतः ॥ |
| तृतीये | ८ | ।।ऽऽ।ऽऽऽ | |
| चतुर्थे | ८ | ऽऽ।।।ऽ।ऽ | |
| इति वृषमवृत्तानि समाप्तानि ॥*॥ | | | |
| —— | | | |
| अथ मात्रावृत्तानि । | | | |
| आर्य्या अर्थात् गाथा | | लक्ष्मैतत् सप्तगणा गोपेता भवति नेह विषमे जः । | |
| | | षष्ठो जश्च न लघु वा प्रथमार्द्धे नियतमार्य्यायाः ॥ | |
| | | षष्ठे द्वितीयलात् परके न्ले मुखलाच्च सयतिपद-नियमः । | |
| | | चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥ | |
| प्रथमे पादे | १२ | ऽऽ।ऽ।ऽऽ | कृष्णः शिशुः सुतो मे वल्लवकुलटाभिराहृतो न गृहे। |
| द्वितीये | १८ | ऽ।।।ऽ।ऽ।ऽ।।ऽ | क्षणमपि वसत्यसाविति जगाद गोष्ठ्यां यशोदार्य्या ॥ |
| तृतीये | १२ | ।।।।।ऽ।ऽ।। | |
| चतुर्थे | १५ | ।ऽ।ऽऽ।ऽऽऽ | |
| प्रकारान्तरी यथा | | | |
| प्रथमे पादे | १२ | ऽऽ।ऽ।ऽऽ | वृन्दावने सलीलं वल्गुद्रमकाण्डनिहिततनुयष्टिः । |
| द्वितीये | १८ | ऽऽ।।ऽ।।।।।ऽऽ | स्मेरमुखार्पितवेणुः कृष्णो यदि मनसि कः स्वर्गः ॥ |
| तृतीये | १२ | ऽ।।ऽ।।ऽऽ | |
| चतुर्थे | १५ | ऽऽ।।।।ऽऽऽ | |
| नवधा आर्य्या क्रमेण यथा । | | [पथ्या । | |
| पथ्या | | प्रथमगणत्रयविरतिर्दलयोरुभयोः प्रकीर्त्तिता | |
| प्रथमे पादे | १२ | ।।।।ऽ।।ऽऽ | जय जय नाथ ! सुरारे ! केशव ! कंसान्तकाच्युतानन्द । |
| द्वितीये | १८ | ऽ।।ऽऽ।ऽ।ऽऽऽ | कुरु करुणामिति विनतिः पथ्या भवरोगदुःखानाम् ॥ |
| तृतीये | १२ | ।।।।ऽ।।।।ऽ | अत्र द्वितीयपादान्तलघोर्गुरुत्वम् । |
| चतुर्थे | १५ | ऽऽ।।ऽ।ऽऽऽ | पूर्व्वपरार्द्धयोर्द्वादशमात्रायां यतिः ॥ |
| विपुला | | संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः। | |
| | | यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति॥ | |
| प्रथमे पादे | १८ | ऽऽ।।ऽऽऽ।।ऽऽ | पुंसां कलिकालव्यालहतानां नास्त्युपपत्तिरन्यापि। |
| द्वितीये | १२ | ऽ।।।।ऽऽऽ | वीर्य्यविपुला सुखे चेत् स्याद्गोविन्दाख्यमन्त्रकला ॥ |
| तृतीये | १४ | ऽ।।।ऽ।ऽऽऽ | अत्र द्वितीयचरणान्तलघोर्गुरुत्वम् । |
| चतुर्थे | १३ | ऽऽऽ।ऽ।।ऽ | पूर्व्वपरार्द्धयोर्द्वादशमात्रां संलङ्घ्य यतिः ॥ |
| चपला | | दलयोर्द्वितीयतुर्य्यौ गणौ जकारौ तु यत्र चपला सा । | |
| प्रथमे पादे | १२ | ।।ऽ।ऽ।ऽऽ | चपला न चेत् कदाचिन्मृणां भवेद्भक्तिभावना कृष्णे । |
| द्वितीये | १८ | ।ऽ।ऽऽ।ऽ।ऽऽऽ | धर्म्मार्थकाममोक्षास्तदा करस्था न सन्देहः ॥ |
| तृतीये | १२ | ऽऽ।ऽ।ऽऽ | |
| चतुर्थे | १५ | ।ऽ।ऽऽ।ऽऽऽ | |
| मुखचपला | | आद्यं दलं समस्तं भजेत लक्ष्म चपलागतं यस्याः । | |
| | | शेषः पूर्व्वजलक्ष्मा मुखचपला सोदिता मुनिना ॥ | |
| प्रथमे पादे | १२ | ऽ।।।ऽ।ऽऽ | नन्दसुत ! वञ्चकस्त्वं दृढं न ते प्रेम गच्छ तत्रैव । |
| द्वितीये | १८ | ।ऽ।ऽऽ।ऽ।ऽऽऽ | यत्र भवति ते रागः कापि जगादेति मुखचपला । |
| तृतीये | १२ | ऽ।।।।ऽऽऽ | अत्र द्वितीयपदान्तलघोर्गुरुत्वम् ॥ |
| चतुर्थे | १५ | ऽ।।ऽऽ।।।।ऽ | |

| छन्दसां वृत्तिनामानि । | | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|---|
| जघनचपला | | प्राक्प्रतिपादितमर्द्धे प्रथमे प्रथमेतरे च चपलायाः । लक्ष्माश्रयेत सोक्ता विशुद्धधीभिर्जघनचपला ॥ | |
| प्रथमे चरणे | १२ | ऽऽऽऽ।।ऽ | स्त्रयः शृङ्गारपटुर्यौवनमदचञ्चलः सुललिताङ्गः । |
| द्वितीये | १८ | ऽ।।।ऽ।ऽ।।।ऽऽ | आसीद्व्रजाङ्गनानां मनोहरो जघनचपलानाम् ॥ |
| तृतीये | १२ | ऽऽ।ऽ।ऽऽ | |
| चतुर्थे | १५ | ।ऽ।ऽ।।।।ऽऽ | |
| गीतिः | | आर्य्याप्रथमार्द्धसमं यस्या अपरार्द्धमाह तां गीतिम् । | |
| प्रथमे चरणे | १२ | ऽ।।ऽऽऽऽ | केशववंशीगीतिर्लोकमनोहरिणहारिणी जयति । |
| द्वितीये | १८ | ऽ।ऽ।।ऽ।ऽ।।ऽ | गोपीमानग्रन्थेर्विमोचनी दिव्यगायनाचार्य्या ॥ |
| तृतीये | १२ | ऽऽऽऽऽऽ | अत्र द्वितीयचरणान्तलघोर्गुरुत्वम् ॥ |
| चतुर्थे | १८ | ।ऽ।ऽऽऽ।ऽऽऽऽ | |
| उपगीतिः | | आर्य्यापरार्द्धतुल्ये दलद्वये प्राहुरुपगीतिम् । | |
| प्रथमे चरणे | १२ | ।।ऽ।ऽ।ऽऽ | नवगोपसुन्दरीणां रासोल्लासे मुरारातिम् । |
| द्वितीये | १५ | ऽऽऽऽ।ऽऽऽ | अस्मारयदुपगीतिः स्वर्गकुरङ्गीदृशां गीतिम् ॥ |
| तृतीये | १२ | ऽऽ।।।।ऽऽ | |
| चतुर्थे | १५ | ऽ।।ऽऽ।ऽऽऽ | |
| उद्गीतिः | | आर्य्याशकलद्वितये विपरीते पुनरिहोद्गीतिः । | |
| प्रथमे चरणे | १२ | ऽऽ।ऽ।ऽ।। | नारायणस्य सन्ततमुद्गीतिः संस्मृतिर्भक्त्या । |
| द्वितीये | १५ | ऽऽऽऽ।ऽऽऽ | अर्चायामासक्तिर्दुस्तरसंसारसागरे तरणिः ॥ |
| तृतीये | १२ | ऽऽऽऽऽऽ | |
| चतुर्थे | १८ | ऽ।।ऽऽ।ऽ।ऽ।।ऽ | |
| आर्य्यागीतिः | | आर्य्याप्रागदलमन्तेऽधिकगुरु तादृगपरार्द्धमार्य्यागीतिः । | |
| प्रथमे चरणे | १२ | ऽऽऽ।।।।ऽ | वर्णाश्रुस्तिमितदृशः प्रमोदरोमाञ्चकञ्चुकाञ्चितदेहाः । |
| द्वितीये | २० | ।ऽ।ऽऽ।ऽ।ऽ।।ऽऽ | आर्य्यागीतिं भक्त्या गायन्ति श्रीपतेश्चरितसम्बद्धाम् ॥ |
| तृतीये | १२ | ऽऽऽऽऽऽ | लघुगुरुविपर्य्ययरूपप्रस्तारभेदेन बहुविधा आर्य्या भवन्ति ॥ |
| चतुर्थे | २० | ऽऽऽऽ।ऽ।।।ऽऽऽ | |
| पूर्व्वार्द्धे विंशत्या चतुर्विंशत्या वा मात्राणां परार्द्धे षोड़शमात्राणां परे लघुवर्णचतुष्टये सति प्रथमं द्वितीयं वा लघ्वक्षरं प्राप्य आर्य्यायाः सामान्येन यतिनियमः ॥ | | | |
| वैतालीयम् । अपरवक्त्रमित्येके । | | षड्विषमेऽष्टौ समे कलास्ताश्च समेस्युर्नो निरन्तरा । न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः ॥ | |
| प्रथमे चरणे | १४ | ।।ऽ।।ऽ।ऽ।ऽ | मुरवैरि मदेन वर्द्धितं तव यन्निन्दति राधिके कुचम् । |
| द्वितीये | १६ | ।।ऽऽ।।ऽ।ऽ।ऽ | मदमातनुतेऽथ पक्तिमं तद्वैतालीयं फलं हरेः ॥ |
| तृतीये | १४ | ।।ऽ।।ऽ।ऽ।ऽ | लघुगुरुव्यत्ययेनापि बहुधा भवति ॥ |
| चतुर्थे | १६ | ऽऽऽऽऽ।ऽ।ऽ | |
| औपच्छन्दसकम् | | तत्रैवान्तेऽधिके गुरौ स्यादौपच्छन्दसकं कवीन्द्रहृद्यम् । | |
| प्रथमे चरणे | १६ | ऽऽऽऽ।ऽ।ऽऽ | आतन्वानं सुरारिकान्तास्वौपच्छन्दसकं मुदा विनोदम् । |
| द्वितीये | १८ | ऽऽऽ।।ऽ।ऽ।ऽऽ | कंसं यो निजघान देवो वन्दे तं जगतां स्थितिं दधानम् ॥ |
| तृतीये | १६ | ऽऽऽऽ।ऽ।ऽऽ | |
| चतुर्थे | १८ | ऽऽऽ।।ऽ।ऽ।ऽऽ | |
| एतद्वैतालीयभेदः ॥ | | | |

| छन्दसां वृत्तिनामानि । | | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
|---|---|---|---|
| पज्झटिका | | प्रतिपदयमकितषोड़शमात्रा नवमगुरुत्वविभूषितगात्रा । पज्झटिकापुनरत्र विवेकः क्वापि न मध्यगुरुर्गण एकः ॥ | |
| प्रथमे चरणे | १६ | ।।।ऽऽऽऽऽऽ | सरलवतंसाश्लिष्टस्कन्धश्चलतरपज्झटिकाकटिबन्धः । |
| द्वितीये | १६ | ।।।।ऽ।।ऽ।।ऽऽ | मौलिचपलशिखिचन्द्रकवृन्दः कालियशिरसि नटति मुकु |
| तृतीये | १६ | ऽ।।।।।ऽ।।ऽऽ | इयं प्रतिपदयमकितषोड़शमात्रा लघुगुरुव्यत्ययेनापि बहु |
| चतुर्थे | १६ | ऽ।।।।।ऽ।।ऽऽ | अस्या नवमी मात्रा च कदाचित् लघ्वी भवति ॥ |
| दोहड़िका | | मात्रा त्रयोदशकं यदि पूर्ब्बं लघुकविरामि । पश्चादेकादशकन्तु दोहड़िका द्विगुणेन ॥ | |
| प्रथमे चरणे | १३ | ऽऽऽ।।।।।। | माई दोहड़िपठण सुणि हासिओ काण्ह गोआल । |
| द्वितीये | १३ | ऽ।ऽऽ।ऽऽ। | वृन्दावणघणकुञ्ज चलिओ कमलरसाल ॥ |
| तृतीये | ११ | ऽऽ।।।ऽ। | अस्यार्थः । हे मातः ! दोहड़िकापाठं श्रुत्वा कृष्ण |
| चतुर्थे | ११ | ।।ऽ।।।ऽ। | गोपालो हसित्वा कमपि रसालं चलितः कुत्र वृन्दावनघ |
| अस्या अन्त्या मात्रा लघ्वी अपभ्रंशभाषया प्रचारः ॥ | | | कुञ्जे वृन्दावनस्य निविड़निकुञ्जे । राई इति क्वचित् पा |
| इति मात्रावृत्तानि समाप्तानि ॥*॥ | | | तत्पत्ने राधिकाया दोहड़िकापाठं श्रुत्वा ॥ |
| | | | गुरुलघुव्यत्ययेन बहुधा भवति ॥ |

अत्र समवृत्तानि (२४७) सप्तचत्वारिंशदधिकं द्विशतं, अर्द्धसमवृत्तानि (१५) पञ्चदश, विषमवृत्तानि (७) सप्त, मात्रावृत्तानि च (१५) पञ्च समुदायेन (२८४) चतुरशीत्यधिकद्विशतसंख्यकानि छन्दांसि लिखितानीति ॥ * ॥

छन्दकपातनः, पुं, ( छन्दकेन छद्मना पातयति लोकानिति । पत्+णिच्+ल्युः । ) छद्मतापसः । इति जटाधरः ॥

छन्दोगः, पुं, ( छन्दो वेदविशेषं सामेत्यर्थः गायतीति । गै+“गापोष्टक् ।” ३।२।८। इति टक् ।) सामगः । सामवेदी । इति जटाधरः ॥ (यथा, मनुः । ३ । १४५ ।
“यत्नेन भोजयेच्छ्राद्धे बह्वृचं वेदपारगम् ।
शाखान्तगमथाध्वर्य्युं छन्दोगन्तु समाप्तिकम् ॥”)

छन्दोगपरिशिष्टं, क्ली, ( छन्दोगेन सामगेन कात्यायनेन मुनिनेत्यर्थः । प्रणीतं यत् परिशिष्टम् । यद्वा, छन्दोगेभ्यः कृतं परिशिष्टम् ।) कात्यायनमुनिकृतं सामवेदिकर्म्मबोधकगोभिलसूत्राणां परिशेषशास्त्रम् । इति स्मृतिः ॥

छन्दोविचितिः, स्त्री, ( छन्दसां विचितिर्यत्र । ) श्रुतिच्छन्दसां प्रत्यायकं शास्त्रम् । इत्यमरटीकायां भरतः ॥ (यथा, वृहत्संहितायाम् । १०४ । ६४ ।
“विपुलामपि बुद्धा छन्दोविचितिं भवति कार्य्यमेतावत् ।
श्रुतिसुखवृत्तसंग्रहमिममाह वराहमिहिरोऽतः ॥”)

छन्नं, क्ली, (छद्+क्तः ।) रहः । निर्ज्जनस्थानम् । इति मेदिनी । ने, ५ ॥

छन्नः, त्रि, ( छद्+क्तः । ) छादितः । इति मेदिनी । ने, ५ ॥ (व्याप्तः । यथा, महाभारते । ३ । २० । २४ ।
“न हया न रथो वीर ! न यन्ता मम दारुकः ।
अदृश्यन्त शरैश्छन्नास्तथाहं सैनिकाश्च मे ॥”)
रहः । इत्यमरः । २ । ८ । २२ ॥

छप, इ क सर्पे । इति कविकल्पद्रुमः ॥ ( चुरां-परं-सकं-सेट् ।) इ क, छम्पयति । सर्पो गतिः । इति दुर्गादासः ॥

छम, उ भक्षे । इति कविकल्पद्रुमः । ( भ्वां-परं सकं-सेट् । उदित्वात् क्त्वावेट् । ) छमति । उ, छमित्वा छान्त्वा । इति दुर्गादासः ॥

छमण्डः, पुं, (छमति भक्षयति जन्मग्रहणान्तरं पितरं मातरं चेत्यर्थः । छम+बाहुलकादण्डच् ।) मृतपितृकः । इत्युणादिकोषः ॥ छेमड़ा इति भाषा ॥ बन्धुहीनः । इति संक्षिप्तसारे उणादिवृत्तिः ॥

छर्द्द, क वमने । इति कविकल्पद्रुमः । (चुरां-परं-सकं-सेट् ।) वमनं वान्तिः । क, छर्द्दयति अन्नं लोकः । इति दुर्गादासः ॥ ( तथाच, महाभारते । ५ । ६६ । ४२ ।
“स्वपन्ति च प्लवन्ति च छर्द्दयन्ति च मानवाः ॥”)

छर्द्दं, क्ली, ( छर्द्द+भावे घञ् । ) वमनम् । इति हेमचन्द्रः । ३ । १३३ ॥

छर्द्दनं, क्ली, ( छर्द्द+भावे ल्युट् । ) वमनम् । इति हेमचन्द्रः ॥ ( यथा, सुश्रुते । ४ । १० ।
“तत्रास्तु मदनालाबुबिम्बीकोशातकीफलैः ।
छर्द्दनं दधुरदन्भिभ्यामथवा तण्डुलाम्बुना ॥”)

छर्द्दनः, पुं, ( छर्द्दयति नरपश्वादिकं ग्रसित्वा पुनरुद्गिरतीति । छर्द्द+ल्युः ।) अलम्बुषराक्षसः । (छर्द्दयति कटुगन्धेन उद्गिरत्यनेनेति । छर्द्द+ल्युट् । ) निम्बवृक्षः । इति हेमचन्द्रः ॥ मदनवृक्षः । इति भावप्रकाशः ॥

छर्द्दापनिका, स्त्री, ( छर्द्द वमनं आपयति प्रापयतीत्यर्थः । आप्+णिच्+ल्युः । ततः स्वार्थे कः । टापि अत इत्वञ्च । ) कर्कटी । इति राजनिर्घण्टः ॥

छर्द्दिः, स्त्री, ( छर्द्दयत्यनेनेति । छर्द्द वम इन् । ) वमिरोगः । वाँति इति भाषा ॥ पर्य्यायः । प्रच्छर्द्दिका २ छर्द्दनम् ३ वम वमनम् ५ वमिः ६ । इति हेमचन्द्रः । ३ । छर्द्दिका ७ छर्द्दीका ८ वान्तिः ९ उद्गारः इति राजनिर्घण्टः ॥ उत्कासिका ११ नम् १२ । इति शब्दरत्नावली ॥ तस्या नि नादि यथा,—
“दुष्टैर्दोषैः पृथक्सर्व्वैर्वीभत्सालोकनादिभि
छर्द्दयः पञ्च विज्ञेयास्तासां लक्षणमुच्यते ॥
अतिद्रवैरतिस्निग्धैरहृद्यैर्लवणैरति ।
अकाले चातिमात्रैश्च तथा सात्म्यैश्च भोज
श्रमाद्भयात्तथोद्वेगादजीर्णात् क्रिमिदोषतः
नार्य्याश्चापन्नसत्त्वायास्तथातिद्रुतमश्नतः ॥
वीभत्सैर्हेतुभिश्चान्यैर्द्रुतमुत्क्लेशितो बलात्
छादयन्नाननं वेगैरर्द्दयन्नङ्गभञ्जनैः ॥
निरुच्यते छर्द्दिरिति दोषो वक्त्रं प्रधावितः ॥
तस्याः पूर्ब्बरूपं यथा,—
“हृल्लासोद्गाररोधौ च प्रसेको लवणस्तनुः ।
द्वेषोऽन्नपाने च वमीनां पूर्ब्बलक्षणम् ।
वातजायास्तस्या रूपं यथा,—
“हृत्पार्श्वपीड़ामुखशोषशीर्ष-
नाभ्यर्त्तिकासस्वरभेदतोदैः ।
उद्गारशब्दप्रबलं सफेनं
विच्छिन्नकृष्णं तनुकं कषायम् ॥
कृच्छ्रेण चाल्पं महता च वेगे-
नार्त्तोऽनिलाच्छर्द्दयतीह दुःखम् ।”
तस्याः पित्तजाया रूपं यथा,—
“मूर्च्छा पिपासा मुखशोषमूर्द्ध-
ताल्वक्षिसन्तापतमोभ्रमार्त्तः ।

पीतं भृशोष्णं हरितं सतिक्तं
धूम्रञ्च पित्तेन वमेत् सदाहम् ॥”
तस्याः श्लेष्मजाया रूपं यथा,—
“तन्द्रास्यमाधुर्य्यकफप्रसेक-
सन्तोषनिद्रारुचिगौरवार्त्तः ।
स्निग्धं घनं स्वादु कफाद्विशुद्धं
सलोमहर्षोऽल्परुजं वमेच्च ॥”
तस्यास्त्रिदोषजाया रूपं यथा,—
“शूलाविपाकारुचिदाहतृष्णा-
श्वासप्रमोहप्रबलाप्रसक्तम् ।
छर्द्दिस्त्रिदोषाल्लवणाम्लनील-
सान्द्रोष्णरक्तं वमतां नृणां स्यात् ॥”
असाध्याया लक्षणं यथा,—
“विट्स्वेदमूत्राम्बुवहानि वायुः
स्रोतांसि संरुध्य यदोर्द्धमेति ।
उत्सन्नदोषस्य समाचितं तं
दोषं समुद्धूय नरस्य कोष्ठात् ॥
विण्मूत्रयोस्तत्समगन्धवर्णां
तृट्श्वासकासार्त्तियुतां प्रसक्ताम् ॥
प्रच्छर्द्दयेद्दुष्टमिहातिवेगा-
त्तयार्द्दितस्त्वाशु विनाशमेति ॥”
आगन्तुजाया लक्षणं यथा,—
“वीभत्सजा दौर्हृदजामजा तु
असात्म्यजा या क्रिमिजा च या हि ।
सा पञ्चमी ताञ्च विभावयेच्च
दोषोच्छ्रयेणैव यथोक्तमादौ ॥”
क्रिमिजाया लक्षणं यथा,—
“शूलहृल्लासबहुला क्रिमिजा च विशेषतः ।
क्रिमिहृद्रोगतुल्येन लक्षणेन च लक्षिता ॥
क्षीणस्य या च्छर्द्दिरतिप्रसक्ता
सोपद्रवा शोणितपूययुक्ता ।
सचन्द्रिकां तां प्रवदेदसाध्यां
साध्याञ्चिकित्सेन्निरुपद्रवाञ्च ॥”
तस्या उपद्रवा यथा,—
“कासः श्वासो ज्वरो हिक्का तृष्णा वैचित्त्य-
मेव च ।
हृद्रोगस्तमकश्चैव ज्ञेयाश्छर्द्देरुपद्रवाः ॥”
इति माधवकरः ॥
तस्यौषधं यथा, गारुडे १८७ अध्याये ।
“अश्वगन्धाभया चैव उदकेन समं पिबेत् ।
हरीतकीकुष्ठचूर्णं कृत्वा आस्यञ्च पूरयेत् ॥
शीतं पीत्वाथ पानीयं सर्व्वच्छर्द्दिनिवारणम् ।
गुड़ूचीपद्मकारिष्टधान्याकं रक्तचन्दनम् ॥
पित्तश्लेष्मज्वरच्छर्द्दिदाहतृष्णाघ्नमग्निकृत् ॥”
अपिच ।
“बिल्वमूलञ्च समधु गुड़ूचीक्वथितं जलम् ।
पीतं हरेच्च त्रिविधां छर्द्दिं वै नात्र संशयः ॥
पीता दूर्व्वा च्छर्द्दिं नश्येत् पिष्टा तण्डुलवारिणा ॥”
इति च गारुडे १६४ अध्यायः ॥*॥
अथ छर्द्दिचिकित्सा ।
“आमाशयोत्क्लेशभवा हि सर्व्वा-
श्छर्द्दो मता लङ्घनमेव तस्मात् ।
विधीयते मारुतजां विना तु
संशोधनं वा कफपित्तहारि ॥”
अत्र च्छर्द्दीशब्दः ।
“हन्यात् क्षीरोदकं पीतं छर्द्दिं पवनसम्भवाम् ।
सुशामलकयूषो वा ससर्पिष्कः ससैन्धवः ॥
क्षीरोदकं नाशितस्य क्षीरस्योदकम् ।
गुड़ूचीत्रिफलानिम्बपटोलैः क्वथितं जलम् ।
पिबेत् मधुयुतं तेन छर्द्दिर्नश्यति पित्तजा ॥
हरीतकीनां चूर्णन्तु लिह्यान्माक्षिकसंयुतम् ।
अधोमार्गीकृते दोषे छर्द्दिः शीघ्रं निवर्त्तते ॥
विड़ङ्गत्रिफलाविश्वाचूर्णं मधुयुतं पिबेत् ।
विड़ङ्गप्लवशुण्ठीनां चूर्णं वा कफजां वमिम् ॥
प्लवं कैवर्त्तीमुस्तं गुड़तणी इति लोके ।
पिष्ट्वा धात्रीफलं लाजान् शर्कराञ्च पलोन्मितान् ।
दत्त्वा मधुपलञ्चापि कुड़वं सलिलस्य च ॥
वाससा गालितं पीतं हन्ति छर्द्दिं त्रिदोषजाम् ।
गुड़ूच्या रचितं हन्ति हिमं मधुसमन्वितम् ॥
दुर्निवारामपि छर्द्दिं त्रिदोषजनितां बलात् ॥
एलालवङ्गगजकेशरकोलमज्जा-
लाजाप्रियङ्गुघनचन्दनपिप्पलीनाम् ।
चूर्णानि माक्षिकसितासहितानि लीढ्वा
छर्द्दिं निहन्ति कफमारुतपित्तजाताम् ॥
इति एलादिचूर्णम् ॥
अश्वत्थवल्कलं शुष्कं दग्धं निर्व्वापितं जले ।
तज्जलं पानमात्रेण छर्द्दिं जयति दुर्ज्जयाम् ॥
यथा त्रिकटुधान्याकजीरकाणां रजो लिहन् ।
मधुना नाशयेच्छर्द्दिमरुचिञ्च त्रिदोषजाम् ॥
बिल्वत्वचो गुड़ूच्या वा क्वाथः क्षौद्रेण संयुतः ।
छर्द्दिं त्रिदोषजां हन्ति पर्पटः पित्तजां तथा ॥
आम्रास्थिबिल्वनिर्यूहः पीतः समधुशर्करः ।
निहन्याच्छर्द्द्यतीसारं वैश्वानर इवाहुतिम् ॥
निर्यूहः क्वाथः ।
जम्ब्वाम्रपल्लवशृतं लाजरजःसंयुतं शीतम् ।
शमयति मधुना युक्तं वमिमतिसारं तृषार्त्ति-
मुग्राम् ॥
वीभत्सजां हृद्यतमैरिष्टैर्द्दौर्हृदजां फलैः ।
लङ्घनैरामजां छर्द्दिं जयेत् सात्म्यै रसात्मजाम् ॥
क्रिमिहृद्रोगवद्धन्याद्वमिं क्रिमिसमुद्भवाम् ।
तत्र तत्र यथा दोषं क्रियां कुर्य्याच्चिकित्सकः ॥
इति छर्द्यधिकारः ।” इति भावप्रकाशः ॥
छर्द्दिः, [स्] स्त्री, ( छर्द्दयति छर्द्द्यते इति वा ।
छर्द्द वमने + “अर्च्चिशुचिहुसृपिच्छादिच्छर्द्दिभ्य
इसिः ।” उणां । २ । १०८ । इति इसिः । )
वमिः । इत्युणादिकोषः ॥ ( यथा, चरके
चिकित्सास्थाने २१ अध्याये ।
“तदग्निवेशस्य वचो निशम्य
प्रीतो भिषक्श्रेष्ठ इदं जगाद ।
छर्द्दींषि यानीह पुरोदितानि
विस्तारतस्तानि निबोध सम्यक् ॥”)
छर्द्दिका, स्त्री (छर्द्दि + स्वार्थे कन् । स्त्रियां टाप् । यद्वा,
छर्द्दयतीति । छर्द्दि + ण्वुल् । टापि अत इत्वञ्च ।)
छर्द्दिः । विष्णुक्रान्ता । इति राजनिर्घण्टः ॥
छर्द्दिकारिपुः, पुं, (छर्द्दिकाया रिपुः नाशक इत्यर्थः ।)
क्षुद्रैला । इति शब्दचन्द्रिका ॥
छर्द्दिघ्नः, पुं, (छर्द्दिं हन्तीति । हन् + टक् ।) निम्बवृक्षः ।
इति रत्नमाला ॥ (निम्बशब्देऽस्य विवरणं ज्ञेयम् ॥)
छलं, क्ली, (छो + वृषादित्वात् कलच् । यद्वा, छल +
अच् । ) स्खलितम् । शाठ्यम् । इति मेदिनी ।
ले, १७ ॥ ( यथा, मनुः । ८ । ४६ ।
“धर्म्मेण व्यवहारेण च्छलेनाचरितेन च ।
प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च ॥”
व्याजः । यथा, मार्कण्डेये । २५ । १० ।
“सा वै मदालसा पुत्त्रं बालमुत्तानशायिनम् ।
उल्लापनच्छलेनाह रुदमानमविस्वरम् ॥”
तात्पर्य्यान्तरेण प्रयुक्तस्य शब्दस्यार्थान्तरेण
कथनम् । यथा, अक्षपादसूत्रे । ५० ।
“वचनविघातोऽर्थविकल्पोपपत्त्या छलम् ॥”
“अर्थस्य वाद्यभिमतस्य यो विकल्पो विरुद्धः
कल्पः अर्थान्तरकल्पनेति यावत् तदुपपत्त्या
युक्तिविशेषेण यो वचनस्य वाद्युक्तस्य विघातो
दूषणं तच्छलमित्यर्थः । वक्तृतात्पर्य्याविषयार्थ-
कल्पनेन दूषणाभिधानमिति फलितम् । तात्-
पर्य्याविषयत्वं विशेष्ये विशेषणे संसर्गे वा । यथा,
नेपालादागतोऽयं नवकम्बलवत्त्वादित्यत्र नव-
संख्यापरत्वकल्पनयाऽसिद्ध्यभिधानम् । प्रमेयं
धर्म्मत्वादित्यत्र पुण्यत्वार्थकल्पनया भागासिद्ध्य-
भिधानम् । वह्निमान् धूमादित्यत्र धूमावयवे
व्यभिचाराभिधानम् । तत्त्रिविधम् । वाक्छलं
सामान्यच्छलमुपचारच्छलञ्च ॥” “छलं नाम
परिशठमर्थाभासमपार्थकं वाग्वस्तुमात्रमेव ।
तद्द्विविधं वाक्छलं सामान्यच्छलञ्च । तत्र वाक्-
छलं नाम यथा कश्चिद्ब्रूयात् नवतन्त्रोऽयं
भिषगिति भिषग् ब्रूयात् नाहं नवतन्त्र एकतन्त्रो
ऽहमिति । परो ब्रूयात नाहं ब्रवीमि नव
तन्त्राणि तवेति अपितु नवाभ्यस्तं ते तन्त्रमिति
भिषग् ब्रूयात् न मया नवाभ्यस्तं तन्त्रं अनेक
शोऽभ्यस्तं मया तन्त्रमिति । एतद्वाक्छलम् ।
सामान्यच्छलं नाम यथा, व्याधिप्रशमनायौषध-
मित्युक्ते परो ब्रूयात् सत् सत्प्रशमनायेति भवा-
नाह सन्रोगः सदौषधं यदि च सत्प्रशमनाय
भवति सत्कासः सत्क्षयः सत्सामान्यात् कासस्ते
क्षयप्रशमनाय भविष्यतीति एतत्सामान्य-
छलम् ॥” इति चरके विमानस्थाने अष्टमे
अध्याये ॥)
छल्लिः, स्त्री, ( छदं छादनं लातीति । ला +
बाहुलकात् किः ।) त्वक् । इति शब्दरत्नावली ॥
छाल इति भाषा ॥
छल्ली, स्त्री, (छदं छादनं लातीति । ला + किः ।
ततः कृदिकारादिति वा ङीष् । ) वीरुत् ।
सन्तानः । वल्कलम् । कुसुमविशेषः । इति
मेदिनी । ले, १८ ॥
छविः, स्त्री, ( छ्यति तमः करोति यद्वा
छ्यति छिनत्ति दूरीकरोति मालिन्यादिकमिति
मिति । छो + “कृशृभिक्षविक्षर्व्विकीविभ्यः ।”

उणां । ४।५६। इति क्विन् प्रत्ययेन निपातनात् साधुः ।) शोभा । दीप्तिः । इत्यमरः । १।३।१७॥ (यथा, मेघदूते । ३५ ।
"भर्त्तुः कण्ठच्छविरिति गणैः सादरं वीक्ष्यमाणः॥")
छष, ञ वधे । इति कविकल्पद्रुमः । (भ्वां-उभं-सकं-सेट् ।) ञ, छषति छषते । अयं केश्चिन्न मन्यते । इति दुर्गादासः ।
छा, स्त्री, (छद्+डः टाप् च ।) आच्छादनम् । इति मेदिनी । छे, १ ॥
छाः,पुं,(छाद्यते मातृपिताभ्यामसौ । छद्+"सर्व्वधातुभ्योऽसुन् ।"उणां ।४।१८८। इति असुन् ततः पृषोदरात् साधुः ।) शावकः । इत्येकाक्षरकोषः ॥
छागः, पुं,स्त्री, (छायते छिद्यते देववलये इति । छो+"छापूखडिभ्यः कित् ।" उणां । १।१२४। इति गन् ।) पशुविशेषः । तत्पर्य्यायः । वस्तः २ छगलकः ३ अजः ४ स्तुभः ५ । इत्यमरः । २ । ६ । ७६ ॥ छगः ६ छगलः ७ छागलः ८ तभः ९ स्तभः १० शुभः ११ । इति तट्टीका ॥ लघुकामः १२ क्रयसदः १३ वर्करः १४ पर्णभोजनः १५ लम्बकर्णः १६ मेनादः १७ युक्तः १८ अल्पायुः १९ शिवाप्रियः २० । इति शब्दरत्नावली ॥ अवुकः २१ मेध्यः २२ पशुः २३ पयस्वलः २४ । तन्मांसगुणाः । लघुत्वम् । स्निग्धत्वम् । नातिशीतलत्वम् । रुचिबलपुष्टिदातृत्वम् । निर्द्दोषत्वम् । वातपित्तनाशित्वम् । मधुरत्वञ्च । इति राजनिर्घण्टः ॥ शुक्रधातुसाम्यकारित्वम् । बृंहणत्वम् । स्निग्धत्वम् । मृदुत्वम् । अनभिष्यन्दित्वम् । नात्युष्णत्वञ्च । इति राजवल्लभः ॥*॥ छागपोतमांसगुणाः । लघुत्वम् । शीतलत्वम् । प्रमेहनाशित्वञ्च ॥ त्वग्चारिछागस्य मांसगुणः । ईषल्लघुत्वम् । बलदातृत्वञ्च ॥ तन्मूत्रगुणाः । कटुत्वम् । उष्णत्वम् । रूक्षत्वम् । नाडीविषार्शःशोथोदरकफश्वासगुल्मप्लीहनाशित्वम् । लघुत्वञ्च । इति राजनिर्घण्टः ॥

"छागलो वर्करश्छागो वस्तोऽजश्चैलकः स्तुभः ।
छागमांसं लघु स्निग्धं स्वादुपाकं त्रिदोषनुत् ॥
नातिशीतमदाहि स्यात् स्वादु पीनसनाशनम् ।
परं बलकरं रुच्यं बृंहणं बलवर्द्धनम् ॥
अजाया अप्रसूताया मांसं पीनसनाशनम् ।
शुष्ककासेऽरुचौ शोषे हितमग्नेश्च दीपनम् ॥
अजासुतस्य बालस्य मांसं लघुतरं स्मृतम् ।
हृद्यं ज्वरहरं श्रेष्ठं सुखादु बलदं भृशम् ॥
मांसं निष्कासिताण्डस्य छागस्य कफकृद्गुरु ।
स्रोतःशुद्धिकरं बल्यं मांसदं वातपित्तनुत् ॥
वृद्धस्य वातलं रूक्षं तथा व्याधिमतस्य च ।
ऊर्द्ध्वजत्रुविकारघ्नं छागमुण्डं रुचिप्रदम् ॥"
इति भावप्रकाशः ॥

(एतन्मांसं पितॄणां तृप्तिकरत्वात् श्राद्धाय देयम् । यथाह याज्ञवल्क्यः । १ । २५८ ।
"मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः ॥"
छागमांसेन पितॄणां षण्मासान् यावत्तृप्तिः । यथाह मनुः । ३ । २६९ ।
"षण्मासान् छागमांसेन पार्षतेन च सप्त वै ॥"
भोजराजेन युक्तिकल्पतरौ एतत्परीक्षोक्ता । यथा,—
"नभश्चारी विभेदेन नराणान्तु गणत्रयम् ।
तेषां शुभाय निर्द्दिष्टं पशुवस्तत्रयं बलौ ।
ये छागाः शुभदाश्छागाः पशवोऽन्ये तथैव च ।
देवजातिभिवत्तेष्वन्तान्ते सर्व्वार्थोपसिद्धये ॥
ये पीता हरिता वापि नरजातिवदीरिताः ।
ये शुक्लाश्च महान्तो वा रक्षोजातिः शुभप्रदाः ॥
यो मोहादथवाज्ञानादत्वलिमन्यं प्रयच्छति ।
वध एव फलं तस्य नान्यत् किञ्चित् फलं भवेत् ॥"
एतस्य पश्चोलक्षणादिकं विशेषतो बृहत्संहितायाम् ६५ अध्याये उक्तम् । यथा,—
"छागशुभाशुभलक्षण-
मभिधास्ये नवदशाष्टदन्तास्ते ।
धन्याः स्थाप्या वेश्मनि
सन्त्याज्याः सप्तदन्ता ये ॥
दक्षिणपार्श्वे मण्डल-
मसितं शुक्लस्य शुभफलं भवति ।
ऋष्यनिभकृष्णलोहित-
वर्णानां श्वेतमपि शुभदम् ॥
स्तनवदवलम्बते यः
कण्ठेऽजानां मणिः स विज्ञेयः ।
एकमणिः शुभफलकृ-
त्धन्यतमा द्वित्रिमणयो ये ॥
मुण्डाः सर्व्वे शुभदाः
सर्व्वसिताः सर्व्वकृष्णदेहाश्च ।
अर्द्धासिताः सितार्द्धा
धन्याः कपिलार्द्धकृष्णाश्च ॥
विचरति यूथस्याग्रे
प्रथमं चाम्भोऽवगाहते योऽजः ।
स शुभः सितमूर्द्धा वा
मूर्द्धनि वा टिक्किका यस्य ॥
सपृषतकण्ठशिरा वा
तिलपिष्टनिभश्च ताम्रदृक् शस्तः ।
कृष्णचरणः सितो वा
कृष्णो वा श्वेतचरणो यः ॥
यः कृष्णाण्डः श्वेतो
मध्ये कृष्णेन भवति पट्टेन ।
यो वा चरति सशब्दं
मन्दञ्च स शोभनश्छागः ॥
ऋष्यशिरोरुहपादो
यो वा प्राक् पाण्डुरो ऽपरे नीलः ।
स भवति शुभकृच्छागः
श्लोकश्चाप्यत्र गर्गोक्तः ॥
कुट्टकः कुटिलश्चैव जटिलो वामनस्तथा ।
ते चत्वारः श्रियः पुत्त्रा नालक्ष्मीके वसन्ति ते ॥
अथाप्रशस्ताः खरतुल्यनादाः
प्रदीप्तपुच्छाः कुनखा विवर्णाः ।
निकृत्तकर्णा द्विपमस्तकाश्च
भवन्ति ये चासिततालुजिह्वाः ॥
वर्णैः प्रशस्तैर्मणिभिश्च युक्ता
मुण्डाश्च ये ताम्रविलोचनाश्च ।
ते पूजिता वेश्मसु मानवानां
सौख्यानि कुर्व्वन्ति यशः श्रियञ्च ।
छागणः, पुं, (छगण एव । स्वार्थे अण् ।) यामिः । इति त्रिकाण्डशेषः ॥ घुँटे इति भाषा ॥
छागभोजी, [न्] पुं, स्त्री, (छागं भुङ्क्ते इति । भुज्+णिनिः ।) वृकः । इति निर्घण्टः ॥ छागभक्षके, त्रि ॥
छागरथः, पुं, (छागः रथो वाहनमस्य ।) वह्निः । इति हेमचन्द्रः । ४ । १६३ ॥
छागलः, पुं, स्त्री, (छगल एव इति प्रज्ञाद्यण् ।) छागः । इति राजनिर्घण्टः ॥ (यथा, तन्त्रे । ३ । ११७ ।
"बहुबुद्धिसमायुक्ताः सुविज्ञाना बलोत्कटाः । शक्ता वञ्चयितुं धूर्त्ता ब्राह्मणं छागलादिव ॥"
छगलस्य गोत्रापत्यं पुमान् इति । छा-
"विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिषु ।"
४ । १ । ११७ । इति अण् । आत्रेय ऋषिः । इति सिद्धान्तकौमुदी ॥)
छागलकः, पुं, (छागल इव कायतीति । कै+कः ।) मत्स्यविशेषः । यथा,—
"श्वेतं सुपाकं समदीर्घवृत्तं
निःशल्कलं छागलकं वदन्ति ।
गले त्रिकण्टः किल तस्य पृष्ठे
कण्टः सुपथ्यो रुचिदो बलप्रदः ।"
इति राजनिर्घण्टः ॥
(स्वार्थे कन् ।) छागलश्च ॥
छागलाद्यं, क्ली, (छागल आद्यः प्रधानो यत्र ।) छागलादिघृतम् । तच्च वातरोगस्यौषधम् ।
"आजं चर्म्मविनिर्म्मुक्तं त्यक्तशृङ्गखुरादिकम् ।
पञ्चमूलीद्वयञ्चैव जलद्रोणे विपाचयेत् ॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ।
जीवनीयैः सयष्ट्याह्वैः क्षीरञ्चैव शतावरी ॥
छागलाद्यमिदं नाम्ना सर्व्ववातविकारनुत् ।
अर्द्दिते कर्णशूले च बाधिर्य्ये मूकमिन्मिने ।
जड़गद्गदपङ्गूनां खञ्जे गृध्रसिकुब्जयोः ।
अपतानेऽपतन्त्रे च सर्पिरेतत् प्रशस्यते ॥
पृथगर्द्धतुला पञ्चमूलद्वन्द्वाजमांसयोः ।
निःक्वाथ्य सलिलद्रोणे क्वाथे पादावशेषिते ।
इति स्वल्पच्छागलाद्यं घृतम् ॥
घृतारम्भे मन्त्रः ।
"ओँ कालि वज्रेश्वरि अमुकस्य प्रवलिह इदं वचनेन स्वाहा ।
स्नापयित्वा छागमादौ मधु दत्त्वा ललाटके उदङ्मुखः प्राङ्मुखो वा भिषग्गेनमुपालभेत् ।
छागमारणमन्त्रः ।
ओँ ह्रीँ ओँ गौँ गणपतये स्वाहा ।
छागमांसतुलां यत्न दशमूल्याः पलं शतम् ।
अश्वगन्धापलशतं वाट्यालकशतं तथा ।
घृताढ़कं पचेत्तोयैश्चतुर्भागावशेषितैः ।

क्षीरं चैवसमं दद्यात् शतावर्य्या रसं तथा ॥
तार्म्रपात्रे दृढ़े चैव शनैर्मृद्वग्निना पचेत् ।
अस्यौषधस्य कल्कस्य प्रत्येकं शुक्तिसम्मितम् ॥
जीवन्ती मधुकं द्राक्षाकाकोल्यौ नीलमुत्पलम् ।
मुस्तं सचन्दनं रास्ना पर्णिनीद्वयशारिवे ॥
मेदे द्वे च तथा कुष्ठं जीवकर्षभकौ शटी ।
दार्व्वी प्रियङ्गु त्रिफला नतं तालीशपद्मकौ ॥
एलापत्रं वरीनागजातीकुसुमधान्यकम् ।
मञ्जिष्ठा दाड़िमं दारु रेणुकं शैलवालुकम् ॥
विड़ङ्गं जीरकञ्चैव पेषयित्वा विनिक्षिपेत् ।
वस्त्रपूते च शीते च शर्कराप्रस्थसंयुतम् ॥
निधापयेत् स्निग्धभाण्डे आर्द्रे वा भाजने शुभे ।
अस्यौषधस्य सिद्धस्य शृणु वीर्य्यमतःपरम् ॥
देवदेवं नमस्कृत्य संपूज्य गणनायकम् ।
पिबेत् पाणितलं तस्य व्याधिं वीक्ष्यानु-
पानतः ॥
सर्व्ववातविकारेषु अपस्मारे विशेषतः ।
उन्मादे पक्षघाते च आध्माने कोष्ठनिग्रहे ॥
कर्णरोगे शिरोरोगे वाधिर्य्ये चापतन्त्रके ।
भूतोन्मादे च गृध्रस्यां सोन्मादे चाक्षिपातने ॥
पार्श्वशूले च हृच्छूले वाह्यायामाहिते तथा ।
वातकण्टकहृद्रोगमूत्रकृच्छ्रे सपङ्गुके ॥
क्रोष्टुशीर्षे तथा खञ्जे कुब्जे चाध्मानि मिञ्मिने ।
अपतानेऽन्तरायामे रक्तपित्ते तथोर्द्धगे ॥
आनाहेऽर्शोविकारेषु चातुर्थकज्वरेऽपि च ।
हनुग्रहे तथा शोषे क्षीणे चैवाववाहुके ॥
दण्डापतानके भग्ने दाहे चाक्षेपके तथा ।
जीर्णज्वरे विषे कुष्ठे शोफःस्तम्भे महात्यये ॥
आढ्यवातेऽग्निमान्द्ये च वातरक्तगदेषु च ।
एकाङ्गरोगिणे चैव तथा सर्व्वाङ्गरोगिणे ॥
हस्तकम्पे शिरःकम्पे जिह्वाकम्पे जड़े भ्रमे ।
क्षीणेन्द्रिये नष्टशुक्रे शुक्रनिःसरणे तथा ॥
स्त्रीणां वातासृपाते च पटले चाक्षिस्पन्दने ।
एकाङ्गस्पन्दने चैव सर्व्वाङ्गस्पन्दने तथा ॥
नगादिपतिते वाते स्त्रीणामप्राप्तिहेतुके ।
आभिचारिकदोषे च धनऽन्तापसम्भवे ॥
ये वातप्रभवा रोगा ये च पित्तसमुद्भवाः ।
शिरोमध्यगता ये च जङ्घापार्श्वादिसंस्थिताः ॥
मातृग्रहाभिभूतश्च शिशुर्यश्च विशुष्यति ।
प्रक्षीणबलमांसश्च न वर्त्मगमनक्षमः ॥
एतेनानेन सिध्यन्ति वन्ध्यसुक्तिरिवासुरान् ।
निहन्ति सकलान् रोगान् घृतं परमदुर्लभम् ॥
रसायनं वह्निबलप्रदञ्च
वपुःप्रकर्षं विदधाति रूपम् ।
दन्तावलेन्द्रैः समानतेजा
दीर्घायुषं पुत्रशतं करोति ॥
स्त्रीणां घृतं गच्छति वातिरेकं
न याति तृप्तिं सरवः समाङ्गः ।
अपुत्रिणीपुत्रशतं करोति
शतायुषं कामसमं बलिष्ठम् ॥
महद्घृतं नाम तु छागलाद्यं
विनिर्म्मितं वातनिषूदनञ्च ।
शिवं शुभं रोगभयापहञ्च
चकार हारीतमुनिर्विशिष्टः ॥
छागलवर्ज्जिताः पाके पुमांसं तत्र दापयेत् ।
मयूरी जम्बुकी छागी वीर्य्यहीनाः स्वभावतः ॥
भावितं काशिराजेन छागमेव नपुंसकम् ॥”
घृतम् १६ शेर । क्वाथार्थं छागमांसपलम् १०० ।
पाकार्थं जलं शं ६४ । शेषः शं १६ । विल्वादि-
दशमूलं प्रपलम् १० । जलं शं ६४ । शेषः
शं १६ । अश्वगन्धा १०० पलम् । जलं शं ६४ ।
शेषः शं १६ । वाव्यालकं १०० पलम् ।
जलं शं ६४ । शेषः शं १६ । दुग्धं शं १६ ।
शतमूलीरसः शं १६ । कल्कार्थं जीवन्त्या-
दीनां जीरकपर्य्यन्तानां कल्कद्रव्याणां प्रं तो ४ ।
वस्त्रपूते शीते शर्करा शं २ । इति बृहच्छागलाद्यं
घृतम् । इति भैषज्यरत्नावली ॥
(“छागमांसं तुलार्द्धं स्यात् दशमूलं तथापरम् ।
तोयद्रोणे पचेद्धीमान् यावत् स्यादंशशेषितम् ॥
तैलप्रस्थद्वयञ्चैव क्षीरञ्चैव शतावरी ।
जीवनीयं समभुकं बला रास्ना च शैलजम् ॥
मांसीस्याद्हिमतालीशनागुकावनवालुकम् ।
पृथक् पृथक् समादाय सर्व्वमेकत्र साधयेत् ॥
मञ्जिष्ठालोध्रलाक्षा च प्रत्येकं कुड़वान्वितम् ।
आढ़कञ्च जलञ्चैव विधिना च विपाचयेत् ॥
छागलाद्यमिदं तैलं हारीतेन महात्मना ।
पाने वस्तौ तथाभ्यङ्गे भोज्ये चैव प्रशस्यते ।
सर्व्वज्वरगदं हन्ति सन्धिमज्जास्थिजन्तथा ॥”
इति छागलाद्यं तैलम् ॥
इति वैद्यकचक्रमालिकायां वातरोगाधिकारे ॥)
छागलान्त्रिका, स्त्री, (छागलान्त्री + संज्ञायां कन् ।
टापि पूर्व्वह्रस्वः ।) वृद्धदारकवृक्षः । इति राज-
निर्घण्टः ॥
छागलान्त्री, स्त्री, ( छागलं अन्तयतीति वाहु-
लकात् रक् ततो ङीष् । ) वृकः । इति राज-
निर्घण्टः ॥
छागवाहनः, पुं, ( छागेन आत्मानं वाहयतीति ।
वह + णिच् + ल्युः । यद्वा, छागो वाहनमस्य ।)
अग्निः । इति त्रिकाण्डशेषः ॥
छागिका, स्त्री, (छागी + स्वार्थे कन् । ततः टापि
पूर्व्वह्रस्वः ।) छागी । इति हेमचन्द्रः ।४।३४१ ॥
छागी, स्त्री, ( छायते छिद्यते देवोपहारायेति ।
छो + “छापूखड़िभ्यः कित् ।” उणा ।१।१२४ ।
इति गन् छागः ततः स्त्रियां जातौ ङीष् । )
छागमाता । वकरी इति पाँटी इति च भाषा ।
तत्पर्य्यायः । अजा २ पयस्विनी ३ भीरुः ४
मेध्या ५ गलेस्तनी ६ । इति राजनिर्घण्टः ॥
छागिका ७ मञ्जा ८ सर्व्वभक्ष्या ९ गलस्तनी १० ।
इति हेमचन्द्रः ॥ तुलुम्या ११ । इति त्रिकाण्ड-
शेषः ॥ बञ्जा १२ सुखविलुञ्चिका १३ । इति
शब्दरत्नावली ॥ तद्दुग्धगुणाः । मधुरत्वम् ।
शीतलत्वम् । ग्राहित्वम् । दीपनत्वम् । रक्त-
पित्तविकारक्षयकासनाशित्वञ्च । यथा, राज-
निर्घण्टे ।
“अजानां लघुकायत्वान्नानानाम्ब्वनिषेवणात् ।
नात्यम्बुपानात् व्यायामात् सर्व्वव्याधिहरं पयः ॥”
कषायत्वम् । लघुत्वम् । अतीसारज्वरनाशि-
त्वञ्च । यथा, भावप्रकाशे ।
“छागं कषायं मधुरं शीतं ग्राहि पयो लघु ।
रक्तपित्तातिसारघ्नं क्षयकासज्वरापहम् ॥
अजानामल्पकायत्वात् कटुतिक्तादिभक्षणात् ।
स्तोकाम्बुपानाद्व्यायामात् सर्व्वरोगापहं पयः ॥”
तद्दधिगुणाः । उत्तमत्वम् । ग्राहित्वम् । लघु-
त्वम् । दोषत्रयापहत्वम् । श्वासकासार्शःक्षय-
कार्श्येषु प्रशस्तत्वम् । दीपनत्वञ्च । इति भाव-
प्रकाशः ॥ कफवातनेत्रदोषदुर्नामश्वासकास-
नाशित्वम् । उष्णत्वम् । रुच्यत्वम् । पाचनत्वञ्च ॥
तन्नवनीतगुणाः । लघुत्वम् । मधुरत्वम् । कषा-
यत्वम् । त्रिदोषनाशित्वम् । चक्षुष्यत्वम् । दीप-
नत्वम् । बल्यत्वम् । जरा हितत्वञ्च ॥ तन्नवोत्थ-
नवनीतगुणाः । क्षयकासनेत्रामयकफनाशित्वम् ।
बल्यत्वम् । परमदीपनत्वञ्च ॥ तद्घृतगुणाः ।
चक्षुष्यत्वम् । दीपनत्वम् । बलवर्द्धनत्वम् । कास-
श्वासकफनाशित्वम् । राजयक्ष्मणि प्रशस्तत्वञ्च ।
इति राजनिर्घण्टः ॥
छातः, त्रि, (छो + क्तः । “शाच्छोरन्यतरस्याम् ।”
७ । ४ । ४१ । इति विभाषायामित्वाभावः ।)
छिन्नः । दुर्ब्बलः । इत्यमरः । ३ । १ । १०३ ॥
छात्रं, क्ली, वरटीच्छत्रसम्भवं मधु । तस्य गुणाः ।
श्वित्रक्रिमिरोगरक्तपित्तनाशित्वम् । गुरुत्वञ्च ।
इति राजवल्लभः ॥
(“वरटाः कपिलाः पीताः प्रायो हिमवतो वने ।
कुर्व्वन्ति छत्रकाकारं तज्जं छात्रं मधु स्मृतम् ॥”
छात्रं कपिलपीतं स्यात् पिच्छिलं शीतलं गुरु ।
स्वादुपाकं क्रिमिश्वित्ररक्तपित्तप्रमेहजित् ।
भ्रमतृण्मोहविषहृत् तर्पणञ्च गुणाधिकम् ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे द्वितीये भागे ॥)
छा(त्र)त्रः, पुं, (छत्रं गुरोर्दोषावरणं तच्छील-
मस्येति । “छत्रादिभ्यो णः ।” ४ । ४ । ६२ ।
इति णः ।) शिष्यः । इत्यमरः । २ । ७ । ११ ॥
(यथा, राजतरङ्गिण्याम् । ६ । ८७ ।
“भूभुजा दानशौण्डेन मैषिके स्थापिते ततः ।
छात्राणामार्य्यदेशानां तेन विद्यार्थिनां मठः ॥”)
छात्रकं, क्ली, ( छात्र + स्वार्थे कन् ।) छात्रं मधु ।
यथा, राजनिर्घण्टे ।
“छत्राकारन्तु पटलं सरघाः पीतपिङ्गलाः ।
ये कुर्व्वन्ति तदुत्पन्नं मधु छात्रकमीरितम् ।
श्वित्रमेहक्रिमिघ्नञ्च विद्याच्छात्रं गुणोत्तरम् ॥”
अपिच भावप्रकाशे ।
“वरटाः कपिलाः पीताः प्रायो हिमवतो वने ।
कुर्व्वन्ति छत्रकाकारं तज्जं छात्रं मधु स्मृतम् ॥
छात्रं कपिलपीतं स्यात् पिच्छिलं शीतलं गुरु ।
स्वादुपाकं क्रिमिश्वित्ररक्तपित्तप्रमेहजित् ॥
भ्रमतृण्मोहविषहृत्तर्पणञ्च गुणाधिकम् ॥”
छात्रगण्डः, पुं, ( छात्रो गण्ड इव ।) पद्याद्यवित् ।
विभक्त्यन्तस्य श्लोकपदस्य वा आदिमात्रवेत्ता ।

( अल्पप्रच्छात्र: । ) इति हारावली । २१६ ॥

छात्रदर्शनं, क्ली, ( छात्रं वरटीच्छत्रसम्भूतं मधु तदिव दृश्यते इति । दृश + कर्म्मणि ल्युट् । ) हैयङ्गवीनम् । इति शब्दचन्द्रिका ॥ (छात्राणां दर्शनम् ।) शिष्यावलोकनञ्च ॥

छादं, क्ली, (छाद्यते गृहमनेनेति । छद + णिच् + करणे घञ् । छादयतीति । छद् + णिच् + अच् वा ।) पटलम् । इति जटाधर: ॥ छात इति चाल इति च भाषा ॥

छादनं, क्ली, ( छद कि संवृतौ + णिच् + करणे ल्युट् । ) छदनम् । अन्तर्द्धानम् । (कर्त्तरि ल्यु: ।) पत्रम् । इत्यमरटीकायां भरत: ॥ (भावे ल्युट् ।) आच्छादनम् । (यथा, हरिवंशे । ९५ । २५ ।

"नियोगपाशैरासक्तैर्गर्गरीस्तम्भमूर्द्धसु ।
छादनार्थं प्रकीर्णैश्च कराटकैस्तृणसङ्कटै: ॥")

छादन:, पुं, (छादयति आवृणोति पत्रादिभिरिति । छादि + ल्यु: । ) नीलाम्लानवृक्ष: । इति राजनिर्घण्ट: ॥

छादित:, त्रि, (छाद्यते स्मेति । छद + "वा दान्तशान्तेति ।" ७।२।२७ । इडागमात् साधु: । ) छन्न: । इति जटाधर: ॥ आच्छादित: । यथा,
"घनतरघनवृन्दैश्छादितौ पुष्पवन्तौ ॥"
इत्युद्भट: ॥

छान्दस:, पुं, ( छन्दो वेदं अधीते वेत्ति वा । छन्दस् + "तदधीते तद्वेद ।" ४ । २ । ५९ । इत्यण् । ) वेदाध्येता । इत्यमर: । २।७।६ ॥ ( छन्द एवेति । स्वार्थे अण् । वेद: ।
"मन्ये त्वां विषये वाचां स्नातमन्यत्र छान्दसात् ॥"
इति भागवते । १ । ४ । १३ ॥
त्रि, छन्दसो व्याख्यानस्तत्र भव: । "छन्दसो यदणौ ।" ४ । ३ । ७१ । इत्यण् । वेदभव: ॥ छन्दसोऽयम् । "तस्येदम् ।" इत्यण् । वेदसम्बन्धी । स्त्रियान्तु ङीप् । यथा, हरिवंशे । २१५ । ७ ।
"छान्दसीभिरुदाराभि: श्रुतिभि: समलङ्कृत: ॥")

छान्दोग्यं, क्ली, (छन्दोगानां धर्म्म: आम्नायो वा । छन्दोग + "छन्दोगौक्थिकयाज्ञिकबह्वृच नटाञ्ञ्य: ।" ४ । ३ । १२९ । इति ञ्य: । ) सामवेदोपनिषत् । इति वैदिकसम्प्रदाय: ॥ (यथा, मौक्तिकोपनिषदि १ अध्याये ।
"ऐतरेयञ्च छान्दोग्यं बृहदारण्यकन्तथा ॥")

छाया, स्त्री, (छ्यति छिनत्ति सूर्य्यादे: प्रकाशं नाशयतीत्यर्थ: । छो + "माच्छाससिसूभ्यो य: ।" उणां । ४ । १०९ । इति य: ततष्टाप् च । ) रौद्रशून्यम् । तत्पर्य्याय: । भावानुगा २ प्रभा ३ अतेज: ४ भीरु: ५ अनातप: ६ आभीति: ७ आतपाभाव: ८ भावालीना ९ । अस्या गुणा: । मधुरत्वम् । शीतलत्वम् । दाहश्रमहरत्वञ्च । इति राजनिर्घण्ट: ॥ घर्म्मनाशित्वम् । मेघच्छायागुणा: । भ्रमभ्रममूर्च्छासन्तापनाशित्वम् । इति राजवल्लभ: ॥ * ॥ छायाविशेषे दोषो यथा,—

"दीपखट्वातरुच्छाया छिन्नकेशनखादिकम् ।
अजमार्ज्जाररेणुश्च हन्ति पुण्यं पुराकृतम् ॥"
इति कर्म्मलोचनम् ॥ * ॥

(लक्षणभेदेनास्या अरिष्टकारित्वं यथा,—
"ज्योत्स्नायामातपे दीपे सलिलादर्शयोरपि ।
अङ्गेषु विकृता यस्य छायाप्रेतस्तथैव स: ॥
छिन्ना भिन्नाकुला च्छाया हीना वाप्यधिकापि वा ।
नष्टा तन्वी द्विधा च्छाया विशिरा विकृता च या ॥
एताश्चान्याश्च या: काश्चित् प्रतिच्छाया विगर्हिता: ।
सर्व्वा मुमूर्षतां ज्ञेया नचेल्लक्ष्यनिमित्तजा: ॥
संस्थानेन प्रमाणेन वर्णेन प्रभया तथा ।
छाया विवर्त्तते यस्य स्वप्नेऽपि प्रेत एव स: ॥"
"खादीनां पञ्चपञ्चानां छाया विविधलक्षणा: ।
नाभसी निर्म्मला नीला सस्नेहा सप्रभेव च ॥
रूक्षा श्यावारुणा या तु वायवी सा हतप्रभा ।
विशुद्धरक्तात्वाग्नेयी दीप्ताभा दर्शनप्रिया ॥
शुद्धवैदूर्य्यविमला सुस्निग्धा चाम्भसी मता ।
स्थिरा स्निग्धा घना श्लक्ष्णा श्यामा श्वेता च पार्थिवी ॥
वायवी गर्हिता त्वासां चतस्र: स्यु: सुखोदया: ।
वायवी तु विनाशाय क्लेशाय महतेऽपि वा ॥
स्यात्तैजसी प्रभा सर्व्वा सा तु सप्तविधा स्मृता ।
रक्ता पीता सिता श्यावा हरिता पाण्डुरा सिता ॥
तासां या: स्युर्विकासिन्य: स्निग्धाश्च विपुलाश्च या: ।
ता: शुभा रूक्षमलिना: संक्षिप्ताश्चाशुभोदया: ॥
वर्णमाक्रामति च्छाया भास्तु वर्णप्रकाशिनी ।
आसन्ना लक्ष्यते च्छाया भा: प्रकृष्टा प्रकाशते ॥
नाच्छायो नाप्रभ: कश्चिद्विशेषाश्चिह्नयन्ति तु ।
नृणां शुभाशुभोत्पत्तिं काले च्छाया: प्रभाश्रिता: ॥"
इतीन्द्रियस्थाने सप्तमेऽध्याये चरकेणोक्तम् ॥)
प्रतिबिम्बम् । (यथा, याज्ञवल्क्ये । ३ । २७९ ।
"मयि तेज इति च्छायां स्वां दृष्ट्वाम्बुगतां जपेत् ॥")
सूर्य्यपत्नी । सा संज्ञाप्रतिकृति: । (यथा मत्स्यपुराणे । ११ । ५ ।
"नारीमुत्पादयामास स्वशरीरादनिन्दिताम् ।
त्वाष्ट्रीस्वरूपेण नाम्ना छायेति भामिनी तदा ॥")
पालनम् । उत्कोच: । कान्ति: । (यथा, मेघदूते । ३१ ।
"वेणीभूतप्रतनुसलिला तामतीतस्य सिन्धु:
पाण्डुच्छायातटरुहतरुभ्रंशिभि: शीर्णपर्णै: ॥")
सच्छोभा । पङ्क्ति: । इति मेदिनी । ये, २३ ॥ कात्यायनी । इति शब्दरत्नावली ॥ तम: । इति हेमचन्द्र: ॥ सादृश्यम् । यथा,—
"अङ्गादङ्गात् सम्भवसि इति ....
"अङ्गादङ्गात्यचं जग्ध्वा आघ्राय शिरसुर्द्धनि ।
वस्त्रादिभिरलङ्कृत्य पुंसच्छायावहं सुतम् ॥
पुत्त्रच्छाया पुत्त्रसादृश्यम् ।" इति दत्तकचन्द्रिका ॥
(जगविंशत्यक्षरवृत्तिविशेष: । इति छन्दोमञ्जरी ॥ अस्य लक्षणादिकं छन्द:शब्दे द्रष्टव्यम् ॥)

छायाकर:, त्रि, (करोतीति । कृ + अच् । छा... कर: । छायां करोतीति वा ।) छत्रधार: । ... हेमचन्द्र: ॥ छातावरदार इति भाषा ।

छायातनय:, पुं, ( छायाया: सूर्य्यपत्न्या: पुत्त्र: ।) शनि: । इति हलायुध: ॥

छायातरु:, पुं, (छायाप्रद: छायाप्रधानो वा ... शाकपार्थिववत् मध्यपदलोपिसमास: ।) ... च्छायवृक्ष: । इति त्रिकाण्डशेष: ॥ (अस्य ... यदाह कश्चित् ।
"पूर्व्वाह्णे च पराह्णे च तलं यस्य न सूर्य... अत्यन्तशीतलच्छाया स च्छायातरुरुच्यते ।"
यथा, मेघदूते । १ ।
"कश्चित् कान्ताविरहगुरुणा स्वाधिकारप्... शापेनास्तंगमितमहिमा वर्षभोग्येण भर्त्तु: ।
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्य्याश्रमेषु ॥")

छायात्मज:, पुं, ( छायाया: सूर्य्यपत्न्या आत्... त्मतनय: । ) शनिग्रह: । इति त्रिका... शेष: ॥

छायापथ:, पुं, ( छाया मेघच्छाया तदाश्र... पन्था: । छायायुक्त: पन्था इत्येके । ) देवप... आकाश: । इति त्रिकाण्डशेष: ॥

छायापुरुष:, पुं, ( छायायां दृष्ट: पुरुष: पु... रुषाकृतिविशेष: ।) आकाशे दृष्ट: स्वीयच्छाया... पुरुष: । यथा,—

श्रीदेव्युवाच ।

"भगवन् ! देवदेवेश ! सर्व्वागमविशारद ।
नराणां पापिनां लोके पापनिर्म्मोचनं कथम् ।
कालज्ञानं कथं वा स्यात् स्वल्पोपायेन तद्व...
श्रुतानि साधनानीश ! मयानेकानि भूरिश: ।
तथापि तानि मनुजैरशक्यान्यल्पबुद्धिभि: ।
प्रायेण मनुजा लोके कलौ स्वल्पायुषो ध्रुवम् ।
अनेकवर्षसाध्येऽस्मिन् योगाभ्यासे ह्यशक्तय: ।

शिव उवाच ।

साधु देवि ! त्वया पृष्टं लोकानां हितकाम्यया ।
तादृशं साधनं वक्ष्ये सर्व्वसाधारणं लघु ।
गोपनीयं प्रयत्नेन न वाच्यं वै कथञ्चन ।
सिद्धाय भक्तियुक्ताय सेवकाय सुचेतसे ॥
पापिने क्रूरचेष्टाय भक्तिहीनाय भामिनि ! ।
न वदेद्यदि वा मोहात् वदेत् सिद्धिं न विन्दति ।
तस्मात् परीक्ष्य वक्तव्यं शिष्याय ज्ञानिने शिवे ।
स्वच्छायापुरुषं पश्येद्गगने शुद्धमानस: ॥
तस्यावलोकनात् सद्य: पापराशिर्विनश्यति ।
महापातकसङ्घैश्च तत्समैश्चोपपातकै: ॥
विमुच्यते चयार्द्धेन तूलराशिर्यथानलात् ।
कालज्ञानञ्च षण्मासे तस्मिन् दृष्टे भवेद्ध्रुवम् ।

देव्युवाच ।

अतश्छायां कथं पश्येद्गगने भूतलस्थिताम् ।
षण्मासकालज्ञानञ्च तस्मिन् दृष्टे कथं भवेत् ।

शिव उवाच ।

निरभ्रं गगनं देवि ! यदा भवति निर्म्मलम् ।
तदा छायासमो भूत्वा निश्चलं प्रयतो शिवा ।

...छायाकच्छमालोक्य सगुरूक्तक्रमेण वै ।
...मूर्द्धं गगनं पश्येन्निर्निमेषस्तथैकधीः ॥
...द्धस्फटिकसङ्काशः पुरुषस्तत्र दृश्यते ।
...दृश्यते यदा तत्र पुनस्तद्वत् परीक्षयेत् ॥
...हुधा दर्शनेनैव साक्षात्कारो भवेद् ध्रुवम् ।
...र्य्यापिद् भाग्यतः पश्येद् यदि बिम्बोऽक्षिगोचरः ।
...त्रैव न सन्देहो गुरुविश्वासतः शिवे ! ।
...तं सम्यक् पूजयित्वा पश्येच्छायां समाहितः ॥
...या षण्मासपर्य्यन्तं मृत्युस्तस्य न विद्यते ।
...शिरोहीनं यदा पश्येत् षण्मासाभ्यन्तरे मृतिः ॥
...दा पादौ न दृश्येते भार्य्याहानिर्न संशयः ।
...दृश्येते यदा पाणी भ्रातुर्हानिर्न संशयः ॥
...तज्ज्ञात्वा सुधीः सम्यक् गङ्गातीरं समाश्रयेत् ।
...योगाभ्यासेन सततं प्राणायामेण संस्तुतिः ॥
...या वा सत्समीपस्थो लक्षं मृत्युञ्जयं जपेत् ।
...ी न भुक्तो हविष्याशी यतवाग् यतमानसः ॥
...मृत्युञ्जयेन सन्देहो ह्यन्यथा मृत्युमृच्छति ।
...दा तु मलिनं पश्येत् ज्वरपीड़ा भवेत्तदा ॥
...स्य शान्तिं प्रकुर्व्वीत शिवसेवां समाहितः ।
...रक्तवर्णं यदा पश्येदैश्वर्य्यं भवति ध्रुवम् ॥
...मध्यच्छिद्रं यदा पश्येत् शत्रुघातो भवेत्तदा ।
...वं सन्दर्शनाद् देवि ! ज्ञानवान् भवति ध्रुवम् ॥
...नारदाय पुरा प्रोक्तं मया पुरुषदर्शनम् ।
...तत्प्रसादान्महायोगी भूत्वा लोकांश्चरत्यसौ ॥
...च्छायादर्शनं देवि ! कलौ पुरुषलक्षणम् ।
दीर्घायुः समवाप्नोति ज्ञानञ्चापि सुनिर्म्मलम् ॥”

इति योगप्रदीपिकायां उमामाहेश्वरसंवादे छायापुरुषलक्षणं नाम पञ्चमः पटलः ॥ * ॥

...ओम् अस्य श्रीच्छायापुरुषमहामन्त्रस्य ब्रह्मर्षि-र्बृहद्गायत्री छन्दः छायादेवी देवता ह्रीं बीजं स्वाहा शक्तिः पुरुष इति कीलकं सर्व्व-सिद्धिसन्दर्शनसिद्ध्यर्थे जपे विनियोगः । ह्रामि-त्यादि षडङ्गन्यासः ॥ मायया मायया लौँ लौँ ह्रीँ माया शिवविद्यायां ऋषयः ओँ ह्रीँ अं ...आं सरस्वति ओँ नमो भगवते भूतशरीर-आत्मानमाकाशे दर्शय दर्शय च्राँ च्राँ घ्राँ ह्रीँ भैरवाय नमः स्वाहा । इति मन्त्रः ॥

...दाराभावे च पुत्रं वा बालभावे च बान्धवम् ।
आत्मानं शिरसोऽभावे सर्व्वाभावे कुलक्षयम् ॥
विशीर्णे विद्युते धृते कुम्भे धूमे च विज्वरम् ।
दुर्भिक्षं जायते घोरं कज्जले च पराङ्मुखे ॥
सम्पूर्णे च सुखे स्वल्पे क्षेमलाभं सुसिद्धये ।
पीने रक्ते जये प्रीते उष्णे मृत्युर्न संशयः ॥
अतिभीतिं शस्त्रघातमिति वेदविदो विदुः ।
मृत्युञ्जयं जपन्नेव शान्तिस्तस्य विधीयते ॥
षण्मासे मरणं तस्य शीर्षाद्यपचये विदुः ॥

अथ मृत्युञ्जययन्त्रम् ।

“प्रथमं प्रणवमालिख्य तन्मध्ये साध्यनामकम् ।
बहिरष्टदलं पद्मं यान्तान्तं वसुपत्रके ॥
विलिखेत् सहकारञ्च केशरेषु सुशोभितम् ।
तद्बहिश्चक्रवृत्तं स्यात् षोड़शाक्षरकं लिखेत् ॥
द्वारं भूपुरमालिख्य चतुर्द्वारञ्च वारुणम् ।



पार्थिवञ्च चतुष्कोणं चक्रं मृत्युञ्जयं भवेत् ॥
ज्वरादिसर्व्वरोगादिदाहशान्तिकरं परम् ।
मृत्युञ्जयं महाचक्रं सर्व्वरक्षाकरं नृणाम् ॥”

अथ ध्यानम् ।

“चन्द्रार्काग्निविलोचनं स्मितमुखं पद्मद्वयान्तःस्थितं
मुद्रापाशमृगाक्षसूत्रविलसत्पाणिं हिमांशुप्रभम् ।
कोटीरेन्दुगलत्सुधाप्लुततनुं हारादिभूषोज्ज्वलं
कान्त्या विश्वविमोहनं पशुपतिं मृत्युञ्जयं भावयेत् ॥ * ॥
नत्वा तातगुरुं शिवं गणपतिं मन्त्रं जपेत् सर्व्वदा ।
खे लक्षेत् सततं विलोकनपरः शुक्ले रवौ प्रत्यहम् ॥

खे विलोकनमन्त्रस्तु ।

ओँ ह्रीँ भूचरी खेचरी आत्मानमाकाशे दर्शय सर्व्ववृत्तान्तं कथय कथय हुं फट् स्वाहा ।
यः पश्येत् सर्व्वगं शान्तमात्मानं सत्यमद्वयम् ।
न तेन किञ्चिद्ज्ञातव्यं ज्ञातव्यं चावशिष्यते ॥”

इति योगप्रदीपिकायां छायापुरुषोपदेशो नाम षष्ठः पटलः ॥

छायाव्यवहारः, पुं, ज्योतिःशास्त्रोक्ताङ्कविशेषः । अथ छायाव्यवहारे करणसूत्रं वृत्तम् ।

“छाययोः कर्णयोरन्तरे ये तयो-
र्व्वर्गविश्लेषभक्ता रसाद्रीषवः ।
सैकलब्धेः पदघ्नन्तु कर्णान्तरं
भान्तरेणोनयुक्तं दले स्तः प्रभे ॥

उदाहरणम् ।

नन्दचन्द्रैर्मितं छाययोरन्तरं
कर्णयोरन्तरं विश्वतुल्यं ययोः ।
ते प्रभे वक्ति यो युक्तिमान् वेत्त्यसौ
व्यक्तमव्यक्तयुक्तं हि मन्येऽखिलम् ॥

न्यासः

कं $\frac{२५}{२}$ शङ्कुः १२ कं $\frac{५१}{२}$

छा $\frac{७}{२}$ छाया $\frac{४५}{२}$

छायान्तरम् ।१९। कर्णान्तरम् ।१३। अनयोर्व्वर्गान्तरेण ।१९२। भक्ता रसाद्रीषवः ।५७६। लब्धम् ।३। सैकस्यास्य ।४। मूलम् ।२। अनेन कर्णान्तरम् ।१३। गुणितम् ।२६। द्विस्थम् ।२६। भान्तरेण ।१९। ऊनयुते ।७।४५। तदर्द्धे लब्धे छाये $\frac{७}{२}$ $\frac{४५}{२}$ ततश्छायोर्योगपदमित्यादिना जातौ कर्णौ $\frac{२५}{२}$ $\frac{५१}{२}$



छायान्तरे करणसूत्रं वृत्तार्द्धम् ।

शङ्कुः प्रदीपतलशङ्कुतलान्तरघ्न-
श्छाया भवेद्विनरदीपशिखौच्च्यभक्तः ।

उदाहरणम् ।

शङ्कुप्रदीपान्तरभूस्त्रिहस्ता
दीपोच्छ्रितिः सार्द्धकरत्रया चेत् ।
शङ्कोस्तदार्काङ्गुलसम्मितस्य
तस्य प्रभा स्यात् कियती वदाशु ॥

न्यासः

$\frac{७}{२}$ दीपोच्छ्रितिः शङ्कुः $\frac{१}{२}$

भूः ३ छाया $\frac{१}{२}$ शङ्कुः $\frac{१}{२}$ प्रदीपशङ्कुतलान्तरम् ३

अनयोर्घातः $\frac{३}{२}$ विनरदीपशिखौच्च्येन ।३। भक्तो लब्धानि छायाङ्गुलानि ।१२।

अथ दीपोच्छ्रित्यानयनाय करणसूत्रं वृत्तार्द्धम् ।

छायाहृते तु नरदीपतलान्तरघ्ने
शङ्कौ भवेन्नरयुते खलु दीपकौच्च्यम् ।

उदाहरणम् ।

प्रदीपशङ्क्वन्तरभूस्त्रिहस्ता
छायाङ्गुलैः षोड़शभिः समा चेत् ।
दीपोच्छ्रितिः स्यात् कियती वदाशु
प्रदीपशङ्क्वन्तरमुच्यतां मे ॥

न्यासः

शङ्कुः $\frac{१}{२}$

भूः ३ छाया $\frac{२}{३}$

शङ्कुः ।१२। छायाङ्गुलानि ।१६। शङ्कुप्रदीपान्तरहस्ताः ।३। लब्धं दीपकौच्च्यं हस्ताः $\frac{११}{४}$

प्रदीपशङ्क्वन्तरभूमानयनाय करणसूत्रं वृत्तार्द्धम् ।

विशङ्कुदीपोच्छ्रयसंगुणा भा
शङ्कूद्धृता दीपनरान्तरं स्यात् ॥

उदाहरणम् । पूर्व्वोक्त एव दीपोच्छ्रायः $\frac{११}{४}$

शङ्क्वङ्गुलानि ।१२। छाया ।१६। लब्धं शङ्कुप्रदीपान्तरहस्ताः ।३।

छायाप्रदीपान्तरदीपौच्च्यानयनाय करणसूत्रं सार्द्धवृत्तम् ।

छाययोरन्तरसंगुणाभा
छायाप्रमाणान्तरहृद्भवेद्भूः ।

भूशङ्कुघातः प्रभया विभक्तः
प्रजायते दीपशिखौच्चमेवम् ॥
त्रैराशिकेनैव यदेतदुक्तं
व्याप्तं स्वभेदैर्हरिणेव विश्वम् ॥

उदाहरणम् ।
शङ्कोर्भार्कमिताङ्गुलस्य सुमते! दृष्टा किलाष्टाङ्गुला
छायाग्राभिमुखे कराद्वयमिते न्यस्तस्य दीपो पुनः ।
तस्यैवार्कमिताङ्गुला यदि तदा छायाप्रदीपान्तरं
दीपौच्च्यं कियदुच्यतामथ कृतिं छायाभिधां वेत्सि चेत् ॥

न्यासः




भूः $\frac{१३}{३}$ छा $\frac{१}{३}$ भूः २ छा $\frac{१}{२}$

अत्र छायाग्रयोरन्तरमङ्गुलात्मकम् । ५२ । छाये च । ८ । १२ । अनयोरान्तरम् । ८ । इयमनेन । ५२ । गुणिता । ४१७ । छायाप्रमाणान्तरेण । ४ । भक्ता लब्धं भूमानम् । १०४ । इदं प्रथमच्छायाग्रदीपतलयोरन्तरमित्यर्थः । एवं द्वितीयच्छायाग्रमानम् ।१५६। भूशङ्कुघातः प्रभया विभक्त इति जातमुभयतोऽपि दीपौच्च्यं

सममेव हस्ताः $६\frac{१}{२}$ ।

एवमित्यत्र छायाव्यवहारे त्रैराशिककल्पनया नयनं वर्त्तते तद्यथा । प्रथमच्छायातो द्वितीयच्छाया । १२ । यावताधिका तावता छायावयवेन यदि छायाग्रान्तरतुल्याभूर्लभ्यते तदा छायया किमिति एवं पृथक् पृथक् छायाप्रदीपतलान्तरप्रमाणं लभ्यते । ततो द्वितीयं त्रैराशिकं यदि छायातुल्ये भुजे शङ्कुः कोटिस्तदा भूतुल्ये भुजे किमिति लब्धं दीपकौच्च्यमुभयतोऽपि तुल्यमेव । एवं पञ्चराशिकादिकमखिलं त्रैराशिककल्पनयैव सिद्धं यथा भगवता श्रीनारायणेन जननमरणक्लेशापहारिणा निखिलजगज्जननैकबीजेन सकलभुवनभावनेन गिरिसरित्सुरनरासुरादिभिः स्वभेदैरिदं जगद्व्याप्तं तथेदमखिलं गणितजातं त्रैराशिकेन व्याप्तं यद्येवं तद्बहुभिः किमित्याशङ्क्याह ।
यत्किञ्चिद्गुणभागहारविधिना बीजेऽत्र वा गण्यते
तत् त्रैराशिकमेव निर्म्मलधियामेवावगम्यं विदाम् ।
एतद्यद्बहुधास्मदादिजडधीधीवृद्धिबुद्ध्या बुधैस्तद्भेदान् सुगमान् विधाय रचितं प्राज्ञैः प्रकीर्णादिकम् ॥"
इति श्रीभास्कराचार्य्यविरचितायां लीलावत्यां छायाधिकारः समाप्ततामगात् ॥

छायाभृत्, पुं, (छायां छायारूपमृगलाञ्छनं यद्वा छायां शीतलकान्तिं बिभर्त्तीति । भृ + क्विप् ।) चन्द्रः । इति हेमचन्द्रः । २ । १९ ॥

छायामित्रं, क्ली, ( छायया छायाकरणेन मित्रमिव छायाया मित्रमिति वा । ) छत्रम् । इति शब्दरत्नावली ॥

छायामृगधरः, पुं, (छाया छायारूप एव मृगस्तं धरतीति । धृ + अच् । छायामृगस्य धरो वा ।) चन्द्रः । इति त्रिकाण्डशेषः ॥

छायासुतः, पुं, (छायायाः सूर्य्यपत्न्याः सुतः पुत्रः ।) शनिः । इति हेमचन्द्रः । २ । ३४ ॥

छिः, पुं, ( श्यति छिनत्ति कीर्त्त्यादिकं नाशयतीत्यर्थः । छो + बाहुलकात् किः । ) गर्हा । इत्येकाक्षरकोषः ॥

छिक्कनी, स्त्री, ( छिक् इत्यव्यक्तसुतशब्दं कनत्यनया । कन् + करणे अप् ततो ङीप् । ) वृक्षविशेषः । छिक्नी इति नाकछिक्नी इति हाँचोटी इति च भाषा ॥ तत्पर्य्यायः । अवक्षत् २ तिक्ता ३ छिक्किका ४ घ्राणदुःखदा ५ । अस्या गुणाः । कटुत्वम् । रुच्यत्वम् । तीक्ष्णत्वम् । उष्णत्वम् । वह्निपित्तकारित्वम् । वातरक्तकुष्ठकृमिवातकफनाशित्वञ्च । इति भावप्रकाशः ॥

छिक्का, स्त्री, ( छिगित्यव्यक्तशब्देन कायतीति । कै + कः । ततष्टाप् ।) क्षुतम् । इति शब्दरत्नावली ॥ छिँक् इति हिन्दी भाषा ॥ ( यथा, गारुडे ज्योतिश्चक्रे ६० अध्याये ।
"छिक्कायां लक्षणं वक्ष्ये लभेत् पूर्व्वे महाफलम् ।
आग्नेये शोकसन्तापौ दक्षिणे हानिमाप्नुयात् ॥
नैरृते शोकसन्तापौ मिष्टान्नञ्चैव पश्चिमे ।
अन्नं प्राप्नोति वायव्ये उत्तरे कलहो भवेत् ।
ईशाने मरणं प्रोक्तं प्रोक्तं छिक्काफलाफलम् ॥")

छिक्किका, स्त्री, (छिक्का क्षुतं साध्यत्वेनास्त्यस्याः । बाहुलकात् ठन् । ) छिक्कनी । इति भावप्रकाशः ॥

छित्, [ द् ] त्रि, ( छिनत्तीति । छिद् + क्विप् । ) छेदनकर्त्ता ॥

छितं, त्रि, (छायते स्मेति । छो + क्तः । "शाच्छोरन्यतरस्याम् ।" ७।४।४१ । इतीः ।) छिन्नम् । इत्यमरः । । ३ । १ । १०३ ॥

छित्तिः, पुं, ( छिद् + क्तिन् । ) कारणद्वयः । इति शब्दचन्द्रिका ॥ छेदश्च ॥

छित्वरः, त्रि, ( छिनत्तीति । छिद् + "छित्वरछत्वरेति ।" उणां । ३ । १ । इति ष्वरप् प्रत्ययेन निपातनात् साधुः । ) छेदनद्रव्यम् । धूर्त्तः । वैरी । इत्युणादिकोषः ॥

छिद, इर ध ञ औ छेदे । इति कविकल्पद्रुमः ॥ (रुधां-उभं-सकं-अनिट् ।) छेदो द्विधाकरणम् । इर्, अच्छिदत् अच्छैत्सीत् । ध ञ, छिनत्ति छिन्ते दात्रेण तृणं लोकः । औ, छेत्ता । इति दुर्गादासः ।

छिदकं, क्ली, (छिनत्तीति । छिद् + वुन् ।) वज्रम् । इत्युणादिकोषः ॥

छिदा, स्त्री, ( छिद् + "षिद्भिदादिभ्यो
४ । १०४ । इत्यङ् ततष्टाप् । ) छेदनम्
मुग्धबोधम् ॥

छिदिः, स्त्री, (छिद्यतेऽनया इति । छिद् +
कृटिभिदिछिदिभ्यश्च ।" उणां । ४ ।
इति इः स च कित् ।) कुठारः । इत्युणादि

छिदिरः, पुं, (छिनत्त्यनेनेति । छिद् + "इ
सुदिछिदिभिदिच्छिदीति ।" उणां । १ । ५
किरच् । ) करवालः । परश्वधः । प
रज्जुः । इति मेदिनी । रे, १५५ ॥

छिदुरः, पुं, ( छिनत्तीति । छिद् + "वि
च्छिदेः कुरच् ।" ३।२।१६२ । इति
छेदनद्रव्यम् । धूर्त्तः । वैरी । इति मेदि
१५६ ॥ (स्वयं छिन्ने, त्रि । यथा, रघुः ।
"संलक्ष्यते न छिदुरोऽपि हारः ।

छिद्र, तृ क भेदे । इति कविकल्पद्रुमः ॥ (
चुरां-परं-सकं-सेट् । ) भेद इह रन्ध्र
छिद्रयति छिद्रापयति भाण्डं बालकः ।
दुर्गादासः ॥

छिद्रं, क्ली, ( छिद्यते भिद्यते यत् । 
छेदने + "स्फायितञ्चिवञ्चीति ।" उणां ।
इति रक् । ) भेदः । छेँदा इति भाषा ।
पर्य्यायः । कुहरम् २ सुषिरम् ३ वि
बिलम् ५ निर्व्यथनम् ६ रोकम् ७ र
श्वभ्रम् ९ वपा १० सुषिः ११ । इत्य
१ । ८ । २ ॥ खभ्रम् १२ सुषी १३ ।
तट्टीका ॥ ( यथा, महाभारते । ३।८२
"ततो गच्छेत धर्म्मज्ञ ! हिमवत्सुतमनु
पृथिव्यां यत्र वै छिद्रं पूर्व्वमासीत् युधिष्ठि
दूषणम् । इति मेदिनी । रे, ३८ ॥ (
महाभारते । २ । १२ । २६ ।
"बहुविघ्नश्च नृपते ! क्रतुरेष स्मृतो महा
छिद्राण्यस्य तु वाञ्छन्ति यज्ञघ्ना ब्रह्मराक्ष
अवकाशः । नवमसंख्या । इति ज्योति
लग्नादष्टमस्थानम् । " छिद्राख्यमष्टम
मिति ।" इति ज्योतिस्तत्त्वम् ॥ )

छिद्रवैदेही, स्त्री, (छिद्रप्रधाना वैदेही पिप्प
गजपिप्पली । इति राजनिर्घण्टः ॥

छिद्रान्तः, [ र् ], पुं, ( छिद्रमन्तर्मध्ये य
नलः । इति राजनिर्घण्टः ॥

छिद्राफलं, क्ली, (छिद्रं दूषणमापन्नतीति ।
फल + अच् ।) मायाफलम् । इति राजनिर्घ

छिद्रितः, त्रि, ( छिद्र + तः । ) कृतच्छि
तत्पर्य्यायः । वेधितः २ विद्धः ३ । इत्य
३ । १ । ९९ ॥

छिन्नं, त्रि, ( छिद्यते स्म इति । छिद् + क्त
लूनच्छेदनम् । छेँड़ा इति काटा इ
भाषा । तत्पर्य्यायः । छातम् २ लूनम् ३ कृ
दातम् ५ दितम् ६ छितम् ७ वृक्णम् ८ ।
मरः । ३।१।१०३॥ लग्नम् ९ छादितम् १० ।
जटाधरः ॥ छेदितम् ११ खण्डितम् १२ ।
हेमचन्द्रः ॥ ( यथा, मार्कण्डेये । ८० । ११

अङ्गुष्ठाङ्गुलियोगेन उद्धरेत्तप्तमाषकम् ।
कराग्रं यो न धुनुयात् विस्फोटो वा न जायते ।
शुद्धो भवति धर्म्मेण पितामहवचो यथा ॥
शुद्धयन्तरमाह ।
सौवर्णे राजते ताम्रे आयसे मृण्मयेऽपि वा ।
पात्रं घृतमुपादाय तदग्नौ तापयेच्छुचिः ॥
सौवर्णीं राजतीं ताम्रीमायसीञ्च सुशोधिताम् ।
सलिलेन सकृद्धौतां प्रक्षिपेत्तत्र मुद्रिकाम् ॥
भ्रमद्वीचितरङ्गाढ्ये न खक्रम्यगोचरे ।
परीक्षितार्द्रपर्णेन चुचुकारं सघोषकम् ॥
ततश्चानेन मन्त्रेण सकृत्तदभिमन्त्रयेत् ।
परं पवित्रममृतं घृत ! त्वं यज्ञकर्म्मसु ॥
दह पावक ! पापं त्वं हिमशीतः शुचौ भव ।
उपोषितं ततः स्नातमार्द्रवाससमागतम् ॥
ग्राहयेन्मुद्रिकां तान्तु घृतमध्यगतां तथा ।
प्रदेशिनीञ्च तस्याथ परीक्षेयुः परीक्षकाः ॥
यस्य विस्फोटका न स्युः शुद्धोऽसावन्यथाशुचिः ॥

प्रयोगस्तु । मध्यविधाष्टयवसङ्कुलमध्यमिताङ्गुलिषोडशाङ्गुलमितप्रस्तारे तथाविधाङ्गुलिचतुष्टयखाते ताम्रादिघटितेऽश्मक्तौ मृण्मये वा चक्राकारे वर्त्तुले पात्रे लौकिकाष्टरत्तिकाधिकमाषद्वयाधिकत्रयस्त्रिंशत्तोलकरूप- ३३ । २ ।८। वैदिकपलदशकमितं घृतं ,एवं तैलञ्च निक्षिप्य लौकिकचतुररत्तिकाधिकपञ्चमाषकषट्षष्टितोलकरूप- ६६।५ । ४ । वैदिकविंशतिपलपरिमितं केवलं गव्यं घृतं वा निक्षिप्य तस्मिन् सुतप्ते सकृद्धौतां पञ्चरत्तिकामितां काञ्चनमुद्रिकां रजतादिकां वा निक्षिपेत् । धर्म्मावाहनादिहवनान्तं तुलोक्तं सर्व्वविधं कर्म्म कृत्वा,—
ओम् परं पवित्रममृतं ! घृत त्वं यज्ञकर्म्मसु ।
दह पावक ! पापं त्वं हिमशीतः शुचौ भव ॥
इत्यनेनाभिमन्त्रयेत् प्राड्विवाकः । ततः कृतोपवासः स्नातार्द्रवासाः शोध्यशिरसि प्रतिज्ञापत्रं निधाय,—
ओम् त्वमग्ने ! सर्व्वभूतानामन्तश्चरसि पावक !!
साक्षिवत् पुण्यपापेभ्यो ब्रूहि सत्यं करे मम ॥
इत्यनेनाभिमन्त्र्य आर्द्रपत्रनिक्षेपकृतचुचुकाशब्दात् घृतात् मुद्रिकां तर्ज्जन्यङ्गुष्ठाभ्यां उत्तोलयेत् । घृततैलाभ्यां वा तप्तमाषकमुत्तोलयेत् । अदग्धश्चेत्तदा शुद्ध इति । ततो दक्षिणां दद्यात् ॥”
इति दिव्यतत्त्वम् ॥

तप्तमुद्रा, स्त्री, (तप्ता अग्निसन्तप्ता मुद्रा ।) शरीरधार्य्याग्नितप्तधातुमयभगवदायुधचिह्नम् । यथा,
“आषाढ़शुक्लद्वादश्यां हरौ शिशयिषौ सति ।
वैष्णवः पारणं कृत्वा तप्तमुद्राञ्च धारयेत् ॥
ब्राह्मणः क्षत्त्रियो वैश्यः शूद्रश्चैकान्तितद्व्रये ।
कुर्य्यात्मार्पणं तप्तमुद्राभिर्देहमङ्कयेत् ॥*॥
तप्तमुद्राधारणं वाराहे तप्तमुद्राप्रसङ्गे ।
चक्रादिधारणं पुंसां परं सम्बन्धवेदनम् ।
पातिव्रत्यनिमित्तं हि वलयादिविभूषणमिव ॥*
अथ तप्तमुद्राधारणनित्यता । वायुपुराणे ।
अग्निनैव च सन्तप्तं चक्रमादाय वैष्णवः ।
धारयेत् सर्व्ववर्णानां हरिसालोक्यसिद्धये ॥”
ब्रह्माण्डे ।
कृत्वा धातुमयीं मुद्रां तापयित्वा स्वकां तनूम् ।
चक्रादिचिह्निता भूप ! धारयेद्वैष्णवो नरः ॥
नारदीयपञ्चरात्रे ।
द्वादशारन्तु षट्कोणं वलयत्रयसंयुतम् ।
हरेः सुदर्शनं तप्तं धारयेत्तद्द्विजन्मनः ॥
सौपर्णे च श्रीभगवद्गरुड़सम्वादे तप्तमुद्राप्रकरणे ।
गरुत्मन्विशेषेण सर्व्ववर्णेष्वयं विधिः ।
विप्रो वा क्षत्त्रियो वापि वैश्यः शूद्रस्तथैव च ॥
पाद्मे ।
अग्निहोत्रं यथा नित्यं वेदस्याध्ययनं यथा ।
ब्राह्मणस्य तथैवेदं तप्तचक्रादिधारणम् ॥
किञ्च । तत्रैवोत्तरखण्डे श्रीशिवोमासम्वादे ।
शङ्खचक्राङ्कनं कुर्य्याद्ब्राह्मणो बाहुमूलयोः ।
हुताग्निनैव सन्तप्य सर्व्वपापापनुत्तये ॥
चक्रं वा शङ्खचक्रे वा तथा पञ्चायुधानि वा ।
धारयित्वैव विधिवद्ब्रह्मकर्म्म समारभेत् ॥*॥
किञ्च । तत्प्रसङ्ग एव ।
अधृत्वा विधिना चक्रं ब्राह्मणः प्राकृतो भवेत् ॥
किञ्च ।
न तस्य किञ्चिच्छ्रौतादपि कृत्यसहस्रशः ।
सर्व्ववेदविदो वापि सर्व्वशास्त्रविशारदः ॥
अधृत्वा विधिना चक्रं ब्राह्मणः पतितो भवेत् ॥
किञ्च ।
तप्तेनैवाङ्कनं कुर्य्यात् ब्राह्मणस्य विधानतः ।
श्रौतस्मार्त्तादिसिद्ध्यर्थं मन्त्रसिद्ध्यै तथैव च ॥
हरेः पूजाधिकारार्थं चक्रं धार्य्यं विधानतः ।
वैष्णवत्वस्य सिद्ध्यर्थं भक्तिसिद्ध्यै विशेषतः ॥
किञ्च ।
उपवीतादिवद्धार्य्याः शङ्खचक्रादयस्तथा ।
ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः ॥*॥
श्रुतयश्च । यो ह वै सश्लोकमौर्ध्वधर्म्मानुतिष्ठमानोऽग्निनाचक्रं धत्ते । अग्निर्वै सहस्रारः सहस्रारो नेमिर्न्नेमिना तप्ततनुः सायुज्यं सलोकतामाप्नोतीति ॥
चक्रं विभर्त्ति वपुषाभितप्तं
बलं देवानाममृतस्य विष्णोः ।
स एति नाकं दुरितं विधूय
विशन्ति यद्यतयो वीतरागा इति ॥”
ऋक्परिशिष्टे । अतप्ततनुर्नतदामो अश्नुतेऽश्नुता सह इद्वहन्तस्तत्समाशतेति यजुः ॥ ऋग्वेदीयाश्वलायनशाखायाञ्च ।
प्रतद्विष्णोरजचक्रे सुतप्ते
अस्माम्भोधिं वर्त्तते चर्षणीन्द्राः ।
मूले बाह्वोर्द्धतेऽन्ये पुराणा
लिङ्गान्यन्ये तप्तायुधान्यर्पयन्ते इति ॥
छन्दोगपरिशिष्टे । सहोवाच यज्ञचक्रात्तत्पुमानात्महिताय प्रेमृणा हरिम्भजेत् । सश्लोकमौर्ध्वधर्म्मायण्वग्निनाक्त इति शतपथी श्रुतिः ॥
अथर्व्वपरिशिष्टे तप्तचक्रादिप्रकरणे ।
देवासो येन विततेन बाहुना
सुदर्शनेन प्रयताः स्वर्गमायन् ।
येनाङ्किता मनवो लोकसृष्टिं
वितन्वते ब्राह्मणास्तद्वहन्तीति ॥*॥
किञ्च । पाद्मे श्रीशिवेन तप्तमुद्राप्रसङ्गे ।
विष्णुचक्राङ्कितं विप्रं पूजयेत् सर्व्वकर्म्मसु ।
विष्णुचक्रविहीनन्तु प्रयत्नेन विवर्ज्जयेत् ॥
नारदीये तप्तमुद्राप्रसङ्गे ।
श्रीकृष्णचक्राङ्कविहीनगात्राः
श्मशानतुल्याः पुरुषोऽथ नारी ।
दृष्ट्वा नरस्तं नृपते ! सवासाः
स्नात्वा समर्च्चेद्धरिमत्र सत्य इति ॥*॥
बह्वाश्च वेङ्कटाचार्य्यपादप्रभृतिभिर्बुधैः ।
श्रुतयः स्मृतयोऽप्यत्र विख्याता लिखिताः पराः ॥
अतएव तदनादरे दोषाः । पाद्मे ।
तप्तचक्राङ्कितं दृष्ट्वा ये निन्दन्ति नराधमाः ।
अवलोक्य मुखं तेषामादित्यमवलोकयेत् ॥
अग्निपुराणे च । दशरथकृतपुत्त्रविप्रविलापे ।
शिलाबुद्धिः कृता किंवा प्रतिमायां हरेर्म्मया ।
किं मया पथि दृष्टस्य विष्णुभक्तस्य कर्हिचित् ॥
तनुमुद्राङ्कितदेहस्य चेतसा नादरः कृतः ।
येन कर्म्मविपाकेन पुत्त्रशोको ममेदृशः ॥*॥
अथ तप्तमुद्राधारणमाहात्म्यं सौपर्णे ।
अशुचिर्व्वाप्यनाचारः सर्व्वधर्म्मबहिष्कृतः ।
प्रतप्तशङ्खचक्राभ्यामङ्कितः पङ्क्तिपावनः ॥
वाराहे तप्तमुद्राधारणप्रसङ्गे ।
म्लेच्छदेशे शुभे वापि चक्राङ्को यत्र तिष्ठति ।
योजनानि तथा त्रीणि मम क्षेत्रं वसुन्धरे ! ॥
ब्रह्माण्डे ।
आयुधैर्व्वैष्णवैः सर्व्वैस्तापितैः स्वतनुं यदि ।
चिह्नयेद्वैष्णवो यस्तु स याति परमां गतिम् ॥
पाद्मे च तत्रैव ।
अग्नितप्तं पवित्रञ्च धृत्वा तु बाहुमूलयोः ।
त्यक्त्वा यमपुरं घोरं यान्ति विष्णोः परं पदम् ॥
हुताग्नितप्तचक्रेण शरीरं यस्य चिह्नितम् ।
तेन तीर्थानि यज्ञाश्च लभ्यन्ते नात्र संशयः ॥
अग्नितप्तेन चक्रेण ब्राह्मणो बाहुमूलयोः ।
अङ्कयित्वा जपन्मन्त्रं संसारान्मोक्षभाग्भवेत् ॥
अग्नितप्तेन चक्रेण बाहुमूलेषु लाञ्छिताः ।
ते सर्व्वे पापनिर्म्मुक्ता यान्ति विष्णोः परं पदम् ॥
किञ्च ।
अप्राकृता महात्मानो विष्णुचक्रेण लाञ्छिताः ।
विष्णुचिह्नविहीनास्तु प्राकृताः पतिताः स्मृताः ॥
इति ॥
इत्थं निषेधवचनं निर्मूलं सदनादृतम् ।
समूलं यच्च तत् सम्यग्विध्यभावादितत्परम् ॥*॥
अथ तप्तमुद्राधारणविधिः ।
तप्तमुद्राधारणार्थमुपचारैस्तु पञ्चभिः ।
लक्ष्मीमभ्यर्च्य संपूज्य चक्रशङ्खौ तथा नमेत् ॥
तत्र मन्त्रः ।
सुदर्शन ! नमस्तेऽस्तु पाञ्चजन्य नमोऽस्तु ते इति ।

अग्निमभ्यर्च्च्य मूलेन हुत्वा चाष्टाहुतीः क्रती ।
चक्रशङ्खगदादीनि शङ्खाग्न्यग्नौ प्रतापयेत् ॥
तत्तन्मन्त्रैर्यथाशास्त्र तान्यभ्यर्च्च्य प्रणम्य च ।
गुरुं समाप्य संवन्द्य भक्त्या विज्ञापयेदिदम् ॥
उच्छिष्टभोजनादेव किङ्करः शरणागतः ।
तप्तचक्रगदादीनि तवाङ्गानीश ! धारये ॥ इति ॥
अथ चक्रादीनामावाहनादिमन्त्रः ।
ओम् नमो भगवते सुदर्शनाय निर्ज्जितसकल-रिपुध्वजाय भगवन्नारायणकराम्भोरुहस्पर्श-दुर्ल्ललिताय ।
एह्येहि त्वं सहस्रार चक्रराज सुदर्शन ! ।
यज्ञभागं प्रगृह्णस्व पूजाश्चैव नमो नमः ॥
ओम् नमो भगवते पाञ्चजन्याय विष्णुशङ्खाय गम्भीरधीरध्वन्याकुलीकृतकौरवबाहिनीनाथाय त्रिरेखादक्षिणावर्त्ताय चिप्रशस्ताय ।
एह्येहि पाञ्चजन्य ! त्वं नारायणकरस्थित ! ।
यज्ञभागं प्रगृह्णस्व पूजाश्चैव नमो नमः ॥
ओम् रं गां मं नं पाञ्चजन्याय नमः ॥ ओम् भगवते खड्गाय नन्दकाय त्रैलोक्यपावित्राय जयिने सकलसुरासुरसुन्दरीनेत्रोत्पलार्च्चिताय॥
एह्येहि खड्गरत्न ! त्वं नन्दकाख्य सुरार्च्चित ! ।
यज्ञभागं प्रगृह्णस्व पूजाश्चैव नमो नमः ॥
ओम् खड्गाय नमः ॥ ओम् नमो भगवत्यै कौमोदक्यै गदायै दानवेन्द्रनिसूदनायै भगवद्-भट्टारकवासुदेवलालितायै ।
एह्येहि त्वं गदे ! देवि कौमोदक्यायुधेश्वरि ! ।
यज्ञभागं प्रगृह्णस्व पूजाश्चैव नमो नमः ॥
ओम् रं खं चं कं सं गदायै नमः ॥ एवं पद्माय नमः । सशराय शार्ङ्गाय नमः । इति ॥ * ॥
अथ धारणमन्त्रः ।
सुदर्शन ! महाज्वाल सूर्य्यकोटिसमप्रभ ! ।
अज्ञानान्धस्य मे नित्यं विष्णोर्म्मार्गं प्रदर्शय ॥
तथा ।
पाञ्चजन्य ! निजध्वानध्वस्तपातकसञ्चय ।
पाहि मां पापिनं घोरसंसारार्णवपातिनमिति॥
इत्युच्चारयन् मन्त्रं दक्षिणादिक्रमेण तु ।
भुजयोश्चक्रपूर्व्वाणि शङ्खाशङ्खानि धारयेत् ॥
कलत्रादिपरीवारान् निजान् सर्व्वांश्च वैष्णवः ।
भगवत्यर्पयन् तप्तमुद्राभिस्ताभिरङ्कयेत् ॥
तथा च । वाराहे ।
अङ्कयेत्तप्तचक्राद्यैरात्मनो बाहुमूलयोः ।
कलत्रापत्यभृत्येषु पश्वादिषु च सम्पदे ॥
किञ्च ।
आयसं निधिवत् कृत्वा पञ्चायुधविधानतः ।
तत्तन्मन्त्रेण मन्त्रज्ञः प्रतिष्ठाप्य पृथक् पृथक् ॥
ललाटे च गदा धार्य्या मूर्द्ध्नि चापं शरस्तथा ।
नन्दकञ्चैव हृन्मध्ये शङ्खचक्रे भुजद्वये ॥
किञ्च ।
दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम् ।
सव्ये च शङ्खं बिभृयादिति ब्रह्मविदो विदुः ॥
अथ चक्रादिप्रतिकृतिद्रव्यम् । नवप्रश्नपञ्च-रात्रे ।
सौवर्णं राजतं ताम्रं कांस्यमायसमेव वा ।
चक्रं कृत्वा तु मेधावी धारयेत विचक्षणः इति ॥
एवमेव प्रबोधन्यां द्वादश्यां भगवत्परैः ।
तप्तमुद्रा ध्रुवं धार्य्या द्वारकायां विशेषतः ॥
इति श्रीहरिभक्तिविलासे १५ विलासः ॥

**तप्तरूपकं**, क्ली, (तप्तं वह्निशोधितं रूपकं रूप्यम् ।) सुवर्णरौप्यम् । इति राजनिर्घण्टः ॥

**तप्तसूर्म्मिकुण्डं**, क्ली, ( तप्ता अग्निमयी सूर्म्मिः लौहप्रतिमूर्त्तिर्यत्र । तथाविधं कुण्डं यस्मिन् ।) नरकविशेषः । इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥

**तप्तसुराकुण्डं**, क्ली, (तप्तायाः सुरायाः कुण्डमिव ।) नरकविशेषः । इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥

**तम**, उ इर् भ य खेदे । इच्छायाम् । इति कवि-कल्पद्रुमः ॥ ( दिवां-परं-अकं-सेट् । ) उ, तमित्वा तान्त्वा । इर्, अतमत् अतमीत् । अस्मात् पुषादित्वात् नित्यं ङ इत्यन्ये । भ य, ताम्यति लोकः उत्तप्तः स्यादित्यर्थः । इति दुर्गादासः ॥

**तमं**, क्ली, ( ताम्यत्यस्मादनेन वा । तम+अपा-दाने करणे वा संज्ञायां घः ।) अन्धकारः । इति शब्दरत्नावली ॥ पादाग्रम् । इति शब्द-चन्द्रिका ॥

**तमः**, पुं, ( ताम्यत्यनेनेति । तम+संज्ञायां घः । ) तमोगुणः । इत्यमरटीकायां रायमुकुटः ॥ तमालवृक्षः । इति शब्दचन्द्रिका ॥ ( राहुः । इत्यमरः ।१।३।२६। यथा, ज्योतिषे होरायाम् । “भृगुतमबुधजीवैरिति । कितवस्तमस्येति वराहः ॥” इति उणादिवृत्तिटीकायां उज्-ज्वलदत्तः । ४ । १८८ ॥ )

**तमः**, [ स् ] क्ली, ( ताम्यत्यनेनेति । तम+“सर्व्व-धातुभ्योऽसुन् ।” उणां । ४ । १८८ । इति असुन् । ) प्रकृतेर्गुणविशेषः । यथा,—
“सत्त्वं रजस्तम इति दृश्यन्ते पुरुषे गुणाः ।
कालसञ्चोदितास्तेऽपि परिवर्त्तन्त आत्मनि ॥
प्रभूतञ्च यदा सत्त्वं मनोबुद्धीन्द्रियाणि च ।
तदा कृतयुगं विद्याद्दाने तपसि यद्रतिः ॥
यदा कर्म्मसु काम्येषु शक्तिर्यशसि देहिनाम् ।
तदा त्रेता रजोवृत्तिरिति जानीहि शौनक ! ॥
यदा लोभस्त्वसन्तोषो मानो दम्भोऽथ मत्सरः ।
कर्म्मणाञ्चापि काम्यानां द्वापरस्तद्रजस्तमः ॥
यदा सदानृतं तन्द्री निद्राहिंसादिसाधनम् ।
शोकमोहभयं दैन्यं स कलिस्तु तदा स्मृतः ॥”
इति गारुड़े २२७ अध्यायः ॥ * ॥
अपि च ।
“तमस्त्वज्ञानजं विद्धि मोहनं सर्व्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ! ॥
सत्त्वं सुखे सञ्जयति रजः कर्म्मणि भारत ! ।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥
रजस्तमश्चाभिभूय सत्त्वं भवति भारत ! ।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥”
“अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ! ॥
यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान् प्रतिपद्यते ।
रजसि प्रलयं गत्वा कर्म्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढ़योनिषु जायते ।
कर्म्मणः सुकृतस्याहुः सात्त्विकं निर्म्मलं फल
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ।
सत्त्वात् सञ्जायते ज्ञानं रजसो लोभ एव च
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ।
ऊर्द्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसा
अधन्यगुणवृत्तस्था अधो गच्छन्ति तामसाः ।
इति श्रीभगवद्गीतायाम् । १४ । ८-१८
तत्तु आवरकं मोहहेतुः । इत्यमरभरत
अस्य कार्य्यं संहारः । इति श्रीधरस्वामी
तस्य धर्म्मो यथा । प्रमादः १ मोहः २ भय
क्रान्तिः ४ विषादः ५ शोकः ६ अरतिः
अनार्य्यता ८ । इति मोक्षधर्म्मः ॥ शम
तन्द्रा १० । इत्याश्वमेधिकपर्व्व ॥ अन्धकार
( यथा, महाभारते । १ । १०५ । १० ।
“तमसा लोकमावृत्य नौगतामेव भारत ! ।”
तत्पर्य्यायः । तमसम् २ निशाचर्म्म ३ नीलपङ्क
रजोबलम् ५ दिवान्तकः ६ वियद्भूतिः ७ स्वपु
ष्पनः ८ । इति त्रिकाण्डशेषः ॥ रजोरसम्
दिनान्तरम् ११ अन्धकम् १२ । इति शब्दरत्नाव
अमरोक्तपर्य्यायोऽन्धकारशब्दे द्रष्टव्यः ॥ शोक
इति मेदिनी । सि, २४ ॥ पापम् । इति हेमचन्द्र
(राहुः । इति मेदिनी । सि, २४ ॥ यथा, रघु
८ । ३७ ।
“निमिमील नरोत्तमप्रिया
हृतचन्द्रा तमसेव कौमुदी ॥” )

**तमङ्गकः**, पुं, इन्द्रकोषः । मञ्चकः । इति हेमचन्द्र
त्रिकाण्डशेषश्च ॥

**तमतः**, त्रि, ( तम+“भृन्दृहशियजिपर्व्विपच्यमि
तमीति ।” उणां । ३ । ११० । इति अतच्
तृषितः । वाञ्छितः । इत्युणादिकोषः ।

**तमप्रभः**, पुं, ( तम इव प्रभाऽस्य अस्मिन् वा
नरकभेदः । इति हेमचन्द्रः ॥

**तमरं**, क्ली, ( तमं रातीति । रा+कः
वङ्गम् । इति हेमचन्द्रः ॥

**तमराजः**, पुं, ( तम इव राजते । राज+अच्
शर्क्कराविशेषः । नवात इति ख्यात इति केचित्
तत्पर्य्यायः । शालकः २ । तस्य गुणाः । दृष्टा
ज्वरदाहरक्तपित्तनाशित्वम् । इति राजवल्लभः

**तमसं**, क्ली, ( तम+“अत्यविचमितमीति
उणां । ३ । ११७ । इति असच् ।) अन्धकारः
इति त्रिकाण्डशेषः ॥ नगरम् । इति संक्षिप्त
सारे उणादिवृत्तिः ॥

**तमसः**, पुं, ( तम+असच् । ) कूपः । अन्धकारः
इति संक्षिप्तसारे उणादिवृत्तिः ॥

**तमसा**, स्त्री, ( तमइव जलमस्यस्याः । अच् टा
च । ) नदीविशेषः । इति संक्षिप्तसारोणादि
वृत्तिः ॥ (यथा, महाभारते । ३ ।२२१ । २४
“तमसा नर्म्मदा चैव नदी गोदावरी तथा ।”

प्रकृतिः, स्त्री, ( तमसः प्रकृतिः समहः । ) अन्धकारसमूहः । इति तमिस्राशब्दार्थे मेदिनी ॥

तमस्विनी, स्त्री, ( तमो विद्यतेऽस्यामिति विनिः ङीप् च । ) रात्रिः । ( यथा, महाभारते । ४ । २१ । ३८ ।
"अद्यप्रमाणस्तस्माद्य तमस्विन्यामनिन्दिते ! ।
नागोविजमिवाक्रम्य पोथयिष्याम्यहं शिरः ॥")
हरिद्रा । इत्यमरः । २ । ८ । ४१ ॥

तमा, स्त्री, ( तमोऽस्त्यस्यामिति । तम+अच् टाप् च । ) रात्रिः । इति हेमचन्द्रः ॥ तमालवृक्षः । इति शब्दचन्द्रिका ॥

तमाः, [ स् ] पुं, राहुः । इति मेदिनी । सै, २४ ॥

तमालं, क्ली, (ताम्यते काङ्क्ष्यते इति । तम काङ्क्षायाम्+"तमिविशिबिडिकौति ।" उणां ।१।११७। इति कालन् । ) पत्रकम् । इति राजनिर्घण्टः ॥

तमालः, पुं, ( तम काङ्क्षायाम्+कालन् । ) वृक्षविशेषः । तत्पर्य्यायः । कालस्कन्धः २ तापिच्छः ३ । इत्यमरः । २ । ४ ।६८ ॥ तापिञ्जः ४ । इति भरतः ॥ नीलतालः ५ तमालकः ६ नीलध्वजः ७ कालतालः ८ महाबलः ९ । ( यथा, भागवते । ३ । १३ । ३३ ।
"तमालनीलं सितदन्तकोट्या
क्ष्मामुत्क्षिपन्तं गजलीलयाङ्ग ॥")
अस्य गुणाः । मधुरत्वम् । बल्यत्वम् । हृद्यत्वम् । शिशिरत्वम् । गुरुत्वम् । कफपित्ततृष्णादाहश्रमशान्तिकरत्वञ्च । इति राजनिर्घण्टः ॥ तिलकम् । ( यथा, कुट्टनीमते । १६ ।
"यस्यामुपवनवीथ्यां तमालपत्राणि युवतिवदने च ।
मकरप्रचाररचितं तन्वीवाद्धौ सुरसकलचेष्टु ॥"
तमालस्तापिच्छवृक्षः युवतिवदनपक्षे तिलकमिति ॥ ) खड्गः । वरुणवृक्षः । इति मेदिनी । ले, ८७ ॥ श्वेतखदिरः । इति शब्दचन्द्रिका ॥ दृक्भेदे वंशत्वचि च पुं क्ली । इति लिङ्गादिसंग्रहे अमरभरतौ ॥

तमालकं, क्ली, ( तमालपत्रवत् वर्णेन कायतीति । कै+कः । ) सुनिषण्णशाकम् । इति त्रिकाण्डशेषः ॥ ( तमालमेव । स्वार्थे कन् । ) पत्रकम् । इति राजनिर्घण्टः ॥ तेजपात इति भाषा ॥

तमालकः, पुं, क्ली, ( तमाल एव । स्वार्थे कन् ।) तमालवृक्षः । ( यथा, रामायणे । २ । ९१।५० ।
"ततः सरलतालाश्च तिलकाः सतमालकाः ।
प्रहृष्टास्तत्र सम्पेतुः कुब्जा भूत्वाथ वामनाः ॥")
वंशलक् । इति शब्दरत्नावली ॥

तमालपत्रं, क्ली, ( तमालस्य पत्रमिव वर्णोऽस्यास्तीति । अर्श आदित्वात् अच् । ) तिलकम् । पत्रकम् । ( यथास्य पर्य्यायाः ।
"पत्रन्तमालपत्रञ्च तथा स्यात् पत्रनामकम् ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥) तमालवृक्षः । इति मेदिनी । रे, ३०२ ॥ (तमालस्य पत्रम् । यथा, रघुः । ६ । ६४ ।
"तमालपत्रास्तरणासु रन्तुं
प्रसीद शश्वन्मलयस्थलीषु ॥" )

तमालिका, स्त्री, ( तमालः सत्यत्र । तमाल+ठन् । ) ताम्रलिप्तदेशः । इति त्रिकाण्डशेषः ॥ ताम्रवल्ली । भूम्यामलकी । इति राजनिर्घण्टः ॥

तमालिनी, स्त्री, ( तमालो तमालवर्णोऽस्त्यस्या इति । इनिः ततो ङीप् ।) भूम्यामलकी । इति राजनिर्घण्टः ॥ ताम्रलिप्तदेशः । इति हेमचन्द्रः ॥

तमाली, स्त्री, ( तम+कालन् । गौरादित्वात् ङीष् । ) ताम्रवल्ली । वरुणवृक्षः । इति राजनिर्घण्टः ॥

तमिः, स्त्री, ( ताम्यति ग्लायतेऽत्र । तम+"सर्व्वधातुभ्य इन् ।" उणां । ४ । ११७ । इतीन् । ) रात्रिः । इत्यमरटीकायां भरतः ॥

तमिस्रं, क्ली, (तमोऽस्त्यत्र । "ज्योत्स्नातमिस्रेति ।" ५ । २ । ११४ । इति निपातनात् साधुः । यद्वा, तमिस्रा अस्त्याश्रयत्वेनास्य अच् ।) अन्धकारम् । इत्यमरः ॥ (यथा, महाभारते । ४ । २१ । १७ ।
"यदेतन्नर्त्तनागारं मत्स्यराजेन कारितम् ।
दिवात्र कन्या नृत्यन्ति रात्रौ यान्ति यथागृहम् ॥
तमिस्रे तत्र गच्छेथा गन्धर्व्वास्तन्न जानते ॥" )
क्रोधः । इति मेदिनी ।रे, ९१ ॥ (नरकविशेषः । यथा, भागवते । ४ । ७ । ४४ ।
"अमन्त्रनाशाच्च तमिस्रसङ्ख्यं
विपर्य्ययः केन तदेव कस्यचित् ॥" )

तमिस्रपक्षः, पुं, ( तमिस्रमन्धकारं तत्प्रधानः पक्षः । ) कृष्णपक्षः । यथा, तमिस्रपक्षत्रुटिकूटभक्षितमिति श्रीहर्षः ॥

तमिस्रा, स्त्री, ( तमोबहुलमस्ति अस्याम् । "ज्योत्स्नातमिस्रेति ।" ५ । २ । ११४ । इति निपातनात् साधुः । ) अन्धकाररात्रिः । कृष्णपक्षनिशा । इत्यमरः ॥ तमोयुक्तरात्रिमात्रम् । इति रायमुकुटः ॥ दर्शरात्रिः । इति वाचस्पतिः ॥ तमःततिः । इति मेदिनी । रे, १९१ ॥ ( यथा, रघुः । ५ । १३ ।
"सूर्य्ये तपत्यावरणाय दृष्टेः
कल्पेत लोकस्य कथं तमिस्रा ॥")

तमी, स्त्री, ( तमिः कृदिकारादिति वा ङीष् । ) रात्रिः । ( यथा, माघे । ६ । २३ ।
"दहशोऽपि भास्करकराह्निं न यः
स तमीं तमोभिरभिगम्य ततान् ॥")
हरिद्रा । इत्यमरः । २ । ८ । ४१ ॥

तमोघ्नः, पुं, ( तमोऽन्धकारं मोहमज्ञानं वा हन्तीति । हन+टक् ।) वह्निः । सूर्य्यः । (यथा, महाभारते । ७ । १४४ । १३६ ।
"स देवराडूभिव देवराजः
किरीटमाली व्यधमत् समन्तात् ।
यथा तमांस्यभ्युदितस्तमोघ्नः
पूर्व्वप्रतिज्ञां समवाप्य वीरः ॥" )
चन्द्रः । बुद्धः । केशवः । शम्भुः । इति मेदिनी । ने, ७१ ॥

तमोज्योतिः, [ स् ] पुं, ( तमसि ज्योतिर्यस्य ।) ज्योतिरिङ्गणः । इति शब्दरत्नावली ॥

तमोनुत्, [ द् ] पुं, ( तमोऽन्धकारं नुदतीति । नुद्+क्विप् ।) अग्निः । सूर्य्यः । चन्द्रः । दीपः । इति शब्दरत्नावली ॥ (तमोनाशके, त्रि । यथा महाभारते । १३ । १६६ । ८ ।
"एवमुक्तस्तदाचिर्वे तमोनुदभवद्वशी ।
अभवत् सौम्यभावाच्च सोमवत् प्रियदर्शनः ॥")

तमोनुदः, पुं, ( तमोऽन्धकारं नुदतीति । नुद्+"इगुपधज्ञेति ।" ३ । १ । १३५ । इति कः । ) सूर्य्यः । इति शब्दरत्नावली ॥ (अग्निः । चन्द्रः । इति विश्वः ॥ यथा, रघुः । ३ । ३३ ।
"नरेन्द्रकन्यास्तमवाप्य सत्पतिं
तमोनुदं दक्षसुता इवाबभुः ॥"
प्रकृतिप्रेरकः । यथा, मनुः । १ । ६ ।
"ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम् ।
महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः ॥")

तमोपहः, पुं, (तमोऽन्धकारं अपहन्तीति । अप+हन्+"अपे क्लेशतमसोः ।" ३ । २ । ५० । इति डः । ) सूर्य्यः । चन्द्रः । बुद्धः । अग्निः । इति मेदिनी । हे, ३० ॥ ( अज्ञाननाशके, त्रि । यथा, किरातार्ज्जुनीये । ५ । २२ ।
"आगमादिव तमोपहादितः
सम्भवन्ति मतयो भवच्छिदः ॥" )

तमोभित्, [ द् ] पुं, ( तमस्तिमिरं भिनत्ति स्वज्योतिःप्रकाशेन नाशयतीति । भिद्+क्विप् । ) खद्योतः । इति शब्दमाला ॥

तमोमणिः, पुं, ( तमसि अन्धकारे मणिरिव । ) खद्योतः । इति त्रिकाण्डशेषः ॥ गोमेदकमणिः । इति राजनिर्घण्टः ॥

तमोलिप्ती, स्त्री, ( तमसा लिप्यते इति । लिप+क्तः निपातनात् ङीप् । ) देशविशेषः । तमोलुक इति भाषा ॥ तत्पर्य्यायः । ताम्रलिप्तः २ वेलाकुलम् ३ तमालिका ४ । इति शब्दरत्नावली ॥ ताम्रलिप्तम् ५ ताम्रलिप्ती ६ । इति त्रिकाण्डशेषः ॥ दामलिप्तम् ७ तमालिनी ८ स्तम्बपूः ९ विष्णुगृहम् १० । इति हेमचन्द्रः ॥

तमोविकारः, पुं, (तमस एव विकारो यत्र ।) रोगः । इति राजनिर्घण्टः ॥

तमोहरः, पुं, ( तमो हरतीति । हृ+अच् । तमस्य हर इति वा ।) चन्द्रः । इति शब्दरत्नावली ॥ ( अग्निः । सूर्य्यः । इति व्युत्पत्तिलब्धोऽर्थः ॥ )

तम्या, स्त्री, ( ताम्यति गच्छतीति । तम्+अच् । पृषोदरादित्वात् साधुः । ) गौः । इति हेमचन्द्रः । ४ । ३३ ॥

तम्ब, गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) ओष्ठ्यवर्गशेषोपधः । तम्बति । इति दुर्गादासः ॥

तम्बा, स्त्री, ( तम्बति गच्छतीति । तम्ब+अच् ।) गौः । इति हेमचन्द्रः । ४ । ३३२ ॥

तय, ङ गतौ । रक्षे । इति कविकल्पद्रुमः ॥ ( भ्वां-आत्मं-सकं-सेट् । ) ङ, तयते । इति दुर्गादासः ॥

तरः, पुं, ( तॄ तरणे + "ऋदोरप् ।" ३।३।५७। इति अप् । ) तरणम् । ( यथा, मनुः । ८ । ४०४ ।
"पण्यं यानं तरे दाप्यं पौरुषोऽर्द्धपणं तरे ॥")
शुल्कम् । इति मेदिनी । रे, ४० ॥ द्रुतः । इति भूरिप्रयोगः ॥ ("तरतमौ द्विबहूनामेकोत्कर्षे ।" इति मुग्धबोधव्याकरणात् प्रत्ययविशेषश्च ॥)

तरः, [ स् ] क्ली, ( तॄ प्लवनतरणयोः + करणादौ यथायथं असुन् । ) बलम् । ( यथा, रघुः । ११ । ७७ ।
"तिष्ठतु प्रधनमेवमप्यहं
तुल्यबाहुतरसा जितस्त्वया ॥" )
वेगः । तीरम् । प्लवगः । इति शब्दरत्नावली ॥

तरक्षः, पुं, (तरक्षु + पृषोदरात् उलोपः ।) तरक्षुः । इत्यमरटीकायां भरतः ॥ ( यथा, हरिवंशे संहितायाम् । १२ । ६ ।
शैलकूटे तरक्षं च ग्राह् लघ्वाशास्त्रपथ्यासितेः ॥)

तरक्षुः, पुं, ( तरं बलं मार्गं वा क्षिणोति । क्षिणु हिंसायाम् + मितद्र्वादित्वात् डुः । ) व्याघ्रविशेषः । नेकड़े बाघ इति भाषा ॥ तत्पर्य्यायः । तक्षुः २ मृगादनः ३ तरक्षुकः ४ । इति शब्दरत्नावली ॥ (यथा, हरिवंशे । १६३।१४।
"ततो मायां परां चक्रे देवशत्रुः प्रतापवान् ।
सिंहान् व्याघ्रान् वराहांश्च तरक्षूंश्च वा-
नरान् ॥")

तरक्षुकः, पुं, ( तरक्षु + स्वार्थे कन् । ) तरक्षुः । इति शब्दरत्नावली ॥

तरङ्गः, पुं, ( तरति प्लवते इव । तॄ + "तरत्यादिभ्यश्च ।" उणां । १ । ११६ । इति अङ्गच् । ) वायुना नद्यादिजलस्य तिर्य्यगूर्द्ध्वप्लवनम् । ढेउ इति भाषा ॥ तत्पर्य्यायः । भङ्गः २ ऊर्म्मिः ३ वीचिः ४ । इत्यमरः ॥ ऊर्म्मी ५ वीची ६ विचिः ७ लहरी ८ हल्ली ९ विलिः १० । इति भरतः ॥ लहरिः ११ । इति सारसुन्दरी ॥ जललता १२ भङ्गिः १३ । इति हारावली ॥ उत्कलिका १४ ऊर्म्मिका १५ । इति जटाधरः ॥ वस्त्रम् । हयादीनां समुत्फालः । इत्युणादिकोषः ॥

तरङ्गिणी, स्त्री, ( तरङ्गो वीचिरस्त्यस्या इति । तरङ्ग + "अत इनिठनौ ।" इति इनिः । ) नदी । इत्यमरः । १ । १० । ३० ॥ ( यथा, माघः ।
"तरङ्गिणी वेणिरिवायता भुवः ॥" )

तरणं, क्ली, ( तॄ + भावे ल्युट् । ) प्लवनपूर्ब्बकदेशान्तरगमनम् । इति दुर्गादासः ॥ पारगमनम् । सन्तरणम् । यथा, मोहमुद्गरे । ६ ।
"क्षणमपि सज्जनसङ्गतिरेका
भवति भवार्णवतरणे नौका ॥"

तरणः, पुं, ( तीर्य्यतेऽनेनेति । तॄ + करणे ल्युट् । ) भेलकः । इति त्रिकाण्डशेषः ॥ स्वर्गः । इति शब्दसन्दर्भसिन्धुः ॥

तरणिः, स्त्री, ( तीर्य्यतेऽनयेति । तॄ + "अर्त्तिसृधृधमीति ।" उणां । २ । १०३ । इति अनिः । ) नौका । ( यथा, आर्य्यासप्तशत्याम् । ३६० ।
"त्वामनुधावति तरणिस्तदपि गुणाकर्षतरलेयम् ॥")
घृतकुमारी । इत्यमरः । ४ । २ । ७३ ॥

तरणिः, पुं, ( तरति पापमनेनेति । तॄ + अनिः । ) सूर्य्यः । ( यथा, देवीभागवते । २ । ६ । २८ ।
"इत्युक्त्वा तरणिः कुन्तीं तन्मनस्कां सुलज्जिताम् ।
भुक्त्वा जगाम देवेशो वरं दत्त्वाभिवाञ्छितम् ॥")
अर्कवृक्षः । इत्यमरः ॥ भेलकः । ( यथा, वोपदेवप्रशंसाश्लोकः ।
"सोऽयं व्याकरणार्णवैकतरणिर्धातुर्य्यचिन्तामणि-
र्जीयात् कोविदगर्व्वपर्व्वतपविः श्रीवोपदेवः कविः ॥" )
किरणः । इति हेमचन्द्रः ॥

तरणिपेटकः, पुं, (तरणिः पेटक इव । ) काष्ठाम्बुवाहिनी । इति जटाधरः ॥

तरणिरत्नं, क्ली, ( तरणिः सूर्य्यस्तत्प्रियं रत्नम् । ) माणिक्यम् । इति राजनिर्घण्टः ॥

तरणी, स्त्री, (तरणिः । कृदिकारादिति वा ङीष् ।) नौका । इति शब्दरत्नावली ॥ पद्मचारिणी । इति शब्दचन्द्रिका ॥ घृतकुमारी । इत्यमरटीकायां भरतः ॥

तरण्डः, पुं, क्ली, (तरति प्लवत इति । तॄ प्लवनतरणयोः + बाहुलकात् अण्डन् । ) । वडिशीसूत्रबद्धकाष्ठादि । प्लवः । नौका । इति मेदिनी । डे, २९ ॥ कुम्भतुम्बीरम्भादिसञ्चरः । इति शब्दरत्नावली ॥

तरण्डः, पुं, देशविशेषः । इति शब्दरत्नावली ॥

तरण्डपादा, स्त्री, ( तरण्डः प्लवनशीलः पादः प्रायेण तुरीयांशो यस्याः । ) नौका । इति शब्दरत्नावली ॥

तरण्डी, स्त्री, (तरत्यनयेति । तॄ + अण्डन् । गौरादित्वात् ङीष् ।) नौका । इति शब्दरत्नावली ॥ ( तरण्डा । इति हारावलीधृतपाठः । ५५ ॥ )

तरत्, [ द् ] स्त्री, ( तरत्यनेनेति । तॄ + बाहुलकादतिः । ) प्लवः । ( तरतीति । तॄ + कर्त्तरि अदिः ।) कारण्डवपक्षी । इति मेदिनी । दे, २९ ॥

तरदी, स्त्री, कण्टकिवृक्षभेदः । तत्पर्य्यायः । तारदी २ तीव्रा ३ खर्वुरा ४ रक्तबीजका ५ । अस्या गुणाः । तिक्तत्वम् । मधुरत्वम् । गुरुत्वम् । वल्यत्वम् । कफनाशित्वञ्च । इति राजनिर्घण्टः ॥

तरन्तः, पुं, ( तरतीति । तॄ + "तॄभूवहिवसीति ।" उणां । ३ । १२८ । इति झच् ।) भेकः । आसारः । ( तीर्य्यते इति । + कर्म्मणि झच् । ) समुद्रः । इत्युणादिकोषः ॥

तरन्ती, स्त्री, ( तीर्य्यतेऽनयेति । तॄ + झच् । ततो ङीष् । ) तरिः । इत्युणादिकोषः ॥

तरपण्यं, क्ली, ( तॄ + भावे अप् । तरस्तरणं तस्य पण्यम् । ) आतरः । इत्यमरः । १ । १० । ११ ॥ नौका भाड़ा इति भाषा ॥

तरम्बुजं, क्ली, ( तरं तरणं अम्बुवत् जायतेऽस्य । जन + बहुलवचनात् डः । ) फलविशेषः । तरमुज इति ख्यातः । यथा, उत्तरकामाख्यातन्त्रे ।
"ज्यैष्ठे मासि महेशानि ! पौर्णमास्यां निशार्द्धे ।
तृष्णातुरा महाकाली भ्रमन्ती बिल्वकानने ।
तत्रागत्य त्वया तस्यै फलं दत्तं तरम्बुजम् ।
तत्फलभक्षणात्तृप्ता वरदा सा हरप्रिया ।
यो मे दद्यात् फलं रम्यं स चिरायुश्चतुर्युगम् ।"

तरलः, पुं, ( तॄ + "वृषादिभ्यश्चित् ।" उणां । १ । १०८ । इति कलप्रत्ययश्चित्वञ्च ।) हारः । हारमध्यमणिः । ( यथा, महाभारते । ८ । ६४ । १६ ।
"प्रकीर्णका विप्रकीर्णाश्च राजन् !
प्रवालमुक्तातरलाश्च हाराः ।")
तलम् । इत्यजयपालः ॥ ( जनपदविशेषः । तद्देशवासिनि बहुवचनान्तः । यथा, महाभारते । ८ । ८ । २० ।
"वत्सान् कलिङ्गान् तरलानश्मकानृषिका-
[नपि ।")

तरलः, त्रि, ( तॄ + कलच् । ) चलः । ( यथा नैषधे । ५ । २४ ।
"धाः स्वभावमधुरैरनुभावै-
स्तावकैरतितरां तरलाः स्मः ।")
पिङ्गः । भास्वरः । इति मेदिनी । ले, ६५ । मध्यशून्यद्रव्यम् । इति धरणिः । द्रवीभूतञ्च ।

तरललोचना, स्त्री, (तरले चञ्चले लोचने यस्याः ।) चञ्चलनयना नारी । इति हेमचन्द्रः ॥

तरला, स्त्री, ( तॄ + कलच् टाप् च । ) यवागूः । सुरा । इति मेदिनी । ले, ६६ ॥ मधुमक्षिका । इति हेमचन्द्रः ॥

तरलितं, त्रि, (तरलं तारल्यमस्य जातम् । तरल + इतच् । तरल इवाचरति तारलं करोतीति तरल + क्विप् + णिच् + क्त इति केचित् ।) जाततारल्यम् । तत्पर्य्यायः । प्रेङ्खोलितम् २ लुलितम् ३ प्रेङ्खितम् ४ द्रुतम् ५ चलितम् ६ कम्पितम् ७ धूतम् ८ वेल्लितम् ९ आन्दोलितम् १० । इति हेमचन्द्रः ॥ (यथा, गीतगोविन्दे । १२ । १५ ।
"व्यालोलः केशपाशस्तरलितमलकैः स्वेदलोलौ कपोलौ ।")

तरवारिः, पुं, ( तरं समागतविपक्षबलं वारयतीति । वृ + णिच् + इन् । ) खड्गः । तरवार इति भाषा । इति हेमचन्द्रः । ३ । ४४५ ॥

अथ खड्गपरीक्षा ।
"अङ्गं रूपं तथा जातिर्नेत्रारिष्टे च भूमिका ।
ध्वनिर्म्मानमिति प्रोक्तं खड्गज्ञानाष्टकं शुभम् ।
अभिन्ने दृश्यते यादृक् विभिद्य घटितं तथा ।
यदेव दृश्यते चिह्नं तदङ्गं संप्रचक्षते ॥
नीलश्यामादिकं खड्गे रूपमित्यभिधीयते ।
तेनैव यत् प्रतीतं स्यात् तज्जातिरिति गद्यते ।
अङ्गातिरिक्तं यज्ज्योतिस्तद्धाराग्रोपलक्षणम् ।
तन्नेत्रमिति जानीयात् खड्गे खड्गविशारदः ।
अङ्गातिरिक्तं खड्गादिषु च्छुद्रतापलक्षणम् ।
तदरिष्टमिति प्राहुर्भूमिरङ्गादिधारणम् ।

य: खड्गे जायते शब्दो मल्लदक्कादिनाहते ।
स भूमिस्तु नमामानं शाननष्टविधन्निरम् ॥
सत्त्वाद्या निपुणै: खड्गे सम्भाव्यन्तेऽपि लक्षिमा: ।
सम्भावलक्षिमौ ज्ञेयौ तावेव सहजाविति ॥
शुतमङ्गानि चत्वारि रूपाणि जातयस्तथा ।
त्रिंशन्नेत्राणि जानीयादरिष्टानि तथैव च ॥
भूमिश्च द्विविधा ज्ञेया ध्वनिरष्टविधो मत: ।
मानन्तु द्विविधं प्रोक्तमित्येषां संग्रहो मत: ॥"॥
अथ खड्गस्य शताङ्गगणना लौहार्णवे ।
कृष्णसर्पगजोवृक्षकदमनस्थूलाङ्गलक्ष्याख्य-श्वेता-
म्भोजगदातिलानलकणाग्रन्थिस्थिरास्तैत्तिरा: ।
मालाजीरकषट्पदोत्तमरिपच्चालान्मवर्णाञ्जन-
चौरसुन्दकमञ्चिकातुषयवव्रीहिक्षुमाषर्षपा: ॥
सिंहीतक्षुलगोभिराधिवनसन्न्याहाग्निकेशोपल-
शोणीकाककपालपत्तुवरीविम्बीपलीसर्षपा: ।
गोजीरत्नवपारखोनसुमनाजिङ्गीश्रमीरोहित-
प्रोष्ठीमारिषमार्कवाखुरतश्रिकेचाग्निगुञ्जाधरा: ॥
दूर्वाविल्वमकरटुण्डुकघटीमार्जारिकाकेतकी-
मूर्द्धावध्यकलायचम्पकवलान्यग्रोधवंशाश्वगा: ।
ज्येष्ठीजालपिपीलिकानलरज: कुम्भाक्षरोम-
सूची
कर्केन्दुव्यङ्गुलारनालमहिषस्कन्धगुंधका इति ॥
प्रोक्ता लौहविशारदेन मुनिना खड्गस्य भेदा:
क्रमात् ॥"
अथ तस्य चत्वारि रूपाणि ।
"नील: कृष्ण: पिशङ्गश्च धूम्रश्चेति चतुर्व्विध: ।
वर्णप्रकर्ष: खड्गानां कथितो मुनिपुङ्गवै: ॥"
अथ चतस्रो जातय: ।
"ब्राह्मण: क्षत्रियो वैश्य: शूद्रश्चेति चतुर्व्विध: ।
जातिभेदो विनिर्द्दिष्ट: खड्गानां मुनिपुङ्गवै: ॥"
अथ त्रिंशन्नेत्राणि ।
"चक्रं पद्मं गदा शङ्खो डमरुर्ह्यङ्कुश: ।
छत्रं पताका वीणा च मत्स्यलिङ्गध्वजेन्द्रव: ॥
कुम्भ: शूलश्च शार्द्दूल: सिंह: सिंहासनं गज: ।
हंसो मयूरो जिह्वा च दर्पण: खड्ग एव च ॥
पुत्रिका चामरं शैल: पुष्पमाला भुजङ्गम: ।
त्रिंशदेतानि नेत्राणि खड्गानां कथितानि वै ॥"
अथ त्रिंशदरिष्टानि ।
"छिद्रं काकपदं रेखा भिन्नं भेकश्च मूषिक: ।
विडाल: शर्करा नीली मशको भृङ्गवृश्चिके ॥
त्रिबिन्दु: कालिका दारी कपोत: काक एव च ।
खर्पर: शकली क्रोडी कुष्ठश्च कलालिके ॥
करालकङ्कखर्व्वूरश्वशृङ्गपुच्छखनित्रकम् ।
लाञ्छनं वडिशाख्यञ्च मुनिना तत्त्ववेदिना ॥
प्रोक्तान्येतान्यरिष्टानि खड्गानां त्रिंशदेव हि ॥"
अथ द्विविधा भूमि: ।
"दिव्यभौमविभागेन भूमिस्तु द्विविधा भवेत् ।"
अथाष्टधा ध्वनि: ।
"हंसकांस्याश्वढक्कानां काकतन्त्रीखराश्मनाम् ।
अनयोऽष्टविधा: प्रोक्ता नागार्ज्जुनमुनेर्मता: ॥"
अथ द्विविधं मानम् ।
"उत्तमाधमभेदेन मानं तद्द्विविधं भवेत् ।
इति प्रोक्तानि रूपाणि खड्गानां शान्तिहेतवे ॥
एतानि तत्त्वतो ज्ञात्वा भवेन्नृपतिपूजित: ॥"
इति रूपाध्याय: ॥ * ॥
तत्र प्रथमतोऽङ्गानां लक्षणानि निबोधत ॥
लौहप्रदीपे ।
"कृष्णपत्रसमा भूमिरङ्गं श्वेतं प्रतीयते ।
जङ्गं तत्तु महामूल्यं कृष्णपत्रमुशन्ति तम् ॥
एष खड्गवरो दद्याल्लक्ष्मीमायुर्यशो बलम् ॥१॥
स्वर्णरेखा यदी तन्वी यद्भूमौ निकषोपमा ।
स्वर्णपत्रमिति प्राहुरायुर्लक्ष्मीजयप्रदम् ॥२॥
गजमुक्ताकृतिर्भूमौ लक्ष्यायामङ्गसम्भव: ।
गजपत्रमिति प्राहू रक्तस्वर्णं तु तद्विधेत् ॥
ज्वरादिव्याधिशमनं तस्य प्रक्षालनाम्भसा ।
अपि क्षीणोऽपि भूपालस्तच्छौर्य्यात् साधयेन्
महीम् ॥३॥
एरण्डबीजप्रतिममङ्गं भूमि: सितेतरा ।
बहुपत्रमिदं गात्वा शत्रुदर्पक्षयङ्कर: ॥
एतस्य स्पर्शमात्रेण नर: सम्यग्विमुच्यते ।
महिषाख्यमिदं पत्रं केचिदाहुर्मनीषिण: ॥४॥
अङ्गं दमनपत्राभं खड्गे यस्मिन् प्रतीयते ।
विद्याद्दमनपत्रञ्च तच्छ्रेयं द्विविधं बुधै: ॥
नीला शुभ्रा भवेद्भूमिस्तत्र नीला गरीयसी ।
तस्मिन् पर्युषितं तोयं गन्धे दमनकोपमम् ॥
तत्प्रभावान्महीपाल: शत्रूणां पृथ्वीं हि साध-
येत् ॥५॥"
शार्ङ्गधरस्य ।
"एका स्थूला सिता रेखा भूमिर्न्नीला दृढा यदि ।
स्थूलाङ्गमङ्गपत्रं तद्विद्याल्लक्ष्मीयश:प्रदम् ॥
एतत्पत्रे भवेल्लोहः स्थूलश्चिरतरस्थिति: ।
एतं महान्तमपरे वदन्ति खड्गकोविदा: ॥६॥
छटायां दृश्यते भूमौ अङ्गञ्च प्रतिबिम्बितम् ।
अङ्गपत्रं भवेत्तस्य द्विधाभूमि: सितासिता ॥७"॥
लौहप्रदीपेऽपि ।
"निरङ्गं कृष्णपत्राभमीषत्त्विषिनिभञ्च यत् ।
दुर्लभं तन्महामूल्यं कान्तलौहं प्रचक्षते ॥
कृष्णा भूमिर्भवेत् स्वच्छा पीता वज्राङ्गसङ्कुला ।
कृष्णपत्रमिति प्राहुस्तत्पत्रे मोह उच्यते ॥"
प्रदीपेऽपि ।
"कृष्णा भूमि: सुवर्णाभमीषच्छुक्लाङ्गसङ्गतम् ।
शाहुलीपत्रकं विद्यात् कालसंज्ञमथापरे ॥८॥
अरुणं सम्प्रदर्शयेदङ्गं भूमि: सितेतरा ।
अरुणाख्यमिदं पत्रं शत्रुदर्पनिसूदनम् ॥
सूर्य्यांशुस्पर्शमात्रेण वह्निरूपां वमेत् शिखाम् ।
तस्य स्पर्शनमात्रेण पद्मकोष: स्फुटेन्निशि ॥
दुर्लभं तन्मनुष्याणां भाग्यै: क्वापि लभ्यते ।
तद्दृयोजनसङ्घस्य रिष्टं नाशयति ध्रुवम् ॥९॥
श्वेतास्तिस्रो यदा रेखा आमूलादुपलक्ष्यते ।
श्वेताङ्गमिति तद्विद्याद्यशोलक्ष्मीबलप्रदम् ॥१०॥
अम्भोजदलसङ्काशमङ्गं भूमि: सितेतरा ।
अम्भोजपत्रं तच्छ्रेयं कथितं मुनिपुङ्गवै: ॥११॥
अङ्गं यस्य गदाकारं भूमिश्चैव सितेतरा ।
गदापत्रमिदं ब्रूयात् तत्पत्रे शूलसम्भव: ॥१२॥
अङ्गं सूक्ष्मतिलाकारं भूमिश्चैव सितासिता ।
तिलपत्रमिदं ज्ञेयं लक्ष्मीबलयश:प्रदम् ॥
तत्पत्रे तिलतैलाभा वसा प्रच्यवतेऽधिकम् ॥१३॥
धूम्रवर्णा भवेद्भूमिरङ्गं वह्निशिखोपमम् ॥
अग्निपत्रमिदं ज्ञेयं शत्रूणां दाहकारकम् ।
अत्र शीतोदकं न्यस्तं तप्तं भवति च क्षणात् ॥
शाणे वह्निं वमेद्दयस्तु तथा सूर्य्यांशुसङ्गमात् ।
तत्पत्रे बलवान् दाहो दग्धवच्च व्रणो भवेत् ॥
एतत् परमभाग्येन लभ्यते धरणीतले ॥१४॥
भूमि: सिता तिला वापि अङ्गञ्चेत् पिप्पली-
प्रभम् ॥
कणापत्रमिदं ज्ञेयमन्तर्दाहस्तु तत्पत्रे ॥१५॥
कृष्णाभूमिर्यदैवाङ्गे दृश्यते ग्रन्थिसञ्चय: ॥
ग्रन्थिपत्रमिदं ज्ञेयं वैरिपक्षविनाशनम् ।
तत्पत्रे बलवान् दाहस्तृषा च ज्वर एव च ॥१६॥
शालपर्णीदलाकारमङ्गं कृष्णाविपुत्रिका ।
स्थिरापत्रमिदं प्राहुस्तत्पत्रे वेपथुर्भवेत् ॥१७॥
यदा तित्तिरिपक्षाभमङ्गं भूमि: सितेतरा ।
एतत्तित्तिरिपत्रं स्यात् तत्पत्रे बहुवेदनम् ॥१८॥
वनमालासमा यस्मिन् माला खड्गे प्रदृश्यते ।
मालाङ्गमिति तद्विद्यात्तत्तोयं गन्धवद्भवेत् ॥
अत्र तप्तोदकं न्यस्तं शीतं भवति तत्क्षणात् ।
एष दाहपरीतानामन्ते पित्तहतात्मनाम् ॥
भवेत् परमभैषज्यं भाग्येनैतद्धि लभ्यते ॥१९॥
यदा जीरकसङ्काशमङ्गं भूमि: सितासिता ॥
एतज्जीरकपत्रं स्यात्तत्पत्रे तत्क्षणाज्ज्वर: ॥२०॥
भूमि: सितासितश्चैवा अङ्गं भृङ्गाभमिष्यते ॥
तत्र चेन्मध्यमन्यस्तं शोषमाप्नोति केवलम् ।
एतद्भ्रमरपत्रं स्यात्तत्पत्रे स्याद्विसूचिका ॥२१॥
जङ्गं कपिलाभासमङ्गं यस्मिन् प्रतीयते ।
जङ्गपत्रमिदं प्राहुर्विषवेगनिसूदनम् ॥"
लौहप्रदीपेऽपि ।
"जङ्गं कपिलाभासमङ्गं यस्मिन् प्रतीयते ।
लाङ्गलाङ्गन्तु तद्विद्यात् स्पर्शे तस्याहिनाशनम् ॥
२२ ॥
अङ्गं मरीचसङ्काशं भवेद्भूमि: सितेतरा ।
मरीचाङ्गमिदं पत्रं तत्पत्रे कटुरक्तता ॥
तत्प्रक्षालनतोयेन नश्यन्ति पीनसादय: ॥२३॥
यदा सर्षपशाकारमङ्गं भूमिस्तु निर्म्मला ॥
भुजङ्गपत्रं तद्विद्यात्तत्पत्रे विषबहुला ।
तस्य स्पर्शनमात्रेण भेक: प्राणैर्विमुच्यते ॥
एकस्यास्य प्रसादेन शत्रूणां शास्ति मर्त्त्यं नृप: ।
२४ ।
यदाश्वखुरसङ्काशमङ्गं भूमिस्तु निर्म्मला ॥
अश्वाङ्गमिति तं विद्यात् खड्गं परमदुर्लभम् ।
तस्य संयोगमात्रेण वाजी मन्दोऽपि धावति ॥
तस्य क्षालनतोयेन हयानां रोगनाशनम् ।
एतत्पत्रे भयं मूर्च्छा दाहश्च भ्रम एव च ॥२५॥
मयूरपिच्छसदृशमङ्गं भूमि: सितेतरा ।
बर्हाङ्गमिति तं विद्यात्तत्पत्रे वान्तिरिष्यते ॥
सर्पाणामिह सर्व्वेषामस्य स्पर्शाद्विमुक्तता ।
एतदेव नृपतिभिर्भाग्यै: क्वापि लभ्यते ॥२६॥

भूमिरञ्जनसङ्काशा धारा चास्य सिता भवेत् ।
अञ्जनाख्यमिदं प्रायः सर्व्वदैवोपलभ्यते ॥”
लौहप्रदीपेऽपि ।
“धारा शुभ्रा भवेद्यस्य भूमिः कज्जलसन्निभा ।
कृष्णरक्तैश्चितं वापि विद्यात् कज्जलवक्त्रकम् ॥२७॥
मधुवर्णसमा भूमिरङ्गं वा मधुबिन्दुवत् ।
क्षौद्राख्यमिति जानीयात् जयलक्ष्मीयशःप्रदम् ॥”
शार्ङ्गधरेऽपि ।
“निम्नकायो भवेद्यत्र रात्रिन्दिवविलेपितः ।
मधुरो मधुवर्णाभः स खड्गो देववल्लभः ॥
विशेषाच्चात्र रज्यन्ति सततं मक्षिकादयः ।२८।
आसीमकोशिका यस्य क्षुद्राङ्गं कुक्कलीक्षणम् ॥
क्षुद्रवक्त्रकनामानं प्राह नागार्ज्जुनो मुनिः ।
इदं कुक्कलवक्त्रञ्च प्राह लौहार्णवे मुनिः ॥
अस्य चातेषु बलवान् दाहः समवलोकितः ।२९।
यदङ्गं मक्षिकाकारं भूमिश्चैव सितासिता ॥
क्लेदः शुष्यति चैवात्र मक्षिकाङ्गं तमादिशेत् ।३०।
अङ्गं यदा तुषाकारं या च भूमिः सितासिता ॥
तुषवक्त्रमिदं ख्यातं प्राह नागार्ज्जुनो मुनिः ।३१।
अङ्गं यवफलाकारं भूमिः कृष्णा सिता तथा ॥
यवाङ्गमिति तं विद्यात्तत्स्पर्शं कक्षसम्भवः ।
एष खड्गाधमस्त्याज्यो यदीच्छेद्भूतिमात्मनः ॥३२
अङ्गं व्रीहिप्रसूनाभं भूमिर्धूम्रा चतेऽतिरुक् ।
तद्व्रीहिवक्त्रं जानीयाच्छत्रूणां भयवर्द्धनम् ३३ ॥
अतसीफलसङ्काशमङ्गं भूमिः सितासिता ।
अतसीवक्त्रमाकुर्त्तं तत्क्षते शिरसो रुजा ३४ ॥
यदा सर्षपबीजाभमङ्गं भूमिः सितासिता ।
खरधारः खरस्पर्शः सर्षपाङ्गः स दुर्लभः ॥३५॥
सिंह्याकारं भवेद्यस्य अङ्गं भूमिः सितासिता ।
सिंहीवक्त्रन्तु तद्विद्यात्तत्क्षते प्रलपेन्नरः ॥
एतत्क्षालनतोयेन कासरोगोपनाशनम् ॥३६॥
अङ्गं तण्डुलसङ्काशं भूमिर्धूम्रा सितासिता ।
तण्डुलाङ्गमिमं विद्याद्यशःश्रीबलवर्द्धनम् ।
एतत्पर्य्युषितं तोयं तण्डुलोदकसन्निभम् ॥
अस्य प्रभावान्मनुजो भर्त्ता हि लभते श्रियम् ॥३७
अङ्गञ्चेन्नोक्षुराकारं भूमिराघातनिःसहा ॥
खड्गाधममिदं विद्यान्नोवक्त्रं नाम नामतः ॥३८॥
स्थूला दीर्घाः शिराः कृष्णा भूमिश्चैव सिता-
सिता ॥
शिराङ्गमिति तं ब्रूयादेनं खड्गाधमं बुधाः ।३९।
शिवलिङ्गाकृतिश्चाङ्गे धारा चैव सितायवा ॥
शिवाङ्गमिति तं ब्रूयाच्छत्रुपक्षनिसूदनम् ॥४०॥
यदा व्याघ्रनखाकारमङ्गं भूमिस्तु पिङ्गला ॥
नखवक्त्रमिदं ब्रूयात्तत्क्षते श्वयथुर्भवेत् ।
एतदामिषसंस्पर्शात् प्रविशेत् स्वयमेव हि ॥४१॥
ग्राहपुच्छोपमन्त्वङ्गं भूमिर्धूम्रा खराकृतिः ।
ग्राहाङ्गमिति जानीयाच्छत्रुवंशोपनाशनम् ॥
अस्य स्पर्शनमात्रेण जीवन्तत्स्या जहत्यहन् ॥४२॥
यदा मत्कुणनेत्राभमङ्गं भूमिः सितासिता ॥
नेत्राङ्गमिति जानीयात् संग्रामे विजयप्रदम् ।
एतत्क्षालनतोयेन नूनमन्धोऽपि पश्यति ॥४३॥
अङ्गं केशसमं यस्य भूमिर्धूम्रा सितासिता ।
केशाङ्गमिति जानीयात् क्लेशदुःखभयापहम् ॥४४॥
निरङ्गं स्थूलप्रकृतिसुपलाङ्गं विदुर्बुधाः ।
एतद्धि प्रायशो लोके दृश्यते द्विजसत्तम ! ॥”४५
पद्मपुराणस्य ।
“निरङ्गा निश्चिता धारा घ्राणे वह्निं वमत्यपि ।
श्रोणीवक्त्रमिदं ज्ञेयं पृथिव्यां नातिदुर्लभम् ॥४६॥
अङ्गं काकपदाकारं भूमिराघातनिःसहा ।
एष खड्गाधमस्त्याज्यो काकाङ्गो भूति-
मिच्छता ॥४७॥
यदा कपालमङ्गेषु दृश्यते स्पर्शतः खरम् ।
एतद्धि दुःखजनकं कपालाङ्गं बुधस्त्यजेत् ॥४८॥
तम्बीपत्रा वलाङ्गा या सुवर्णाङ्गासिपुत्रिका ।
पत्रवक्त्रकमाहुस्तं आयुर्व्वेदविदो जनाः ॥”
लौहार्णवेऽपि ।
“सुपर्णसन्निभा भूमिरङ्गं कालं प्रतीयते ।
तत् प्रवक्त्रं कालस्य सुपर्णमुपजायते ॥४९॥
तुवरीदलसङ्काशमङ्गं यस्मिन् प्रतीयते ।
तुवरीवक्त्रमाहुस्तं तत्क्षते शिरसो भ्रमः ॥
एष खड्गाधमस्त्याज्यो यदीच्छेज्जीवनं निजम् ॥
५० ॥
बिम्बीदलसमा भूमिरङ्गं बिम्बीफलोपमम् ॥
बिम्बीवक्त्रन्तु तद्विद्यात्तज्जलं तिक्तमुच्यते ।
पित्तश्लेष्मविकाराणां प्रशमाय प्रयुज्यते ॥५१॥
प्रियङ्गुसदृशन्त्वङ्गं भूमिश्च कपिलाकृतिः ।
फलवक्त्रमिदं प्रोक्तं घ्राणे धूम्रं वमत्यपि ॥५२॥
अङ्गं सर्षपपुष्पाभं भूमिश्चैव सितासिता ।
एतत् सर्षपवक्त्रं स्यात् घ्राणे वह्निं वमत्यपि ॥
अपि कुक्कलिका याति एतदत्यन्तकोमलम् ।
एतत्प्रसादात् क्षितिपः शत्रूणां साधयते महीम् ॥
५३ ॥
नीलीरससमा भूमिरङ्गं नीलीतरङ्गवत् ।
नीलीवक्त्रमिदं दृष्टं घ्राणे वह्निशिखां वमेत् ॥
एष खड्गवरो नृणामरिष्टभयनाशनः ॥५४॥
रक्ताक्तिसो महारेखा भूमिश्चैव सितासिता ॥
रक्ताङ्गमिति जानीयाद्वैरिपक्षविनाशनम् ।
घ्राणेन यस्तु रक्तां वा नीलां वा वमते शिखाम् ॥
रक्तस्पर्शनमात्रेण स्वयमेव निष्क्रामति ।
चतेऽस्य रक्तश्वयथुस्तृषा दाहश्च जायते ॥५५॥
अङ्गं वचादलसमं भूमिश्चैव सितासिता ।
वचावक्त्रमिदं ज्ञेयं तत्क्षताद्धिवनाशनम् ॥
एष खड्गवरो राज्ञा साधनीयः प्रयत्नतः ॥५६॥
रसोनादुत्तमं ह्यङ्गं भूमिस्तस्य दलोपमा ॥
रसोनवक्त्रं जानीयात् घ्राणे वह्निं वमत्यपि ।
अस्य धावनतोयेन आमवातविनाशनम् ॥५७॥
निरङ्गा निर्म्मला भूमिर्धारा तीक्ष्णा खरः खरः ।
सुभगावक्त्रमेतत् स्याद्भुवि नात्यन्तदुर्लभम् ॥५८॥
मञ्जिष्ठासदृशा दीर्घास्तन्वो रेखाः सुविस्तराः ।
जिह्वीवक्त्रमिदं नाम सर्व्वकामार्थसाधनम् ॥५९॥
अङ्गं शमीपत्रसमं भूमिर्धूम्रा सितासिता ।
शमीवक्त्रमिदं ज्ञेयं शत्रोरसुदावहम् ॥
घ्राणेषु वमते वह्निं सहते वह्निपीडनम् ॥६०॥
रोहितवल्कलसदृशमङ्गं भूमिः स्निताश्चिताश्चापि ।
धूम्रा गम्भीरस्वरयुक्तं धारा तीक्ष्णा सित
भवेद्र
रोहिताख्यमिदं वक्त्रं सर्व्वारिष्टविनाशन
वह्निसंस्पर्शमात्रेण किञ्चिच्चिमिचिमायते
इत्ययं दुर्लभः खड्गो देवानामपि कथ्यते
शफरीवल्कलाकारमङ्गं भूमिः सितासित
श्रोष्ठीवक्त्रमिदं प्रोक्तं न्यस्तं तरति वारि
एष खड्गोत्तमो राज्ञां विपक्षकुलनाश
कदाचिल्लभ्यते भाग्यैर्लभ्यते लभते मही
अङ्गं मारिषपत्राभं भूमिः स्याद्विषमच्छा
इत्ययं मारिषाङ्गः स्यात् पृथिव्यां नातिदु

भृङ्गराजस्य पुष्पाभमङ्गं भूमिर्द्युतिप्रभा ।
आघातं सहते नैव एष खड्गाधमो मतः
धारा तीक्ष्णा खुराकारा भूमिरङ्गविवर्
आघातं सहते घोरं घ्राणे वह्निं वमत्य
खुराङ्गमिति जानीयात् पृथिव्यां नातिदु
भम् ।
निर्म्मला समला भूमिर्भवेच्चैव कदा कदा
मन्दा तीव्रा भवेद्धारा तद्विद्धस्य लक्षण
नीलाञ्जनसमा भूमिरङ्गं जलतरङ्गवत् ।
मेघाङ्गमिति जानीयाच्छाये शीतं भवत्य
एष खड्गाधमस्त्याज्यो यदीच्छेद्भूतिमा
भर्त्तुः प्रतापं शमयेद्रविबिम्बं यथा घनः
मन्दा धारा भृशं गाढ़ा भूमिरङ्गविवर्ज
पर्व्वताङ्गमिदं नाम सर्व्वत्रैवोपलभ्यते ॥६
अङ्गं गुञ्जाफलसमं भूमिर्म्मीनदलोपमा ।
गुञ्जावक्त्रमिदं एष्ठं तप्तं भवति घर्षणे ।
घ्राणे सिन्दूरसङ्काशं रजो वमति चावश
एष खड्गवरो राज्ञा भाग्यादेवोपयुज्य
अस्य प्रभावात्तन्नास्ति यन्न साधयते नृप
अङ्गं तस्करराकारं भूमिश्चैव सितासित
धारा तीक्ष्णा वमति च घ्राणे वह्निसम
शि
शरवक्त्रमिदं ज्ञेयं राज्ञां वाञ्छितसिद्धये
दूर्व्वादलनिभा भूमिर्धारा तीक्ष्णा खरः
घ्राणेन वमते वह्निं दूर्व्वावक्त्रं सुदुर्लभम्
अङ्गं बिल्वदलाकारं भूमिश्चैव सिताशि
बिल्ववक्त्रमिदं घ्राणे नीलपीते वमेच्छ
एष खड्गवरः प्रोक्तः शत्रूणां कुलनाश
मरुवदलसङ्काशा भूमिरङ्गं मरुवत् ।
मरुवाङ्गमिदं घ्राणे रजो वमति चावल
शोणपुष्पनिभा रेखा दीर्घा भूमिः सितासि
शोणाङ्गमिति जानीयात् खड्गं परमदु
भम्

शटीदलसमा भूमिरङ्गं तत्कुसुमोपमम्
शटीवक्त्रमिदं प्रायो लभ्यते गुणवत्तरम्
मार्ज्जाररोमसदृशमङ्गं भूमिः सितेतरा
मार्ज्जाराङ्गमिदं नाम्ना रोगशोकभया
एष खड्गाधमस्त्याज्यो यदीच्छेद्भूतिमा

केतकीपत्रसदृशमङ्गं यस्मिन् प्रतीयते ।

विद्यात् कीलकवज्रं तत् धाराबन्धसमुद्भवम् ॥" ७७
लौहप्रदीपस्य ।
"अङ्गं मूर्व्वालतन्तुनिभं भूमिर्मूर्व्वादलच्छविः ।
घ्राणेन वमते शुक्लां शिखां मौर्व्वी भवेत्ततः ॥
मौर्व्वाङ्गमिदमत्युत्कृष्टं यशःश्रीविजयावहम् ॥७८॥
लिङ्गं तीक्ष्णं खरं गाढ़ं घ्राणे वह्निर्व्वमेत् कणम् ॥
छिनत्त्यन्यविधं लौहं वज्राङ्गमिति तद्वदेत् ॥७९॥
कलायपुष्पसदृशमङ्गं भूमिः सितासिता ।
कलायवज्रं जानीयात् तत्क्षते पाक दृश्यते ॥८०॥
अङ्गं चम्पकपुष्पाभं भूमिः कृष्णा तथा सिता ।
शिखां घ्राणे वमेच्छीतं तिक्तं तस्य जलं भवेत् ।
इदं चम्पकवज्रं स्यात् सर्व्वत्र विजयप्रदम् ॥८१॥
अङ्गं बलादलसमं भूमिः शुक्ला तथेतरा ।
बलावज्रमिदं ज्ञेयं नानाभावं भवेद्द्रुतम् ॥
इत्ययं वातरोगाणां नाशने परमौषधम् ॥८२॥
अङ्गं वटारोहसमं भूमिर्व्वटदलच्छविः ।
वटवज्रमिदं ज्ञेयं खरं खड्गाधमं बुधैः ।
एतस्य स्पर्शमात्रेण नरो मुच्येत सम्पदा ॥८३॥
वंशनीलीसमा भूमिः खरधारा सितासितिः ।
वंशाङ्गमिति जानीयाद्वंशवृद्धिकरं परम् ॥८४॥
भूमिः शालदलाकारा अङ्गं लघु सितासितम् ।
शालाङ्ग एष खड्गः स्यात् पूज्यः सर्व्वार्थदायकः ।
अयं घ्राणे वमेद्वह्निं धारा चाप्यथवा भवेत् ॥८५॥
भूमिः सितासिता वापि अङ्गं ज्येष्ठीसमं लघु ।
ज्येष्ठीवज्रमिदं निन्द्यं न स्पृश्यं वा हितेच्छुभिः ॥ ८६ ॥
पुराणजालसदृशमङ्गं भूमिः सितासिता ॥
जालवज्रमिदं पूज्यं प्रभुसम्पत्तिनाशनम् ।
यदि घ्राणे वमेन्नीलां शिखां वह्निं वमेच्च वा ॥
तदेष दुर्लभः खड्गो नान्यथा भयहेतुकः ॥८७॥
अङ्गं पिपीलिकाकारं भूमिर्धूम्रा तथासिता ॥
पिपीलिकाङ्ग इत्येष तत्क्षते कफसम्भवः ।
स्वयं यदि भवेद्धूम्रः घ्राणे पूज्यतमस्तदा ॥८८॥
नलपत्रसमा भूमिरङ्गन्तत्कुसुमोपमम् ।
नलाङ्गमिति जानीयाद्भर्त्तुः सर्व्वार्थसाधकः ॥ ८९ ॥
निरङ्गा निर्म्मला भूमिर्घृष्टं घृष्टं वमेज्जलः ।
दृढ़ा धारा भृशं स्थूला आघातं सहते न च ॥
रथोवज्रमिदं निन्द्यं शत्रूणां विजयावहम् ॥९०॥
कुष्माण्डबीजसदृशमङ्गं भूमिः सितासिता ॥
कुष्माण्डवज्रं जानीयात्तत्क्षते वेगनिग्रहः ॥९१॥
अङ्गं शरोमसदृशं भूमिर्धूम्रा सितासिता ।
रोमाङ्गमिति जानीयात्तत्क्षते पिड़कोद्गमः ॥९२॥
भूमिः कुन्दीदलसमा अङ्गं तत्कण्टकोपमम् ॥
धारा तीक्ष्णा रवस्तीक्ष्णो लघुमानं खरा स्पृशा ।
सधाङ्गः खड्ग इत्येष तत्क्षते दाहलड्भ्रमाः ॥
सुखाधिकव्रणाघाते दाहः पाकश्च जायते ।
अयं यदि च सर्पाणां पक्षादूपरि विघ्नते ॥
पक्षाविदारमाप्नोति सर्पो लोटयते शिरः ।
अस्य धारणतोयेन कुष्ठरोगविनाशनम् ॥९३॥
कर्कन्धुदलपृष्ठाभा भूमिरङ्गन्तु तत्समम् ।
कर्कन्धुवज्रं जानीयात्तत्क्षते दाहनाशनम् ॥
एष खड्गाधमस्त्याज्यो जेतव्या यदि विद्विषः ॥ ९४ ॥
रङ्गं बकुलपुष्पाभं भूमिस्तत्फलसन्निभा ॥
बकुलाङ्गमिदं पूज्यं घ्राणे सुरभिगन्धवत् ।
तन्नास्ति जगतीमध्ये यदनेन न साध्यते ॥९५॥
अङ्गं संमिश्रितं यस्मिन्न किञ्चिद्व्यक्तमीक्ष्यते ।
सर्व्वेषां दर्शनं वापि तीक्ष्णधारः खरस्वरः ॥
एष काञ्चिकवज्रः स्याद्यत्नादेवोपलभ्यते ।
नैनं प्राप्यापि वर्द्धन्ते श्रीयाश्चियाद्योऽपि च ॥ ९६ ॥
भूमिः कृष्णा निरङ्गा चेद्धारा तीक्ष्णा दृढ़ापि च ।
आघातं सहते घोरं रक्तं स्पर्शेन यो विघ्नेत् ॥
घ्राणेन वह्निं वमति ध्रुवं वाप्यतिघर्षणात् ।
महिषाङ्गः स वै खड्गः पृथिव्यां नातिदुर्लभः ॥ ९७ ॥
अत्यन्तनिर्म्मला भूमिः शरीरं प्रतिबिम्बितम् ।
धारा तीक्ष्णा खरस्तीक्ष्णः स्वच्छाङ्गं तद्विनिर्द्दिशेत् ॥९८॥
तस्मिन् यदा भवेद्रेखा ऊर्द्ध्वा नत्वाख्यकं तदा ॥९९
अस्मिन्नपि भवेद्वक्रा रेखा वक्राभिधन्तु तत् ॥१००॥
एतन्त्रितयमुद्दिष्टं खड्गानां प्रवरं बुधैः ।
प्रायशो लभ्यते लोके यदि सर्व्वगुणावहम् ॥
इतीदं निखिलं प्रोक्तं वज्राणां लक्षणं मया ।
प्रयत्नैर्लिखितं यत्नं सर्व्वेषां हितकाम्यया ॥
इतः परन्तु लौहानां लक्षणं यत्र लक्ष्यते ।
तस्य दासो भवाम्येष प्रतिज्ञेति कृता मया ॥
द्विलिङ्गमिश्रमालोक्य मिश्राङ्गमिति निर्द्दिशेत् ।
सर्व्वेषामङ्गमालोक्य सर्व्वाङ्गमिति निर्द्दिशेत् ॥"
इति खड्गपरीक्षायामङ्गाध्यायो द्वितीयः ॥*॥
खड्गस्य रूपाणि यथा,—
"नीलीकलायकुसुमच्छविपन्नगाभा
या चन्द्रनीलमणिकाचमणिप्रभा च ।
भूमिश्च या मरकतप्रतिमावभासा
खड्गस्य नीलमिति रूपमिदं वदन्ति ॥
तत्र चेन्निन्दितान्यङ्गान्यरिष्टानि बहून्यपि ।
दृश्यन्ते बहुदोषापि तथापि गुणवत्तरम् ॥१॥
या कालकाम्बुदमसीरसकालसर्प-
शृङ्गान्धकारकचभारसमा विभाति ।
भूमिश्च या भ्रमरबन्धुसमावभासा
खड्गस्य कृष्णमिति रूपमिदं वदन्ति ॥
अत्र नेत्राणि सम्पत्तेः अरिष्टान्यशुभानि च ।
साधारणमिदं रूपं प्राह नागार्ज्जुनो मुनिः ॥२॥
या प्रावृषेण्यनवभेकसमानवर्णा
गोमेदरत्नसदृशापि च यस्य भूमिः ।
खड्गस्य पिङ्गमिति रूपमिदं वदन्ति
भर्त्तुर्यशोबलधनक्षयकारणाय ॥३॥
या मन्दधूमसदृशा च शिरीषपुष्प-
तुल्या विभाति मलिनापि च खड्गभूमिः ।
नागार्ज्जुनो वदति धूम्रमिदं हि रूपं
भर्त्तुर्यशोबलधनादिविवर्द्धनाय ॥४॥
द्विरूपं मिश्रितं ज्ञात्वा शङ्करं प्रवदेद्बुधः ।
त्रिभी रूपैः समेतन्तु खड्गं त्रिपुरसञ्ज्ञितम् ॥
रूपैश्चतुर्भिः संयुक्तं चतुरं खड्गमुत्तमम् ॥"
इति लौहार्णवस्य खड्गपरीक्षायां वर्णाध्यायस्तृतीयः ॥ * ॥
"जातिश्चतुर्व्विधा प्रोक्ता खड्गानां या पुरा मया ।
सम्प्रत्यपि प्रयत्नेन तासां लक्षणमुच्यते ॥
शुद्धाङ्गः शुद्धवर्णश्च सुनेत्रः सुस्वरश्च यः ।
मृदुस्पर्शः सुसन्धेयस्तीक्ष्णधारो महागुणः ॥
खड्गं ब्राह्मणजातिं तं प्राह नागार्ज्जुनो मुनिः ।
अस्य क्षते भवेच्छोथो घोरः सर्व्वाङ्गगोचरः ॥
मूर्च्छा पिपासा दाहश्च ज्वरो मृत्युश्च जायते ।
अंहष्टं भिषजाकाव्यमद्वैरात्रिभिर्बोधितम् ।
मलिनत्वं न सम्यत्ते निर्म्मलं कुरुते परम् ।
तरुणादित्यकिरणस्पर्शादिव हृषी स्थितः ॥
दहेत् सर्व्वं न तु करं पुरुषस्य हि धारिणः ।
नायकुम्भारमात्रेण खरतां व्रजति स्फुटम् ॥
एष खड्गवरः सर्व्वमरिष्टं नाशयेद्ध्रुवम् ।
अस्य प्रसादात् पुरुषस्त्रिलोकमपि साधयेत् ॥
तस्मादेव मनुष्याणां सुलभो न हि भूतले ।
दृश्यन्ते प्रायशः स्वर्गे कुशद्वीपे हिमालये ॥१॥
धन्यवर्णं महासारं तीक्ष्णधारं खरस्वरम् ।
सर्व्वाघातसहं सर्व्वनेत्रवर्णस्वराकरम् ॥
खड्गं क्षत्रियजातिं तं जानीयात् खड्गकोविदः ।
अस्य क्षते भवेद्दाहस्तृषानाशो ज्वरो भ्रमः ॥
मृत्युश्च जायते घ्राणे वमेद्वह्निकणान् बहून् ।
संस्कारे चाप्यसंस्कारे नैर्म्मल्यं तस्य लक्ष्यते ॥
घ्राणेऽप्यघ्राणे खरता महि चात्यन्ततीक्ष्णता ।
रक्तघर्षणमात्रेण विघ्नेदन्तरमन्तरम् ॥
अयं खड्गवरः पूज्यो मनुष्यैरपि लभ्यते ॥२॥
नीलवर्णः कृष्णवर्णः संस्कारे निर्म्मलो भवेत् ॥
घ्राणेन खरता चास्य घाततुल्यं निगच्छति ।
वैश्यजातिरयं खड्गः क्षते त्वङ्मात्रदर्शनम् ॥
नात्युत्कृष्टो नातिहीनः सर्व्वत्रैवोपलभ्यते ॥३॥
जलजाम्भोदसङ्काशः स्थूलधारो मृदुस्वरः ॥
संस्कारे चैव मलिनः घ्राणे चापि खरेतरः ।
शूद्रजातिरयं खड्गः क्षते नास्यापि वेदना ॥
दूरादेषोऽधमस्त्याज्यो यदीच्छेद्धितमात्मनः ।
प्रायशः सर्व्वलोकेषु स्वयमेवोपदृश्यते ॥४॥
द्वयोर्लक्षणमालोक्य जारजं खड्गमादिशेत् ।
त्रयाणां लक्षणेनैव त्रिजातिं खड्गमादिशेत् ।
चतुर्णां लक्षणेनैव जातिसङ्करमुच्यते ॥"
इति लौहार्णवस्य खड्गपरीक्षायां जात्यध्यायः ॥ * ॥
अथ त्रिंशन्नेत्राणां लक्षणानि ।
"चक्राकारं यदा नेत्रं खड्गस्याङ्गे प्रदृश्यते ।
तं चक्रनेत्रं जानीयात् भर्त्तुः सर्व्वार्थसाधनम् ॥
अनेनैकेन खड्गेन कृत्स्नां साधयते महीम् ॥१॥
प्रफुल्लपद्मसङ्काशं नेत्रं पद्मदलोपमम् ॥
यदि वा दृश्यते खड्गे पद्मनेत्रं समादिशेत् ।
अयं खड्गवरो यत्र तत्रैव कमलालया ॥२॥
ऊर्द्ध्वं स्थूला यदा रेखा गदाकारा प्रतीयते ।
गदानेत्रमिदं विद्धि सर्व्वशत्रुनिषूदनम् ॥३॥
शूलाकारं यदा नेत्रं खड्गमध्येऽभिदृश्यते !

शुक्लनेत्रमिदं सर्व्वदेवानामपि दुर्लभम् ॥४॥
डमरुप्रतिमं नेत्रं यस्य भूमौ प्रतीयते ।
सर्व्वार्थसाधकं खड्गं तं विद्याद्विजयप्रदम् ॥५॥
धनुःस्वरूपं यन्नेत्रं धनुर्नेत्रमुशन्ति तम् ।
तस्य स्पर्शनमात्रेण मन्दोऽपि प्रसुखायते ॥
अयं निशीथे विजने खड्गो भानभानायते ॥६॥
यन्नेत्रमङ्कुशाकारं तंविद्याद्गुणवत्तरम् ॥
खड्गमङ्कुशनेत्राख्यं भर्त्तुः सर्व्वार्थसाधकम् ।
अलक्ष्मीपापरक्षोघ्नं सत्याग्रहनिवारणम ॥७॥
छत्राकारं यदा नेत्रं छत्रनेत्रं वदन्ति तम् ।
अस्य प्रभावात् क्षीणोऽपि सार्व्वभौमो भवेन्नृपः॥
दीनोऽपि च सुखी भूयात् सुखी भूयान्महेश्वरः ।
महेश्वरोऽपि सचिवः सचिवो मण्डलेश्वरः ॥
मण्डलेशश्चक्रवर्त्ती भवेदत्र न संशयः ॥८॥
पताकाकृतिनेत्रञ्चेत् सर्व्वसम्पत्तिकारकम् ॥
पताकानेत्रमाहुस्तं संग्रामे विजयप्रदम् ॥९॥
नेत्रं वीणाकृति यदा वीणानेत्रमुशन्ति तम् ।
निशीथे विजने खड्गो वीणावत् स्वनमावहेत् ।
अस्य प्रभावात् सर्व्वेशा अपि वश्या भवन्ति
हि ॥१०॥
मत्स्याकृति यदा नेत्रं मत्स्यनेत्रमिमं विदुः ।
अस्य प्रभावात् क्षितिपः कृत्स्नां साधयते
महीम् ॥११॥
शिवलिङ्गसमं नेत्रं लिङ्गनेत्रमिमं विदुः ।
भर्त्तुः सर्व्वार्थसंसिद्ध्यै शत्रूणां नाशनाय च ॥
वामपार्श्वे तु यात्रायां धर्त्तव्योऽयं तथा रणे॥१२।
अत्र ध्वजाङ्कचक्रकलसानां लक्षणानि पतितानि । १३ । १४ । १५ ।
शूलाकृति यदा नेत्रं शूलनेत्रं वदन्ति तम् ।
सर्व्वार्थसाधकः सर्व्वारिष्टानिष्टप्रणाशनः ॥१६॥
शार्दूलनेत्रं तं विद्यात् शार्दूलाकृतिनेत्रतः ।
शत्रुश्रेणीविनाशाय संग्रामे विजयाय च ॥१७॥
सिंहाकृति यदा नेत्रं सिंहनेत्रमिमं विदुः ।
अस्य प्रभावात् क्षीणोऽपि कृत्स्नां साधयते
महीम् ॥१८॥
तत् सिंहासननेत्रं स्यात् नेत्रे सिंहासनोपमे ।
अस्य प्रभावात् क्षितिपः कृत्स्नां साधयते
महीम् ॥१९॥
गजाकृति यदा नेत्रं गजनेत्रं वदन्ति तम् ॥
अस्य प्रभावात् क्षीणोऽपि लभते राजसम्पदम् ॥
२० ॥
नेत्रं हंसाकृति यदा हंसनेत्रं वदन्ति तम् ।
अस्य प्रभावात् भूपालो यशः प्राप्नोत्यनुत्तमम् ॥
२१ ॥
मयूराकृतिनेत्रं हे तन्नेत्रमिति निर्द्दिशेत् ॥
अस्य प्रभावान्मनुजः सर्पदर्पान्निकृन्तयेत् ॥२२॥
जिह्वाकारं यदा नेत्रं जिह्वानेत्रं वदन्ति च ॥
संग्रामखर्परेष्वेवं पिबेद्वैरिशिरोरजः ॥२३॥
दन्ताकारं यदा नेत्रं दन्तनेत्रं वदन्ति तम् ॥
अयं रिपुगणं मूर्च्छ्य चर्व्वयत्यतिभैरवम् ॥२४॥
खड्गाकारं यदा नेत्रं खड्गनेत्रं वदन्ति तम् ।
तस्य प्रभावान्मनुजस्त्रिलोकीं वशयेदपि ॥२५॥

मनुष्यपुत्रिकाकारा पुत्रिकानेत्रमुच्यते ॥
अयं सशैला सद्वीपां कृत्स्नां साधयेत् क्षितिम् ।
न चेयं पुत्रिका किन्तु जयलक्ष्मीरिह स्वयम् ॥
तस्मान्नायं मनुष्याणामल्पभाग्येन लभ्यते ॥२६॥
चामराकृतिनेत्रत्वात्तन्नेत्रमिति निर्द्दिशेत् ।
अस्य प्रभावाज्जायन्ते चामरीकृतसम्पदः ॥२७॥
एकानेकशिखे शैलनेत्रे तन्नेत्रसंज्ञकम् ।
अपि राष्ट्रभये युद्धे विषमे वैरिसङ्कटे ।
स्थिरीकरोति धरणीं धरणीं पर्व्वतो यथा ॥२८॥
पुष्पमालासमं नेत्रं पुष्पनेत्रं वदन्ति तम् ।
अस्य प्रभावात्तुष्यन्ति ग्रहाः सर्व्वाश्च देवताः ।
२९ ।
भुजङ्गमसमे नेत्रे सर्पनेत्रमिदं मतम् ।
अयं शत्रुगणं हन्ति यथा मन्त्रैर्भुजङ्गमः॥३०॥
सवर्णं समवर्णञ्च तत् सर्व्वं द्विविधं भवेत् ।
सवर्णं शान्तिसम्पत्त्यै रिपुनाशे तथापरम् ॥
द्वयोरेकत्र पृष्ठे च तत् पुनर्विविधं भवेत् ।
एकलोकसुखं नेदं ददाति द्विविधं द्वयोः ॥
मूलमध्याग्रसंस्थानात्तत् पुनस्त्रिविधं भवेत् ।
अग्रे चाग्रफलं श्रेयं मध्ये मध्यफलं मतम् ॥
मूले फलं जघन्यं स्यात् प्राह नागार्ज्जुनो मुनिः ।
एकं द्वे त्रीणि नेत्राणि नात्र संख्या व्यतिक्रमः ॥
एकं धर्म्मः स्वर्गकामौ द्वे त्रीणि च त्रिवर्गकम् ।
तत्फलानि प्रयच्छन्ति प्राह नागार्ज्जुनो मुनिः ॥
द्विनेत्रमिति जानीयात् स्वसंज्ञां नेत्रयोर्द्वयोः ।
त्रिनेत्रञ्च त्रिभिर्ज्ञेयं बहुनेत्रमतः परम् ॥
यथोत्तरं गुणवहं खड्गमाहुरनुत्तमम् ।
दिङ्मात्रमिति निर्द्दिष्टं नेत्राणां शुभदायिनाम्॥
तीव्राणां मङ्गलानाञ्च दर्शनञ्च शुभावहम् ॥”
इति खड्गपरीक्षायां नेत्राध्यायः पञ्चमः ॥*॥
“यथा नेत्रस्य संस्थानं तथारिष्टस्य लक्षयेत् ।
नेत्रेषु स्थाननियमो नारिष्टे स्थाननिर्णयः ॥
प्रशस्ताङ्गोऽपि यः खड्गोऽरिष्टेनैकेन
निन्दितः ॥”
अथ त्रिंशदरिष्टानां लक्षणानि ॥
“छिद्रवद्दृश्यते खड्गे स्वभावेन च लक्ष्यते ।
छिद्रारिष्टमिदं विद्धि भर्त्तुर्व्वीर्य्यबलापहम् ॥१॥
यदा काकपदाकारमरिष्टं दृश्यते क्वचित् ।
अयं काकपदारिष्टः सर्व्वाभीष्टविनाशनः ॥२॥
रेखाकारं यदारिष्टमूर्द्धं वा तिर्य्यगेव वा ।
रेखारिष्टमिदं विद्धि भर्त्तुर्वीर्य्यबलापहम् ॥३॥
भिन्नभ्रान्तिकरं पापं भिन्नारिष्टमिदं विदुः ।
भर्त्तुः कुलं यशो राष्ट्रं नाहत्वा न व्रजेत्
स्वयम् ॥४॥
यदा भेकशिरोरूपमरिष्टं दृश्यते क्वचित् ।
भेकारिष्टमिदं नाम्ना संग्रामे भयदायकम् ५ ॥
अरिष्टे मूषिकाकारे मूषिकारिष्टमुच्यते ।
अयं खड्गाधमः कुर्य्यात् प्रभुः पातालसङ्गमम् ॥६॥
बिडालनयनाकारो बिन्दुरेकोऽतिविस्तरः ।
बिडालारिष्टमेतत् स्यात् भर्त्तुः सर्व्वार्थनाशनम् ॥७॥

अरिष्टं शर्कराकारं यदा स्पर्शेन बुध्यते ।
शर्करारिष्टमेतत् स्यान्नगरुद्धिविनाशनम् ॥८।
यदा नीलीरसाभासमरिष्टं दृश्यते क्वचित् ।
नील्यरिष्टमिदं श्रेयं यशोलक्ष्मीविनाशनम् ॥९॥
अरिष्टे मशकाकारे मशकारिष्टमुच्यते ।
भर्त्तुः कुलं यशो बुद्धिं धृतिं प्रीतिञ्च नाशयेत्।
१०।
भृङ्गमाप्रतिमो बिन्दुरेकोऽनेकोऽथवा यदा ।
भृङ्गमारिष्ट इत्येष धृतिस्मृतिविनाशनः ॥११॥
कृपीरूपमरिष्टञ्चेदूर्द्धं वा तिर्य्यगेव वा ।
कृप्यरिष्टमिदं नाम भर्त्तुः कुलविनाशनम् ॥१२॥
अयञ्चेद्विन्दवो राजन् ! पङ्क्तयो विषमेण वा ।
उपर्य्युपरि चाधोऽधश्चिन्हास्त्रमरिष्टकम् ।
तस्य स्पर्शनमात्रेण सचेलः स्नानमाचरेत् ॥१३॥
कालिकारिष्टमित्येतद् धीधृतिस्मृतिनाशनम् ।
१४ ।
एकत्र यदि न स्थेय प्रयत्नेनापि संहृतः ।
दारी नाम महारिष्टं सर्व्वाभीष्टविनाशनम् ।
अनेकगुणसम्पन्नः खड्गो लोकैर्न पूज्यते ॥१५॥
कपोतपक्षप्रतिममरिष्टञ्चेत्तदाप्ययम् ।
भर्त्तुः कुलं यशो विद्यां बलं बुद्धिञ्च नाशयेत् ॥१६॥
काकाकृति यदारिष्टं काकारिष्टं तदोच्यते ।
अनेन भर्त्तुः संग्रामे भङ्ग एवोपजायते ॥१७॥
अरिष्टे खर्पराकारे खर्परारिष्टमुच्यते ।
भर्त्तुर्यशो बलं वीर्य्यं बुद्धिं प्रीतिञ्च नाशयेत् ॥१८॥
यदान्यस्तोकशकलं लग्नं स्यादिव लक्ष्यते ।
शकलीति स वै खड्गः सर्व्वाभीष्टनिकृन्तनः ॥१९॥
क्रोडीकृशपचकयोर्लक्षणे पतिते २० । २१ ।
यस्मिन्निन्नमिवाभाति मध्ये वा दृश्यते क्वचित् ।
जालारिष्टमिदं नाम भर्त्तुः कुलधनापहम् ॥२२॥
एकैकरेखा दीर्घाग्रा यदा पङ्क्तिनी भवेत् ।
स्पर्शे वाथ करेणाथ करालारिष्टमुच्यते ।
अयं हि क्षितिपालानां दृष्टियोग्यो भवेन्न हि ।
दर्शनादेव नश्यन्ति यशोलक्ष्मीजयादयः ॥२३॥
अरिष्टे कङ्कपक्षाभे कङ्कारिष्टं तदुच्यते ।
अस्य स्पर्शनमात्रेण नश्यत्यायुर्यशो बलम् ॥२४॥
खर्ज्जूरदलप्रतिमं यदारिष्टन्तु लक्ष्यते ।
खर्ज्जूरारिष्टमेतत् स्याद्भर्त्तुः कुलधनापहम् ॥२५॥
गोश्रृङ्गाभमरिष्टञ्चेत् श्रृङ्गारिष्टं तदुच्यते ।
अनेन भर्त्तुर्नश्यन्ति लक्ष्मीबलकुलादयः ॥२६॥
गोपुच्छाकृति चेत् खड्गे अरिष्टं संप्रतीयते ।
पुच्छारिष्टमिदं नाम भर्त्तुः सर्व्वार्थनाशनम् ॥२७॥
खनित्राभमरिष्टञ्चेत् खनित्रारिष्टमुच्यते ।
शूराणामपि संग्रामे भङ्गमेतत् प्रयच्छति ॥२८॥
अरिष्टे लाङ्गलाकारे लाङ्गलारिष्टमुच्यते ।
अयं पापात् पापतरः प्रेक्षणीयो न भूभुजा ।
अयमायुः श्रियं हन्ति विद्यां बलमशेषतः ॥२९॥
वडिशारिष्टस्य लक्षणं पतितम् ॥३०॥
इत्यरिष्टानि प्रोक्तानि नानातन्त्रात् प्रयत्नतः ।
विचार्य्यैतानि मतिमान् खड्गं कोषे निधापयेत् ।
दिङ्मात्रमिदमुद्दिष्टमरिष्टानां हितावहम् ।
अमङ्गलानां मन्दानां दर्शनञ्चाशुभावहम् ।

अकृतज्ञाश्च मित्राणां ते वै निरयगामिनः ॥
पाषण्डा दूषकाश्चैव समयानाञ्च दूषकाः ।
ये प्रत्यवस्थिताश्चैव ते वै निरयगामिनः ॥
वृत्तिच्छेदं गृहच्छेदं दारच्छेदञ्च पार्थिव ! ।
मित्रच्छेदं तथाशायाः कृत्वा नरकगामिनः ॥
विषमव्यवहाराश्च विषमाश्चैव वृत्तिषु ।
लाभेषु विषमाश्चैव नरा निरयगामिनः ॥
कृताशं कृतनिर्व्वेशं कृतभक्तं कृतश्रमम् ।
भेदैर्य्ये व्यवकर्षन्ति ते वै निरयगामिनः ॥
द्यूतसंव्यवहाराश्च निष्परीक्षाश्च मानवाः ।
प्राणिहिंसाप्रवृत्ताश्च ते वै निरयगामिनः ॥
वेदविक्रयिणश्चैव वेदानाश्चैव दूषकाः ।
वेदानां लेखकाश्चैव ते वै निरयगामिनः ॥
केशविक्रायका राजन् ! विषविक्रायकाश्च ये ।
क्षीरविक्रायकाश्चैव ते वै निरयगामिनः ॥
चातुराश्रम्यबाह्याश्च श्रुतिबाह्याश्च ये नराः ।
विकर्म्मभिश्च जीवन्ति ते वै निरयगामिनः ॥
ब्राह्मणानां गवाश्चैव कन्यानाञ्च महामते ! ।
येऽन्तरं यान्ति कार्य्येषु ते वै निरयगामिनः ॥
शास्त्रविक्रायकाश्चैव कर्त्तारश्च महीपते ! ।
शल्यानां धनुषाश्चैव ते वै निरयगामिनः ॥
शिलाभिः शङ्कुभिर्व्वापि श्वभ्रैर्व्वा मनुजर्षभ ! ।
ये मार्गमनुरुन्धन्ति ते वै निरयगामिनः ॥
अगोप्तारश्च राजानो बलिषड्भागतस्कराः ।
समर्थाश्चाप्यदातारस्ते वै निरयगामिनः ॥
शान्तान् दान्तानथ प्राज्ञान् दीर्घकालसहोषितान् ।
त्यजन्ति कृतकृत्या ये ते वै निरयगामिनः ॥
बालानामथ वृद्धानां दासानाश्चैव ये नराः ।
अदत्त्वा भक्षयन्त्यग्रे ते वै निरयगामिनः ॥
इत्येतत् कथितं राजन् ! धर्म्माधर्म्मविनिर्णयम् ।
विमृश्य पुरुषः कर्म्म धर्म्ममेव समाचरेत् ॥”

इति पाद्मे स्वर्गखण्डे ३४ अध्यायः ॥

नरकविशेषगामिपापिनो यथा,—
“कूटसाक्षी तथा सम्यक् पक्षपातेन यो वदेत् ।
यश्चान्यदनृतं वक्ति स नरो याति रौरवम् ॥
भ्रूणहा पुरहन्ता च गोघ्नश्च मुनिसत्तम ! ।
यान्ति ते नरके रोधे यश्चोच्छ्वासनिरोधकः ॥
सुरापो ब्रह्महा हर्त्ता सुवर्णस्य च शूकरे ।
प्रयाति नरके यश्च तैः संसर्गमुपैति वै ॥
राजन्यवैश्यहा ताले तथैव गुरुतल्पगः ।
तप्तकुम्भे स्वसृगामी हन्ति राजभटांश्च यः ॥
साध्वीविक्रयकृद्बन्धपालः केशरिविक्रयी ।
तप्तलौहे तु पच्यन्ते यश्च भक्तं परित्यजेत् ॥
‘केशरी अश्वः ।’
स्नुषां सुताश्चापि गत्वा महाज्वाले निपात्यते ।
अवमन्ता गुरूणां यो यश्चाक्रोष्टा नराधमः ॥
वेददूषयिता यश्च वेदविक्रायकश्च यः ।
अगम्यागामी यश्च स्यात्ते यान्ति लवणं द्विज ! ॥
चौरो विमोहे पतति मर्य्यादादूषकस्तथा ।
देवद्विजपितृद्वेष्टा रत्नदूषयिता च यः ॥
स याति कृमिभक्षे वै कृमीशे च दुरिष्टकृत् ॥
पितृदेवातिथीन् यस्तु पर्य्यश्नाति नराधमः ।
लालाभक्षे स यात्युग्रे शरकर्त्ता च रोधके ॥”
‘पर्य्यश्नाति परित्यज्य आदौ भुङ्क्ते ।’
करोति कर्णिनो यस्तु यस्तु खड्गादिकृन्नरः ॥
प्रयान्ति ते विशसने नरके भृशदारुणे ।
असत्प्रतिग्रहीतारो नरके यान्त्यधोमुखे ॥
अयाज्ययाजकस्तत्र तथा नक्षत्रसूचकः ।
वेगी पूयवहश्चैको याति मिष्टान्नभुङ्नरः ॥
‘वेगी साहसकारी । पुत्रादीन् वर्ज्जयित्वा एक एव मिष्टान्नभुक् ।’
लाक्षामांसरसानाञ्च तिलानां लवणस्य च ।
विक्रेता ब्राह्मणो याति तमेव नरकं द्विज ! ॥
मार्ज्जारकुक्कुटच्छागान् श्ववराहविहङ्गमान् ।
पालयन्नरकं याति तमेव द्विजसत्तम ! ॥
रङ्गोपजीवी कैवर्त्तः कुण्डाशी गरदस्तथा ।
सूची माहिषकश्चैव पर्व्वकारी च यो द्विजः ॥
‘पत्यौ जीवति जाराज्जातः कुण्डः तदन्नभोजी माहिषो महिषोपजीवी । यद्वा,—
महिषीत्युच्यते भार्य्या भगेनोपार्ज्जितं धनम् ।
उपजीवति यस्तस्याः स वै माहिषकः स्मृतः ॥

इति स्मृतिः ॥

पर्व्वकारी धनादिलोभेनापर्व्वसु अमावास्यादिक्रियाप्रवर्त्तकः ।’
अगारदाही मित्रघ्नः शाकुनिर्ग्रामयाजकः ।
रुधिरान्धे पतन्त्येते सोमं विक्रीणते च ये ॥
मधुहा ग्रामहन्ता च याति वैतरणीं नरः ।
रेतःपानादिकर्त्तारो मर्य्यादाभेदिनश्च ये ॥
ते कृष्णा यान्त्यशौचाश्च कुहकाजीविनश्च ये ।
असिपत्रवनं याति वनच्छेदी वृथैव यः ॥
औरभ्रिको मृगव्याधो वह्निज्वाले पतन्ति वै ।
यान्त्येते द्विज ! तत्रैव यश्चापाकेषु वह्निदः ॥
व्रतेषु लोपको यश्च स्वाश्रमाद्विच्युतश्च यः ।
सन्दंशयातनामध्ये पततस्तावुभावपि ॥
दिवास्वप्नेषु स्कन्दन्ति ये नरा ब्रह्मचारिणः ।
पुत्रैरध्यापिता ये च ते पतन्ति श्वभोजने ॥
एते चान्ये च नरकाः शतशोऽथ सहस्रशः ।
येषु दुष्कृतकर्म्माणः पच्यन्ते यातनागताः ॥
तथैव पापान्येतानि तथान्यानि सहस्रशः ।
भुज्यन्ते यानि पुरुषैर्नरकान्तरगोचरैः ॥
वर्णाश्रमविरुद्धञ्च कर्म्म कुर्व्वन्ति ये नराः ।
कर्म्मणा मनसा वाचा निरयेषु पतन्ति वै ॥
अधःशिरोभिर्दृश्यन्ते नारकैर्दिवि देवताः ।
देवाश्चाधोमुखान् सर्व्वानधःपश्यन्ति नारकान् ॥
स्थावराः कृमयोऽब्जाश्च पक्षिणः पशवो नराः ।
धार्म्मिकास्त्रिदशास्तद्वन्मोक्षिणश्च यथाक्रमम् ॥
सहस्रभागाः प्रथमा द्वितीयानुक्रमास्तथा ।
सर्व्वे ह्येते महाभाग ! यावन्मुक्तिसमाश्रयाः ॥
यावन्तो जन्तवः स्वर्गे तावन्तो नरकौकसः ।
पापकृद्याति नरकं प्रायश्चित्तपराङ्मुखः ॥”

इति विष्णुपुराणे । २ । ६ । ७—३२ ॥

अपि च ।
“कथयामि विचित्राणां कर्म्मणां विविधा गतीः ।
ताः शृणुष्व महाराज ! याः श्रुत्वा मोक्षमावात्
परवित्तं परापत्यं कलत्रं पारकञ्च यः ।
हरते बुद्धिमोहेन सोऽन्ते मृत्युवशं गतः ॥
कालपाशेन संबद्धो यमदूतैर्म्महाबलैः ।
तामिस्रे पात्यते तावत् यावद्वर्षसहस्रकम् ।
तत्र ताडनसम्भूताः कुर्व्वन्ति यमकिङ्कराः ।
पापभोगेन सम्पन्नस्ततो योनिषु शौकरीम् ।
तत्र भुक्त्वा महादुःखं मानुषत्वं गमिष्यति ।
रोगादिचिह्नितं तत्र दुर्यशोज्ञापकं स्वकम् ।
भूतद्रोहं विधायैवं केवलं सकुटुम्बकम् ।
पुष्णाति पापनिरतः सोऽन्धतामिस्रके पतेत् ।
ये नरा इह जन्तूनां वधं कुर्व्वन्ति वै मृषा ।
ते रौरवे निपात्यन्ते खाद्यन्ते रुरुभिर्यतः ॥
यः स्वोदरार्थं भूतानां वधमाचरति स्फुटम् ।
महारौरवसंज्ञे तु पात्यते स यमाज्ञया ॥
यो वै निजन्तु जनकं ब्राह्मणं द्वेष्टि पापकृत् ।
कालसूत्रे महादुष्टे योजनायतविस्तृते ॥
यावन्ति पशुरोमाणि गवां द्वेषं करोति यः ।
तावद्वर्षसहस्राणि पच्यते यमकिङ्करैः ॥
यो भूमौ भूपतिर्भूत्वा दण्डायोग्यन्तु दण्डयेत् ।
करोति ब्राह्मणस्यापि देहदण्डं विलोलुपः ।
स शूकरमुखैर्दुष्टैः पीड्यते यमकिङ्करैः ॥
पश्चाद्दुष्टासु योनीषु जायते पापभुक्तये ।
ब्राह्मणानां गवां ये तु द्रव्यं वित्तं तथाल्पकम्
वृत्तिं वा गृह्णते मोहाल्लम्पन्ति स्वबलान्नराः ।
ते परश्चान्धकूपे च पात्यन्ते च महाहिताः ।
योऽर्थं स्वयमुपाहृत्य मधुरश्नाति लोलुपः ।
न देवाय न सुहृदे ददाति रसनातुरः ॥
स पतत्येव नरके कृमिभोजनसंज्ञके ।
अनापदि नरो यस्तु हिरण्यादीनपाहरेत् ।
ब्रह्मस्वं वा महादुष्टः स दंशे नरके पचेत् ।
यः स्वदेहं प्रपुष्णाति नान्यं जानाति मूढधीः
मनसा कल्पितं द्रव्यं विदुषे यो ददाति न ।
स पुमान्नरकं याति यावदिन्द्राश्चतुर्दश ॥
पश्चाद्दुष्टासु योनीषु जायते वर्णसङ्करः ।
दानानि वाड़वे दत्त्वा पुनः शुद्धो भविष्यति ।
वाचा दत्तं मनोदत्तमिति साहं वदेद्यदि ।
कम्पन्ते पितरस्तस्य नरकाय समुत्सुकाः ।
वाचा दत्तं मनोदत्तं दत्तं पाणिकुशोदकम् ।
एतद्दत्तमदत्तं स्यात् जिह्वासत्पाटयेद्यमः ।
स पात्यते तैलतप्ते कुम्भीपाकेऽतिदारुणे ।
यो नगम्यां स्त्रियं मोहाद्योषिन्नावाञ्च कामयेत्
तं तदा किङ्कराः शूर्म्यां परिवध्य कुर्व्वते ।
ये बलादेवमर्य्यादां लुम्पन्ति स्वबलोद्धताः ।
ते वैतरण्यां पतिता मांसशोणितभक्षकाः ॥
वृषलीं यः स्त्रियं कृत्वा तया गार्हस्थ्यमाचरे
पूयोदे निपतत्येव महादुःखसमन्वितः ॥
ये दम्भामाश्रयन्ते वै धूर्त्ता लोकस्य वञ्चने ।
वैशसे नरके मूढाः पतन्ति यमताडिताः ।
ये सवर्णां स्त्रियं मूढाः पाययन्ति स्वरेतसम्

रेत:कुल्यासु ते पात्या रेत:पानेषु तत्पराः ॥
ये चौरा वह्निना दुष्टा गरदा ग्रामलुण्ठकाः ।
सारमेयादने ते वै पात्यन्ते पातकान्विताः ॥
कूटसाक्ष्यं वदत्यद्धा पुरुषः पापसम्भृतः ।
पारकीयन्तु द्रव्यं यो रक्षति प्रसभं बली ॥
स वीचिनरके पापि ह्यवाग्वक्त्रः पतत्यधः ।
तत्र दुःखं महद्भुक्त्वा पापिष्ठो योनिमाव्रजेत् ॥
यो नरो रसनास्वादात् सुरां पिबति मूढधीः ।
तम्पाययति लोहस्य रसं धर्म्मस्य किङ्कराः ॥
यो गुरूनवमन्येत स्वविद्याचारदर्पितः ।
स मृतः पात्यते चारसंज्ञकेऽधोमुखः पुमान् ॥
विश्वासघातं कुर्व्वन्ति ये नरा धर्म्मनिष्कृताः ।
शूलप्रोते तु नरके पात्यन्ते बहुयातनाः ॥
यैर्न श्रुता रामकथा न परोपकृतिः कृता ।
तेषां सर्व्वाणि दुःखानि भवन्ति नरकान्तरे ॥
अत्र यस्य सुखं भूयस्तस्य स्वर्ग इतीर्य्यते ।
ये दुःखिनो रोगयुता नरकादागतास्तु ते ॥”

इति पाद्मे पातालखण्डे ४८ अध्यायः ॥

(अथ महारौरवादिनरकाख्यानम् । यथा, मार्कण्डेये । १२ । ३-३६ ।

पुत्त्र उवाच ।

“रौरवस्ते समाख्यातः प्रथमं नरको मया ।
महारौरवसंज्ञन्तु शृणुष्व नरकं पितः ! ॥
योजनानां सहस्राणि सप्त पञ्च समन्ततः ।
तत्र ताम्रमयी भूमिरधस्तस्य हुताशनः ॥
तत्तापतप्ता सर्व्वाशा प्रोद्यदिन्दुसमप्रभा ।
विभात्यति महारौद्रा दर्शनस्पर्शनादिषु ॥
तस्यां बद्धः कराभ्याञ्च पद्भ्याञ्चैव यमानुगैः ।
मुच्यते पापकृन्मध्ये लुठमानः स गच्छति ॥
काकैर्व्वकैर्वृकोलूकैर्वृश्चिकैर्म्मशकैस्तथा ।
भक्ष्यमाणस्तथा गृध्रैर्द्रुतं मार्गे विकृष्यते ॥
दह्यमानः पितर्मातर्भ्रातस्तातेति चाकुलः ।
वदत्यसकृदुद्विग्नो न शान्तिमधिगच्छति ॥
एवं तस्मान्नरैर्मोक्षो ह्यतिक्रान्तैरवाप्यते ।
वर्षायुतायुतैः पापं यैः कृतं दुष्टबुद्धिभिः ॥
तथान्यस्तु तमो नाम सोऽतिशीतः स्वभावतः ।
महारौरववद्दीर्घस्तथा स तमसा वृतः ॥
शीतार्त्तास्तत्र धावन्तो नरास्तमसि दारुणे ।
परस्परं समासाद्य परिरभ्याश्रयन्ति च ॥
दन्ताश्चैषाञ्च भज्यन्ते शीतार्त्तिपरिकम्पिताः ।
क्षुत्तृष्णा प्रबला तत्र तथैवान्येऽप्युपद्रवाः ॥
हिमखण्डवहो वायुर्भिनत्त्यस्थीनि दारुणः ।
मज्जासृग्गलितन्तस्मादश्नुवन्ति क्षुधान्विताः ॥
लेलिह्यमाना भ्राम्यन्ते परस्परसमागमे ।
एवं तत्रापि सुमहान् क्लेशस्तमसि मानवैः ॥
प्राप्यते ब्राह्मणश्रेष्ठ ! यावद्दुष्कृतसंचयः ॥
निकृन्तन इति ख्यातस्ततोऽन्यो नरकोत्तमः ।
तस्मिन् कुलालचक्राणि भ्राम्यन्त्यविरतं पितः ! ।
तेष्वारोप्य निकृत्यन्ते कालसूत्रेण मानवाः ॥
यमानुगाङ्गुलिस्थेन आपादतलमस्तकम् ।
नचैषां जीवितभ्रंशो जायते द्विजसत्तम ! ॥
छिन्नानि तेषां शतशः खण्डान्यैक्यं व्रजन्ति च ।
एवं वर्षसहस्राणि छिद्यन्ते पापकर्म्मिणः ॥
तावद्यावदशेषं वै तत्पापं हि क्षयं गतम् ।
अप्रतिष्ठञ्च नरकं शृणुष्व गदतो मम ॥
यत्रस्थैर्नारकैर्दुःखमसह्यमनुभूयते ।
तान्येव तत्र चक्राणि घटीयन्त्राणि चान्यतः ॥
दुःखस्य हेतुभूतानि पापकर्म्मकृतां नृणाम् ।
चक्रेष्वारोपिताः केचिद्भ्राम्यन्ते तत्र मानवाः ॥
यावद्वर्षसहस्राणि न तेषां स्थितिरन्तरा ।
घटीयन्त्रेषु चैवान्ये बद्धास्तोये यथा घटी ॥
भ्राम्यन्ते मानवा रक्तमुद्गिरन्तः पुनः पुनः ।
अस्त्रैर्मुखविनिष्क्रान्तैर्नेत्रैरस्तुविलम्बिभिः ॥
दुःखानि ते प्राप्नुवन्ति यान्यसह्यानि जन्तुभिः ॥
असिपत्त्रवनं नाम नरकं शृणु चापरम् ।
योजनानां सहस्रं यो ज्वलदग्न्यावृतावनिः ॥
तप्ताः सूर्य्यकरैश्चण्डैर्यत्रातीव सुदारुणैः ।
प्रपतन्ति सदा तत्र प्राणिनो नरकौकसः ॥
तन्मध्ये च वनं रम्यं स्निग्धपत्त्रं विभाव्यते ।
पत्त्राणि तत्र खड्गानां फलानि द्विजसत्तम ! ॥
श्वानश्च तत्र सबलाः स्वनन्त्ययुतशोभिताः ।
महावक्त्रा महादंष्ट्रा व्याघ्रा इव भयानकाः ॥
ततस्तद्वनमालोक्य शिशिरच्छायमग्रतः ।
प्रयान्ति प्राणिनस्तत्र तीव्रतृट्परिपीडिताः ॥
हा मातर्हा तात ! इति क्रन्दन्तोऽत्यन्तदुःखिताः ।
दह्यमानाङ्घ्रियुगला धरणीस्थेन वह्निना ॥
तेषां गतानां तत्रासिपत्त्रपाती समीरणः ।
प्रवाति तेन पात्यन्ते तेषां खड्गान्यथोपरि ॥
ततः पतन्ति ते भूमौ ज्वलत्पावकसञ्चये ।
लेलिह्यमाने चान्यत्र व्याप्ताशेषमहीतले ॥
सारमेयास्ततः शीघ्रं शातयन्ति शरीरतः ।
तेषामङ्गानि बहूनामनेकान्यतिभीषणाः ॥
असिपत्त्रवनं तात ! मयैतत् कीर्त्तितं तव ।
अतः परं भीमतरं तप्तकुम्भं निबोध मे ॥
समन्ततस्तप्तकुम्भा वह्निज्वालासमावृताः ।
ज्वलदग्निचयोद्वृत्ततैलायश्चूर्णपूरिताः ।
तेषु दुष्कृतकर्म्माणो याम्यैः क्षिप्ता ह्यधोमुखाः ॥
क्राथ्यन्ते विस्फुटद्गात्रगलन्मज्जजलाविलाः ।
स्फुटत्कपालनेत्रास्थिच्छिद्यमाना विभीषणैः ॥
गृध्रैरुत्पाट्य मुच्यन्ते पुनस्तेष्वेव वेगितैः ।
पुनः सिमसिमायन्ते तैलेनैक्यं व्रजन्ति च ॥
द्रवीभूतैः शिरोगात्रस्नायुमांसत्वगस्थिभिः ।
ततो याम्यैर्नरैराशु दर्व्व्या घट्टनघट्टिताः ॥
कृतावर्त्ते महातैले मथ्यन्ते पापकर्म्मिणः ।
एष ते विस्तरेणोक्तस्तप्तकुम्भो मया पितः ! ॥”)

नरककुण्डं, क्ली, ( नरकस्य कुण्डम् । ) यातनास्थानम् । तद्यथा, यम उवाच । “नरकाणाञ्च कुण्डानि सन्ति नानाविधानि च । नानापुराणभेदेन नामभेदानि तानि च ॥ विस्तृतानि गभीराणि क्लेशदानि च जीविनाम् । भयङ्कराणि घोराणि हे वत्से ! कुत्सितानि च ॥ षडशीतिश्च कुण्डानि संयमन्याञ्च सन्ति च । निबोध तेषां नामानि प्रसिद्धानि श्रुतौ सति ॥” इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे । २७ । २८ अध्यायौ ॥

| तत्र नरककुण्डनामानि | | पापभेदात् कुण्डविशेषगामिनः | |
|---|---|---|---|
| वह्निकुण्डम् | १ | कटुवाचा बान्धवदग्धकृत् | १ |
| तप्तकुण्डम् | २ | ब्राह्मणातिथिभोजनाप्रदः | २ |
| क्षारकुण्डम् | ३ | निषिद्धदिने वस्त्रे क्षारसंयोजकः | ३ |
| विट्कुण्डम् | ४ | ब्रह्मस्वापहारकः | ४ |
| मूत्रकुण्डम् | ५ | परतडागं खनित्वोत्सर्ज्जकः | ५ |
| श्लेष्मकुण्डम् | ६ | एकाकी मिष्टभोजी | ६ |
| गरकुण्डम् | ७ | पितृमातृगुरुभार्य्याद्यपोषकः | ७ |
| दूषिकाकुण्डम् | ८ | अतिथिं दृष्ट्वा वक्रचक्षुःकारी | ८ |
| वसाकुण्डम् | ९ | विप्राय दत्त्वा तद्द्रव्यमन्यस्मै दाता | ९ |
| शुक्रकुण्डम् | १० | परस्त्रीगामी परपुंगामिनी च | १० |
| असृक्कुण्डम् | ११ | गुर्व्वादिताड़कस्तद्रक्तपातकारकश्च | ११ |
| अश्रुकुण्डम् | १२ | हरिसङ्गीतश्रद्धायभक्तोपहासकृत् | १२ |
| गात्रमलकुण्डम् | १३ | शश्वदशुद्धचित्तः खलताकारी च | १३ |
| कर्णविट्कुण्डम् | १४ | बधिरोपहासकृत् | १४ |
| मज्जकुण्डम् | १५ | लोभात् स्वभोजनार्थं जीवहन्ता | १५ |

| नरककुण्डनामानि | | पापभेदात् कुण्डविशेषगामिनः | |
|---|---|---|---|
| मांसकुण्डम् | १६ | अर्थलोभात् कन्याविक्रायकः | १६ |
| नखकुण्डम् | १७ | श्राद्धोपवासादिषु संयमत्यागी | १७ |
| लोमकुण्डम् | १८ | | १८ |
| केशकुण्डम् | १९ | सकेशपार्थिवशिवलिङ्गार्च्चकः | १९ |
| अस्थिकुण्डम् | २० | विष्णुपदे पितृपिण्डादाता | २० |
| ताम्रकुण्डम् | २१ | गुर्व्विणीगामी | २१ |
| लौहकुण्डम् | २२ | ऋतुस्नातावीरयोरन्नभुक् | २२ |
| तीक्ष्णकण्टककुण्डम् | २३ | कटुवाचा स्वामिताड़िका | २३ |
| विषकुण्डम् | २४ | विधिना जीवहन्ता | २४ |
| घर्म्मकुण्डम् | २५ | सद्धर्म्मच्छलेन देवद्रव्यस्वीकृत् | २५ |
| तप्तसुराकुण्डम् | २६ | शूद्राग्रदातः शूद्रान्नभोजी | २६ |
| प्रतप्ततैलकुण्डम् | २७ | दण्डेन दुग्धताड़कः | २७ |
| कुन्तकुण्डम् | २८ | कुन्तलौहवड़िशैर्जीवहन्ता | २८ |
| कृमिकुण्डम् | २९ | मतस्याशुग्निप्रो हयामांसभुक् हरिनैवेद्याभुक् च | २९ |

| नरककुण्डनामानि | | पापभेदात् कुण्डविशेषगामिनः | |
|---|---|---|---|
| पूयकुण्डम् | ३० | शूद्रयाजी तत्श्राद्धभुक् तच्छवदाही च ब्राह्मणः | ३० |
| सर्पकुण्डम् | ३१ | शीलघ्यापदचिह्नमस्तकस्य सर्पस्य हन्ता | ३१ |
| मशकुण्डम् | ३२ | विधिं दत्त्वा क्षुद्रजन्तुहन्ता | ३२ |
| दंशकुण्डम् | ३३ | विधिं दत्त्वा जीवहन्ता | ३३ |
| गरलकुण्डम् | ३४ | मक्षिकां हत्वा मधुग्राही | ३४ |
| वज्रदंष्ट्रकुण्डम् | ३५ | अदण्ड्यविप्रयोर्दण्डदात् | ३५ |
| वृश्चिककुण्डम् | ३६ | अर्थलोभात् प्रजादण्डदात् | ३५ |
| शरकुण्डम् | ३७ | शस्त्रधारी धावकः सन्ध्याहरि-भक्तिहीनश्च ब्राह्मणः | ३७ |
| शूलकुण्डम् | ३८ | | ३८ |
| खड्गकुण्डम् | ३९ | | ३९ |
| गोलकुण्डम् | ४० | अल्पदोषिणां कारायां प्रजाबन्धनदात् | ४० |
| नक्रकुण्डम् | ४१ | जलादुत्थितनक्रादि हन्ता | ४१ |
| काककुण्डम् | ४२ | कामेन परस्त्रीवक्षःश्रोण्यास्यद्रष्टा | ४२ |
| सञ्चानकुण्डम् | ४३ | स्वर्णचौरः | ४३ |
| वाजकुण्डम् | ४४ | ताम्रलौहचौरः | ४४ |
| वज्रकुण्डम् | ४५ | देव-देवद्रव्ययोश्चौरः | ४५ |
| तप्तपाषाणकुण्डम् | ४६ | देव-द्विजयो रौप्य-गो-वस्त्राणां चौरः | ४६ |
| तीक्ष्णपाषाणकुण्डम् | ४७ | देव-द्विजयोः पित्तल-कांस्यपात्रचौरः | ४७ |
| लालाकुण्डम् | ४८ | वेश्यान्नभुक् तद्वृत्तिजीवी च | ४८ |
| मसीकुण्डम् | ४९ | म्लेच्छसेवी मसीजीवी च ब्राह्मणः | ४९ |
| चूर्णकुण्डम् | ५० | देव-द्विजयोः शस्यताम्बूलासनचौरः | ५० |
| चक्रकुण्डम् | ५१ | विप्रद्रव्यं हृत्वा चक्रकारी | ५१ |
| वक्रकुण्डम् | ५२ | विप्र-बान्धवयोर्व्वक्रताकारी | ५२ |
| कूर्म्मकुण्डम् | ५३ | हरिशयने कूर्म्ममांसभुक् ब्राह्मणः | ५३ |
| ज्वालाकुण्डम् | ५४ | देवद्विजयोर्घृततैलादिहृत् | ५४ |
| भस्मकुण्डम् | ५५ | | ५५ |
| दग्धकुण्डम् | ५६ | देवद्विजयोर्लश्रीगन्धतैलद्रव्याणामपहर्त्ता | ५६ |
| तप्तसूर्म्मीकुण्डम् | ५७ | बलछलत्वादिना परभूमिहरः | ५७ |
| असिपत्रकुण्डम् | ५८ | अर्थलोभात् खड्गेन जीविच्छेदी नरघाती च | ५८ |
| क्षुरधारकुण्डम् | ५९ | ग्रामनगरादिदाहकृत् | ५९ |

| नरककुण्डनामानि | | पापभेदात् कुण्डविशेषगामिनः |
|---|---|---|
| सूचीमुखकुण्डम् | ६० | परकर्णे मुखं दत्त्वा परनिन्दकः परदोष-श्लाघी वेदब्राह्मणनिन्दकश्च |
| गोधामुखकुण्डम् | ६१ | गृहं भित्त्वा वस्तुगोच्छागमेषचौरः |
| नक्रमुखकुण्डम् | ६२ | सामान्यद्रव्यचौरः |
| गजदंशकुण्डम् | ६३ | गजतुरगनरचौरः |
| गोमुखकुण्डम् | ६४ | जलपिबन्नोवारकः |
| कुम्भीपाककुण्डम् | ६५ | गो-स्त्री-भिक्षु-भ्रूण-ब्रह्महा अगम्यागामी दीक्षासन्ध्याहीनस्तीर्थप्रतिग्राही ग्राम-याजी देवलः शूद्रसूपकारो वृषलीपतिश्च |
| कालसूत्रकुण्डम् | ६६ | वेश्यान्नभुक् तत्संसर्गी च |
| अवटोदकुण्डम् | ६७ | कुलटादिषड्वेश्यागामी द्विजः |
| अरुन्तुदकुण्डम् | ६८ | चन्द्रसूर्य्यग्रहणे निषिद्धकालभोजी |
| पांशुभोजकुण्डम् | ६९ | एकस्मै वाक्प्रदत्तकन्याया अन्यस्मै दाता |
| पाशवेष्टकुण्डम् | ७० | दत्तापहारी |
| शूलपोतकुण्डम् | ७१ | अभक्त्या शिवलिङ्गपूजकः |
| प्रकम्पनकुण्डम् | ७२ | विप्रदण्डदात् ततकम्पसङ्गयदायी च |
| उल्कामुखकुण्डम् | ७३ | सकोपवदना स्वामिनि कटुवादिनी |
| अन्धकूपकुण्डम् | ७४ | शूद्रभोग्या ब्राह्मणी |
| वेधनकुण्डम् | ७५ | वेश्या। सा च पञ्चषट्पुंगमनाद्भवति |
| दण्डताड़नकुण्डम् | ७६ | युङ्गी। सा च सप्ताष्टपुंगमनाद्भवति |
| जालबद्धकुण्डम् | ७७ | महावेश्या। साचाष्टाधिकपुंगमनाद्भवति |
| देहचूर्णकुण्डम् | ७८ | कुलटा। सा च पुंद्वयगमनाद्भवति |
| दलनकुण्डम् | ७९ | स्वैरिणी। वृषली। सा चतुःपुंगमनाद्भवति |
| शोषणकुण्डम् | ८० | धृष्टा। पुंश्चली। सा च त्रिपुंगमनाद्भवति |
| कषकुण्डम् | ८१ | सवर्णपरदारी |
| शूर्पकुण्डम् | ८२ | ब्राह्मणीगामी क्षत्रियो वैश्यश्च |
| ज्वालामुखकुण्डम् | ८३ | करे तुलसीगङ्गाजलदेवशिलाश्च कृत्वा प्रतिज्ञाकृत्तदपालको मिथ्याशपथी मित्रद्रोही विश्वासघाती मिथ्यासाक्ष्यदश्च |
| जिह्मकुण्डम् | ८४ | नित्यक्रियाहीनो देववागनास्तिको मन्त्रोप-हासी च |
| धूमान्धकुण्डम् | ८५ | देवविप्रयोर्द्धनहारी |
| नागवेष्टनकुण्डम् | ८६ | वैद्यदेवशवृत्तिकारी लाक्षालोहव्यापारी रसादिविक्रयी च ब्राह्मणः |

:कजित्, पुं, (नरकं तन्नाम्ना विख्यातमसुरं जयतीति। जि+क्विप्। तुक् च।) विष्णुः। इति त्रिकाण्डशेषः॥

:कदेवता, स्त्री, (नरकस्य अधिष्ठात्री देवता।) निरयदेवी। तत्पर्य्यायः। अलक्ष्मीः२ निर्ऋतिः ३ कालपर्णी ४। इति शब्दरत्नावली॥

:कमुक्तः, त्रि, (नरकात् मुक्तः।) नरकागतः। यथा,—

"नरकात् प्रतिमुक्तस्तु पापयोनिषु जायते।
पतितात् प्रतिगृह्यायं खरयोनिं व्रजेद्बुधः॥
नरकात् प्रतिमुक्तस्तु कृमिर्भवति पातकी।
उपाध्यायं व्यलीकन्तु कृत्वा श्वा भवति द्विजः॥
तज्जायां मनसा वाञ्छंस्तद्द्रव्यं वाप्यसंशयम्।
गर्द्दभो जायते जन्तुर्म्मित्रस्यैवापमानतः॥
शत्रोरितरमाक्रुश्य शारिका संप्रजायते।
पितरौ पीड़यित्वा तु कच्छपत्वञ्च जायते॥
भर्त्तुः पिण्डमुपाश्नन्तो हित्वान्यानि च सेवयेत्।
सोऽपि मोहसमापन्नो जायते वानरो मृतः॥
न्यासापहर्त्ता नरकात् विमुक्तो जायते कृमिः।
असूयकश्च नरकान्मुक्तो भवति राक्षसः॥
विश्वासहर्त्ता च नरो मीनयोनौ प्रजायते।
यवधान्यानि हृत्वा तु जायते मूषिको मृतः॥
परदाराभिमर्षात्तु वृको घोरोऽभिजायते।
भ्रातृभार्य्याप्रसङ्गत्वे कोकिलो जायते नरः॥
गुर्व्वादिभार्य्यागमनाच्छूकरो जायते नरः।
यज्ञदानविवाहानां विघ्नकर्त्ता भवेत् कृमिः॥
देवतापितृविप्राणामदत्त्वा योऽन्नमश्नुते।
प्रमुक्तो नरकाद्वापि वायसः स प्रजायते॥
ज्येष्ठभ्रातृममानाच्च क्रौञ्चयोनौ प्रजायते।
शूद्रश्च ब्राह्मणीं गत्वा कृमियोनौ प्रजायते॥
तस्यामपत्यमुत्पाद्य काष्ठान्तःकीटको भवेत्।
कृतघ्नः कृमिकः कीटः पतङ्गो वृश्चिकस्तथा॥
अशस्त्रं पुरुषं हत्वा नरः संजायते खरः।
कृमिः स्त्रीवधकर्त्ता च बालहन्ताभिजायते॥
भोजनं चोरयित्वा तु मक्षिका जायते नरः।
हृत्वान्नञ्चैव मार्ज्जारस्तिलञ्चैव मूषिकः॥
घृतं हृत्वा च नकुलः काको मद्गुरमामिषम्।
मधु हृत्वा नरो दंशः पूपं हृत्वा पिपीलकः॥
अपो हृत्वा तु पापात्मा वायसः संप्रजायते।
हृते कांस्ये च हारीतः कपोतो वा प्रजायते॥
हृत्वा तु काञ्चनं भाण्डं कृमियोनौ प्रजायते।
कार्पासिके हृते क्रौञ्चो वह्निहर्त्ता बकस्तथा॥
मयूरो वर्णकं हृत्वा शाकं पत्रञ्च जायते।
जीवञ्जीवकतां याति रक्तवस्त्रापहृन्नरः॥
छुच्छुन्दरिः शुभान् गन्धान् वंशं हृत्वा शशो भवेत्।
षण्डः कलापहरणे काष्ठहृत् काष्ठकीटकः॥
पुष्पापहृद्दरिद्रस्तु पङ्गुर्यवापहृन्नरः।
शाकहर्त्ता च हारीतस्तोयहर्त्ता च चातकः॥
गृहहृन्नरकान् गत्वा रौरवादीन् सुदारुणान्।
तृणगुल्मलतावल्लीत्वक्सारतरुतां व्रजेत्॥

एष एव क्रमो दृष्टो गोसुवर्णादिहारिणाम्।
विद्यापहारी मूकश्च गत्वा च नरकान् बहून्॥
अत्यभिद्देऽग्नौ हुते च मन्दाग्निः संप्रजायते।
परनिन्दाकृतघ्नत्वं परमर्म्मावघाततनम्।
नैष्ठुर्य्यं निर्घृणत्वञ्च परदारोपसेवनम्।
परस्वहरणाशौचं देवतानाञ्च कुत्सनम्॥
निकृत्य वञ्चनं नृणां कार्पण्यञ्च नृणां बुधः।
उपलक्षणादि जानीयात् मुक्तानां नरकादनु॥"
प्रसङ्गात् स्वर्गागतलक्षणमप्याह।
"दया भूतेषु संवादः परलोकं प्रतिक्रिया।
सत्यं भूतहिता चोक्तिर्व्वेदप्रामाण्यदर्शनम्॥
गुरुदेवर्षिपूजा च केवलं साधुसङ्गमः।
सत्क्रियाभ्यसनं मैत्री स्वर्गिणां लक्षणं विदुः॥
अष्टाङ्गयोगविज्ञानात् प्राप्नोत्यात्यन्तिकं लयम्॥"
इति गारुड़े कर्म्मविपाकः २२६ अध्यायः॥

नरकस्था, स्त्री, (नरके तिष्ठतीति। स्था+"सुपि स्थः।"३।२।४। इति कः।) वैतरणी नदी। इति हेमचन्द्रः। ४। १५२॥ निरयस्थिते, त्रि। यथा,
"नरकस्थोऽपि देहं वै न पुनस्त्यक्तुमिच्छति॥"
इति श्रीभागवतम्॥

नरकान्तकः, पुं, (नरकस्य तन्नाम्ना ख्यातस्यासुरस्य अन्तकः।) विष्णुः। इति पुराणम्॥ (यथा, मुकुन्दमालायाम्। ७।
"दिवि वा भुवि वा ममास्तु वासो
नरके वा नरकान्तक! प्रकामम्।
अवधीरितशारदारविन्दौ
चरणौ ते मरणेऽपि चिन्तयामि॥")

नरकामयः, पुं, (नरकः आमय इव यस्य।) प्रेतः। इति शब्दरत्नावली॥ (नरकरूप आमयः।) निरयरोगश्च॥

नरकीलकः, पुं, (नरेषु कीलक इव निम्यत्वात्।) गुरुघ्नः। तत्पर्य्यायः। गुरुहा २। इति हेमचन्द्रः। ३। ५२२॥

नरगणः, पुं, (नरस्य गणो यस्मात्।) नवनक्षत्रविशेषः। तज्जातजनः। यथा,—
"हस्तास्वातिमृगाश्विनीहरिगुरुः पौष्णानुराधादिति-
स्वार्द्रा रोहिणि चोत्तराणि भरणी पूर्व्वाणि भानि त्रयम्।
ज्येष्ठाश्लेषविशाखमूलवरुणावस्वग्निचित्रामघाः
कथ्यन्ते मुनिभिर्यथाक्रमवशाद्देवा नरा राक्षसाः॥"
इति दीपिका॥
अस्य फलम्। यथा, कोष्ठीप्रदीपे।
"मानुष्ये मृदुकर्म्मसक्ततमनाः शीलान्वितो धीयुतः॥"
(नराणां गणः।) नरसमूहः॥

नरङ्गः, पुं, (नृणाति प्रापयतीति। नॄ+"पतादेरङ्गच्।" इति उणादिकोषटीकाधृतसूत्रात् अङ्गच्।) वरण्डकः। नाराङ्गा इति भाषा॥ (नुः पुरुषस्य अङ्गम्।) मेहने, क्ली। इत्युणादिकोषः॥

नरदेवः, पुं, (नरो देव इव।) राजा। इति हलायुधः॥ (यथा, हरिवंशे। १९। १२।
"रेतोधाः पुत्त्र उन्नयति नरदेव! यमक्षयात्॥")

नरनारायणौ, पुं, (नरश्च नारायणश्च तौ।) ऋषिविशेषौ। तावेव श्रीकृष्णार्ज्जुनौ सम्भूतौ। इति महाभारतम्॥ (यथा, देवीभागवते। ४। ५। १३।
"नरनारायणौ चैव चेरतुस्तप उत्तमम्।
प्रालेयाद्रिं समागत्य तीर्थे वदरिकाश्रमे॥")
तयोरुत्पत्तिर्यथा,—
"अथ चिन्तयतस्तस्य स्वान्तं गत्वा जनार्द्दनः।
तत् सर्व्वं ज्ञापयामास वराहवपुषो हितम्॥
ततो देहपरित्यागं कर्त्तुं समभवद्यदा।
तदा दंष्ट्राग्रघातेन नरसिंहं महावलम्॥
सरभो भगवान् भर्गो द्विधा मध्ये चकार ह।
नरसिंहे द्विधाभूते नरभागेन तस्य तु॥
नर एव समुत्पन्नो दिव्यरूपी महानृषिः।
तस्य पश्चास्यभागेन नारायण इति श्रुतः॥
अभवत् स महातेजा मुनिरूपी जनार्द्दनः।
नरो नारायणश्चोभौ हरिहेतू महामती॥
ययोः प्रभावो दुर्द्धर्षः ब्राह्मे वेदे तपःसु च॥"
इति कालिकापुराणे २९ अध्यायः॥
कल्पभेदे तौ धर्म्मपुत्त्रौ। यथा,—
"धर्म्मस्य दक्षदुहितर्य्यजनिष्ट मूर्त्त्यां
नारायणो नर इति स्वतपःप्रभावः।
दृष्ट्वात्मनो भगवतो नियमावलोपं
देव्यस्त्वनङ्गपृतना घटितुं न शेकुः॥"
इति श्रीभागवते। २। ७। ६॥
(अनयोर्व्विशेषविवरणन्तु देवीभागवते ४ स्कन्धस्य ५ अध्यायमारभ्य द्रष्टव्यम्॥)

नरपतिः, पुं, (नरान् पातीति। पा+डतिः। नराणां पतिर्वा।) राजा। इति शब्दरत्नावली॥ (यथा, रघुः। २। ७५।
"नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी
गुरुभिरभिनिविष्टं लोकपालानुभावैः॥")

नरप्रियः, पुं, (नराणां प्रियः।) नीलवृक्षः। इति राजनिर्घण्टः॥ नरस्य प्रियवस्तुनि, त्रि॥

नरभूः, स्त्री, (नराणां मनुष्याणां भूर्भूमिः।) भारतवर्षः। इति त्रिकाण्डशेषः॥ नरोत्पत्तिश्च॥

नरभूमिः, स्त्री, (नराणां मनुष्याणां भूमिः।) भारतवर्षः। इति शब्दरत्नावली॥

नरमानिनी, स्त्री, (नरं पुरुषमिव मन्यते इति। मन+णिनिः+ङीप्।) श्मश्रुयुक्तनारी। इति त्रिकाण्डशेषः॥

नरमानिका, स्त्री, (नरं मन्यते या। मन+ण्वुल्। टापि अत इत्वम्।) नरमानिनी। इति शब्दरत्नावली॥

नरमाला, स्त्री, (नराणां तन्मुण्डानां माला।) मनुष्यमुण्डमाला। यथा, मार्कण्डेये। ८७। ६।
"विचित्रखट्टाङ्गधरा नरमालाविभूषणा॥"

नरमालिनी, स्त्री, (नरस्येव माला केशसमूहो मुखेऽस्यस्या इति। इनिः+ङीप्। यद्वा, नरमानिनी प्रयोगानुरोधात् निपातनेन नस्य लत्वम्।) श्मश्रुयुक्तनारी। इति हेमचन्द्रः। ३। १९५॥ (नरस्य तन्मुण्डस्य मालास्त्यस्या इति।) नरमालायुक्ता॥

नरमेधः, पुं, (मिध हिंसायाम्+भावे घञ्। नराणां पुरुषाणां मेधो हिंसनं यत्र।) नरवधात्मकयज्ञविशेषः॥ (यज्ञोऽयं वाजसनेयसंहितायाम् ३०—३१ अध्याययोर्दर्शितः। तत्र अधिकार्य्यादिकं ३० अध्याये वेददीपे उक्तम्। यथा,—
"ब्राह्मणराजन्ययोरतिष्ठाकामयोः पुरुषमेधसंज्ञको यज्ञो भवति। सर्व्वभूतान्यतिक्रम्य स्थानमतिष्ठा। चैत्रशुक्लदशम्यामारम्भः। अत्र त्रयोविंशतिर्दीक्षा भवन्ति द्वादशोपसदः पञ्च सुत्या इति चत्वारिंशद्दिनैः सिध्यति। अत्र यूपैकादशिनी भवति एकादशाग्निषोमीयाः पशवो भवन्ति तेषाञ्च प्रतियूपं मध्यमे वा यूपे यथेच्छं नियोजनम्। आज्येन सकृद्गृहीतेन देव सवितरिति प्रत्यृचं तिस्र आहुतीराहवनीये जुहोति॥") स तु कलौ वर्ज्जनीयः। यथा,—
"समुद्रयात्रास्वीकारः कमण्डलुविधारणम्।
द्विजानामसवर्णासु कन्यासूपयमस्तथा॥
देवरेण सुतोत्पत्तिर्म्मधुपर्के पशोर्व्वधः।
मांसादनं तथा श्राद्धे वानप्रस्थाश्रमस्तथा॥
दत्तायाश्चैव कन्यायाः पुनर्दानं वरस्य च।
दीर्घकालं ब्रह्मचर्य्यं नरमेधाश्वमेधकौ॥
महाप्रस्थानगमनं गोमेधश्च तथा मखः।
इमान् धर्म्मान् कलियुगे वर्ज्यानाहुर्म्मनीषिणः॥"
इत्युद्वाहतत्त्वे वृहन्नारदीयम्॥

नरवाहनः, पुं, (नरो वाहनं यस्य। "क्षुभ्नादिषु च।" ८। ४। ३९। इति न णत्वम्।) कुवेरः। इत्यमरः।१।१।७२॥ (यथा, रघुः। ९। ११।
"विजयदुन्दुभितां ययुरर्णवा
घनरवा नरवाहनसम्पदः॥"
नृपतिविशेषः। यथा, राजतरङ्गिण्याम्। ५। २१३।
"सोऽनुगैः सह निर्द्दोहं जघान द्रोहशङ्कया।
शूरं दार्व्वाभिसारेशं शर्व्वर्य्यां नरवाहनम्॥")
पुरुषयानविशिष्टे, त्रि॥ (यथा, महाभारते। ३। ८९। ५।
"जज्ञे धनपतिर्यत्र कुवेरो नरवाहनः॥")

नरविष्वणः, पुं, (नरं विष्वणति भक्षयतीति। वि+स्वन+अच्।) राक्षसः। इति त्रिकाण्डशेषः॥

नरसारः, पुं, (नरवत् शुभ्रः सारो यत्र।) वणिग्द्रव्यविशेषः। नौसादर इति निशादल इति च भाषा। तस्य पर्य्यायः। यथा, रत्नमालायाम्।
"हिदलो गोपकः पिण्डो वोलो गन्धरसो रसः॥"
तस्य शुद्धिर्यथा,—
"नरसारो भवेच्छुद्धश्चूर्णतोये विपाचितः।
दोलायन्त्रेण यत्नेन भिषग्भिर्योगसिद्धये॥"
इति सारचन्द्रिका॥

स तु द्रव्यान्तरयोगेन महाद्रावको भवति यथा,
"नरसारयवक्षारस्फटिकारित एव काचवकयन्त्रैः ।
वकुप्रः पात्यं सत्त्वं तद्धि महाद्रावकं नाम ॥"
इति रत्नावली ॥
यथाच वैद्यकभैषज्यधन्वन्तरियन्त्रे यकृत्प्लीहा-
धिकारे ।
"इक्षुवित्तमपामार्गं चिञ्चा कुष्माण्डनाड़िका ।
स्नुही तालस्य पुष्पाणि वर्षाभूर्वेतसस्तथा ॥
एतेषां क्षारमाहृत्य निम्बाकखरसेन च ।
क्षालयित्वा क्षारतोयं वस्त्रपूतञ्च कारयेत् ॥
चक्रातपेन संशोष्य ग्राह्यन्तद्द्रवशोषितम् ।
एतस्य द्विपलं ग्राह्यं यवक्षारपलद्वयम् ॥
स्फटिकारिपलञ्चैव नरसारपलन्तथा ।
पलार्द्धं सैन्धवं ग्राह्यं टङ्कणं तोलकद्वयम् ॥
कासीसं तोलकञ्चैव सुहागञ्च तोलकम् ।
दारमोचं कर्षकञ्च तोलं समुद्रफेनकम् ॥
सर्व्वमेकत्र सञ्चूर्ण्य वकयन्त्रेण साधयेत् ।
महाद्रावकमेतद्धि योज्यञ्च रसजारणे ॥
हन्ति गुल्मादिकान् रोगान् यकृत्प्लीहोदराणि
च ॥")
नरसिंहः, पुं, ( नर इव सिंह इव च आकृति-
र्यस्य । ) विष्णुः । इति शब्दरत्नावली ॥ स तु
हिरण्यकशिपुवधार्थं भगवद्दशावतारान्तर्गत-
श्चतुर्थः पूर्णावतारः । इति वराहपुराणम् ॥
( नरेषु सिंहः । नरः सिंह इव इत्युपमित-
समासो वा । ) नरश्रेष्ठः । यदुक्तम् ।
"स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः ।
सिंहशार्द्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः ॥"
इति विशेष्यनिघ्ने अमरः ॥
( यथा, महाभारते । १० । १० । १६ ।
"कुलस्य नरसिंहस्य संग्रामेष्वपलायिनः ।
ये वसुश्च कर्णस्य प्रमादात्त इमे हताः ॥")
नरहरिः, पुं, ( नरः इव हरिः सिंह इव च
आकृतिर्यस्य । ) नृसिंहावतारः । यथा,—
"केशव धृतनरहरिरूप जय जगदीश हरे ॥"
इति गीतगोविन्दे । १ । ८ ॥
नराधिपः, पुं, ( नराणामधिपः । ) नराधिपतिः ।
राजा । यथा, "नराणाञ्च नराधिपः ।" इति
श्रीभगवद्गीता ॥ ( वृक्षविशेषः । यथा, सुश्रुते
चिकित्सितस्थाने १७ अध्याये ।
"काकोलीद्वयवृश्चाङ्कमेदायुग्मनराधिपैः ॥")
नरान्तकः, पुं, ( नराणां अन्तको नाशकः । )
राक्षसविशेषः । स तु रावणपुत्त्रः । इति रामा-
यणम् ॥ ( यथा, भागवते । ६ । १० । १८ ।
"रक्षःपतिस्तदवलोक्य निकुम्भकुम्भ-
धूम्राक्षदुर्म्मुखसुरान्तनरान्तकादीन् ॥")
नरायणः, पुं, ( नराणां जीवानां अयनं आश्रय-
स्थानम् ।) श्रीनारायणः । इति शब्दरत्नावली ॥
नरी, स्त्री, ( नरस्य पत्नी । ङीष् । ) नारी । इति
जटाधरः ॥
नरेन्द्रः, पुं, ( नर इन्द्र इव नराणामिन्द्रो वा । )
राजा । ( यथा, मनुः । ६ । २५३ ।
"रक्षणादार्य्यवृत्तानां कण्टकानाञ्च शोधनात् ।
नरेन्द्रास्त्रिदिवं यान्ति प्रजापालनतत्पराः ॥")
विषवैद्यः । इति मेदिनी । रे, १०१ ॥ ( यथा,
माघे । २ । ८८ ।
"सुनियन्त्रा नरेन्द्रेण फणीन्द्रा इव शत्रवः ॥"
वृक्षविशेषः । यथा, सुश्रुते चिकित्सितस्थाने ।
६ अध्याये ।
"पूतीकार्कस्नुङ्नरेन्द्रद्रुमाणां
मूत्रैः पिष्टाः पल्लवाः सौमनाश्च ॥"
एकविंशत्यक्षरवृत्तिविशेषः । इति चिन्तामणिः ॥
यथा,—
"चामररत्नरज्जुवरपरिगतविग्रहशाक्षितशोभः
माणिविराजिपुष्पयुगविरचितकञ्चुकसङ्गतगन्धः ।
चारुसुवर्णकुण्डलयुगलन्ततरोचिरलङ्कृतवर्णः
पिङ्गलपन्नगेश इति निगदति राजति वृत्तनरेन्द्रः ॥")
नर्कुटकं, क्ली, नासिका । इति हेमचन्द्रः ॥
नर्त्तकः, पुं, ( नृत्यतीति । नृत् + "शिल्पिनि ष्वुन् ।"
३ । १ । १४५ । इति ष्वुन् । ) नटः । पोट-
गलः । चारणः । केलकः । नटपर्य्यायः । सर्व्व-
वेशी २ लवालब्धः ३ तालरेचनकः । इति
शब्दरत्नावली ॥ द्विपः । इति हेमचन्द्रः ॥
नृत्यकर्त्तृलक्षणं यथा,—
"यादृशं नृत्यपात्रं स्यान्नीतं योज्यञ्च तादृशम् ।
नृत्यस्य धारणात् पात्रं नर्त्तकः परिकीर्त्तितः ॥"
अपि च ।
"असम्बद्धप्रलापी च सदा भ्रुकुटितत्परः ।
हासप्रहासचतुरो वाचालो नृत्यकोविदः ॥"
इति सङ्गीतदामोदरः ॥
( नर्त्तयतीति । नृत् + णिच् + ण्वुल् । नृत्यकारके,
त्रि । यथा, साहित्यदर्पणे ३ परिच्छेदे ।
"तर्को विचारः सन्देहात् भ्रूशिरोऽङ्गुलि-
नर्त्तकः ॥")
नर्त्तकी, स्त्री, ( नृत्यतीति । नृत् + ष्वुन् । षित्वात्
ङीष् । ) नृत्यकारिणी । वाइ इति भाषा ॥ तत्-
पर्य्यायः । लासिका २ । इत्यमरः । १ । ७ । ८ ॥
लयपुत्त्री ३ नटी ४ लस्या ५ । इति शब्द-
रत्नावली ॥ ( यथा, रघुः । १६ । १४ ।
"नर्त्तकीरभिनयातिलङ्घिनीः
पार्श्ववर्त्तिषु गुरुष्वलज्जयत् ॥" )
करेणुः । इति मेदिनी । के, १०८ ॥ नलिका-
नामसुगन्धिद्रव्यम् । इति राजनिर्घण्टः ॥
नर्त्तनं, क्ली, ( नृत् + भावे ल्युट् । ) नृत्यम् । इत्य-
मरः । १ । ७ । १० ॥ ( यथा, मनुः । २।१७८।
"कामं क्रोधञ्च लोभञ्च नर्त्तनं गीतवादनम् ॥"
नृत्यतीति । नृत् + ल्युः । नर्त्तके, त्रि । यथा,
महाभारते । ४ । ३५ । २२ ।
"गायनो नर्त्तनो वापि वादनो वा पुनर्भव ।
क्षिप्रं मे रथमास्थाय निगृह्णीष्व हयोत्तमान् ॥")
नर्द्द, शब्दे । इति कविकल्पद्रुमः ॥ ( भ्वां-परं-
अकं-सेट् । ) नर्द्दति । इति दुर्गादासः ॥
नर्द्द, गतौ । इति कविकल्पद्रुमः ॥ ( भ्वां-परं-
सकं-सेट् ॥ )
नर्द्दटकं, क्ली, छन्दोविशेषः । तस्य लक्षणं यथा
"यदि भवतो नजौ भजजला गुरुनर्द्दटकम् ।
इति छन्दोमञ्जरी
नर्ब्ब, गतौ । इति कविकल्पद्रुमः ॥ ( भ्वां परं-
सेट् । ) रेफोपधः । नर्ब्बति । इति दुर्गादा
नर्म्म, [ न् ] क्ली, ( नृ नये + "सर्व्वधा
मनिन् ।" उणा ४ । १४६ । इति मनि
परीहासः । इत्यमरः । १ । ७ । ३२ ॥ (
महाभारते । १ । ८२ । १७ ।
"न नर्म्मयुक्तं वचनं हिनस्ति
न स्त्रीषु राजन्न विवाहकाले ।
प्राणात्यये सर्व्वधनापहारे
पञ्चानृतान्याहुरपातकानि ॥")
नर्म्मकीलः, पुं, ( नर्म्मणः परीहासस्य कील
पतिः । इति त्रिकाण्डशेषः ॥
नर्म्मटः, पुं, ( नर्म्मणेव अटति गच्छतीति ।
अच् । शकन्ध्वादित्वात् साधुः । )
सूर्य्यः । इति हारावली ॥ २५४ ॥
नर्म्मठः, पुं, ( नर्म्मणि कुशलः । नर्म्म + अठ
चूचुकम् । षिड्गः । परीहासरतः । इति श
रत्नावली ॥
नर्म्मदः, पुं, ( नर्म्म ददातीति । दा + कः । ) के
सचिवः । इति मेदिनी । दे, ३३ ॥
नर्म्मदा, स्त्री, (नर्म्म ददातीति । दा + कः । स्त्रि
टाप् । ) पृक्का । इति हेमचन्द्रः । ४ । ११
नदीविशेषः । सा विन्ध्यपर्व्वतान्निःसृता प
तमसानद्यां प्रविष्टा । तस्याः पर्य्यायः । रे
मेकलकन्या ३ सोमसुता ४ । अस्या जलगु
लघुत्वम् । शीतलत्वम् । सुपथ्यत्वम् ।
पित्तशमनत्वम् । वातदाहत्वञ्च । इति रा
निर्घण्टः ॥*॥ तस्या जलं दशभिर्म्मासैर्जीर्य्य
यथा,—
"त्रिभिः सारस्वतं तोयं सप्तभिस्तु यामुन
नार्म्मदं दशभिर्म्मासैर्गाङ्गं वर्षेण जीर्य्यति ।"
इति प्रायश्चित्ततत्त्वम्
तस्या उत्पत्तिमाहात्म्ये यथा,—
"नर्म्मदा सरितां श्रेष्ठा रुद्रदेहाद्विनिःसृता
तारयेत् सर्व्वभूतानि स्थावराणि चराणि च
सर्व्वपापहरा नित्यं सर्व्वदेवनमस्कृता ।
संस्तुता देवगन्धर्व्वैरप्सरोभिस्तथैव च ॥" *
तस्याः स्तवो यथा,—
"नमः पुण्यजले ! आद्ये ! नमः सागरगामिनि
नमस्ते पापशमनि ! नमो देवि ! वरानने !
नमोऽस्तु ते ऋषिगणसंघसेविते !
नमोऽस्तु ते शङ्करदेहनिःसृते !
नमोऽस्तु ते धर्म्मभृतां वरप्रदे !
नमोऽस्तु ते सर्व्वपवित्रपावने ! ॥
य इदं पठते स्तोत्रं नित्यं शुद्धमना नरः ।
ब्राह्मणो वेदमाप्नोति क्षत्त्रियो विजयी भवे
वैश्यस्तु लभते लाभं शूद्रश्चैव शुभां गतिम् ।
अन्नार्थी लभते ह्यन्नं स्मरणादेव नित्यशः ।
नर्म्मदां सेवते नित्यं स्वयन्देवो महेश्वरः ।

तेन पुण्या नदी ज्ञेया ब्रह्महत्यापहारिणी ॥
नर्म्मदाया जलं पीत्वा अर्च्चयित्वा वृषध्वजम् ।
दुर्गतिञ्च न पश्यन्ति तस्य तीर्थप्रभावतः ॥
एततीर्थं समासाद्य यस्तु प्राणान् परित्यजेत् ।
सर्व्वपापविशुद्धात्मा व्रजते रुद्रमन्दिरम् ॥
जलप्रवेशं यः कुर्य्यात् तस्मिंस्तीर्थे नराधिप ! ।
हंसयुक्तेन यानेन रुद्रलोकं स गच्छति ॥
यावच्चन्द्रश्च सूर्य्यश्च हिमवांश्च महोदधिः ।
गङ्गाद्याः सरितो यावत्तावत् स्वर्गे महीयते ॥
अनशनन्तु यः कुर्य्यात्तस्मिंस्तीर्थे नराधिप ! ।
गर्भवासे तु राजेन्द्र ! न पुनर्जायते नरः ॥"
इति मात्स्ये १९५ । १९६ अध्यायौ ॥
सा च पुरुकुत्सभार्य्या । तस्याः स्मरणे विषनाशो भवति । यथा, "सकलपन्नगपतयश्च नर्म्मदायै वरं ददुः । यस्तेऽनुस्मरणसमवेतं नामग्रहणं करिष्यति न तस्य सर्पविषं भविष्यतीति । अत्र च ।
"नर्म्मदायै नमः प्रातर्नर्म्मदायै नमो निशि ।
नमोऽस्तु नर्म्मदे तुभ्यं त्राहि मां विषसर्पतः ॥"
इति विष्णुपुराणे । ४ । ३ । ९—१० ॥
नल, अ बन्धे । इति नलशब्दस्य व्युत्पत्तौ भरतः ॥ (भ्वां-परं-सकं-सेट् ॥ )
नलं, क्ली, ( नलतीति । नल+अच् । ) पद्मम् । इति राजनिर्घण्टः ॥
नलः, पुं, ( नल बन्धे+पचाद्यच् । ) तृणविशेषः । तत्पर्य्यायः । धमनः २ पोटगलः ३ । इत्यमरः । २ । ४ । १६२ ॥ नालः ४ नडः ५ शुषिरन्ध्रः ६ कीचकः ७ दीर्घवंशः ८ शून्यमध्यः ९ विभीषणः १० छिद्रान्तः ११ मृदुपत्रः १२ वंशपत्रः १३ मृदुच्छदः १४ नालवंशः १५ । अस्य गुणाः । शीतत्वम् । कषायत्वम् । मधुरत्वम् । रुचिकारित्वम् । रक्तपित्तप्रशमनत्वम् । दीपनत्वम् । वीर्य्यवृद्धिदत्वञ्च । इति राजनिर्घण्टः ॥ तन्नामगुणाः ।
"नलः पोटगलः शून्यमध्यश्च धमनस्तथा ।
नलस्तु मधुरस्तिक्तः कषायः कफरक्तजित् ॥
उष्णो हृद्वस्तियोन्यर्त्तिदाहपित्तविसर्पहृत् ॥"
इति भावप्रकाशः ॥
सूर्य्यवंशीयनिषधराजपुत्त्रः । यथा,—
"अतिथिस्तु कुशाज्जज्ञे निषधस्तस्य चात्मजः ।
नलस्तु नैषधस्तस्मान्नभस्तस्मादजायत ॥"
वीरसेनराजपुत्त्रः । यथा, मात्स्ये १२ अध्याये ।
"नलौ द्वावेव विख्यातौ वंशे काश्यपसम्भवे ।
वीरसेनसुतस्तद्वन्नैषधश्च नराधिपः ॥"
( तथा, हरिवंशे । १५ । ३४ ।
"नलौ द्वावेव विख्यातौ पुराणे भरतर्षभ ! ।
वीरसेनात्मजश्चैव यश्चेक्ष्वाकुकुलोद्वहः ॥"
एतौ द्वावेव सूर्य्यवंशीयौ ॥ ) चन्द्रवंशीयनिषधराजपुत्त्रः । ( अयन्तु दमयन्तीपतिः । ) यथा, दमयन्तीं प्रति नलवाक्यम् ।
"सुधांशुवंशस्य करीरमेव मां
निशम्य किन्नासि फलेग्रहिर्ग्रहा ॥"
इति नैषधः ॥
(यथा, महाभारते । ३ । ५३ । १ ।
"आसीद्राजा नलो नाम वीरसेनसुतो बली ।
उपपन्नो गुणैरिष्टै रूपवानश्वकोविदः ॥"
अयं वीरसेनस्तु सूर्य्यवंशीयवीरसेनाद्भिन्न एवेत्यवगन्तव्यम् ॥ * ॥
आसीत् पुरा निषधाधिपतिश्चन्द्रवंशीयो नलो नाम राजा । गच्छति काले स हि हंसमुखात् विदर्भेश्वरभीमराजकन्यां दमयन्तीं त्रिभुवनैकसुन्दरीमाकर्ण्य हंसमुखादेवावगतनलसौन्दर्य्यां तन्मनस्कां दमयन्तीं स्वयंवरविधिना इन्द्रादिदेवसन्निधावेव उपयेमे । अस्य इन्द्रसेननामा पुत्त्र आसीत् । दमयन्तीपरिणयकामुकः कलिस्तु दमयन्तीमलभमान एनं प्रति रुष्टः सञ्जातः । अथ कलिप्रविष्टशरीरोऽयं भ्रात्रा पुष्करेण सह द्यूतक्रीड़नात् सर्व्वस्वमहारयत् । ततः स राज्यच्युतो दमयन्त्या सह वनं गतवान् । कलिस्तु अस्य दमयन्तीसहवाससुखमसहिष्णुः दमयन्त्या सह एनं वियोजयितुमियेष । अथ कदाचित् कल्यावेशितचित्तोऽयं नलः सुप्तां दमयन्तीं निष्ठुरवत् परित्यज्य पलायाञ्चक्रे । दमयन्ती तु प्रबुध्य बहु विलप्य च पथिकसार्थवाहेन सह मातृष्वसृगृहं गतवती । नानाविधक्लेशान् शीर्णदेहा सा मातृष्वसापि अविज्ञाता तद्भवने तस्थौ । अथ दमयन्तीपिता भीमनृपतिर्दमयन्त्या अन्वेषणाय दूतान् नियोजयामास । दूतास्तु चिह्नविशेषैर्दमयन्तीं परिज्ञाय भीमाय न्यवेदयन् । भीमस्तु तां स्वगृहमानयत् । नलस्तु दमयन्तीं परित्यज्य गच्छन् दावानलमध्यगतं कर्कोटकनागं विपद उज्जहार । कर्कोटकस्तु नलस्य प्रत्युपकर्त्तुमिच्छन् शरीरस्थमस्य कलिं दष्ट्वा कलिमेव भृशं सन्तापयामास । नलस्तु केवलं रूपान्तरत्वमाप्तवान् । ततोऽसौ ऋतुपर्णस्य राज्ञः सारथ्ये नियुक्त आसीत् । अथ गच्छति काले दमयन्ती पितृगेहस्था नलान्वेषणाय ब्राह्मणान् संप्रेष्य कथञ्चित् ऋतुपर्णसारथिं नलत्वेनावगम्य पुनः स्वयंवरमिषेण ससारथिं ऋतुपर्णं पितृवेश्मनि आनयामास । दमयन्ती तु पाकादिकौशलेनान्यजनावेद्येन ऋतुपर्णसारथिं नलं विज्ञाय स्वसमीपमानयामास । अथ कलिपरित्यक्तेन नलेन स्वसौन्दर्य्ये गृहीते भैम्या सह मेलनं सञ्जातम् । भीमनृपतिस्तु एतत् सर्व्वमाकर्ण्यातिशयसन्तोषमाप्तवान् प्रेषयामास च तं बहुसमारोहेण निषधदेशान् प्रति । ततोऽयं स्वदेशमागम्य भ्रातरं पुष्करं पुनर्द्यूताय आहूय पराजित्य च तं पुनर्लब्धराज्यो दमयन्त्या सह सुखमुवास । एतद्विवरणविस्तृतिस्तु महाभारते वनपर्व्वणि ५३—७९ अध्यायेषु विशेषतो द्रष्टव्या ॥ * ॥)
वानरविशेषः । स तु कृतध्वजसुनिशापात् वानररूपविश्वकर्म्मणः औरसेन घृताच्यप्सरोगर्भे गोदावरीतीरे जातः । इति वामने ६० अध्यायः ॥ ( अयन्तु रामवाक्येन समुद्रमध्ये सेतुं बबन्ध । यथा, अध्यात्मरामायणे । ६ । ३ । ८४—८६ ।
"ततोऽब्रवीत् रघुश्रेष्ठं सागरो विनयान्वितः
नलः सेतुं करोत्वस्मिन् जले मे विश्वकर्म्मणः ॥
सुतो धीमान् समर्थोऽस्मिन् कार्य्ये लब्धव
हरिः
कीर्त्तिं जानन्तु ते लोकाः सर्व्वलोकमलापहाम्
इत्युक्ता राघवं नत्वा ययौ सिन्धुरदृश्यताम् ।
ततो रामस्तु सुग्रीवलक्ष्मणाभ्यां समन्वितः ।
नलमाज्ञापयच्छीघ्रं वानरैः सेतुबन्धने ॥")
पितृदेवः । इति मेदिनी । ले, २७ ॥ दै
विशेषः । यथा,—
"दैत्यदानवसंयोगाज्जातास्तीव्रपराक्रमाः ।
सैंहिकाया इति ख्यातास्त्रयोदश महाबलाः ॥
वंश्यः शल्यश्च बलवान् नलश्चैव तथा बलः ।
वातापिर्नमुचिश्चैव इल्वलः स्वसृमस्तथा ॥
अञ्जको नरकश्चैव कालनाभस्तथैव च ।
सवमानस्तथा चैव सुरकल्पश्च वीर्य्यवान् ॥"
इति ब्रह्मपुराणे २ अध्यायः ॥
नलकं, क्ली, ( नल इव प्रतिकृतिः । "इवे प्रतिकृतौ ।" ५ । ३ । ९६ । इति कन् ।) शाखास्थि । इति हेमचन्द्रः । ३ । २९१ ॥ ( यथा, सुश्रुते निदानस्थाने १५ अध्याये ।
"तरुणास्थीनि नम्यन्ते भज्यन्ते नलकानि तु ॥")
नलकिनी, स्त्री, ( नलकानि सन्त्यस्याः । नलक+इनिः । ङीप् । ) जङ्घा । इति हेमचन्द्रः । ३ । २७८ ॥
नलकीलः, पुं, ( नलवत् कीलो यत्र । ) जानुः । इति हेमचन्द्रः । ३ । २७८ ॥
नलकूवरः, पुं, कुवेरपुत्त्रः । इत्यमरः । १ । १ । ७३ ॥ ( यथा, राजेन्द्रकर्णपूरे । ६८ ।
"विलोकनकथापि मे न नलकूवरे न स्मरे
किमन्यदमृतद्युतेरपि न दर्शनं प्रार्थये ।
अयं नयनगोचरं व्रजति चेद्दृशासुत्सवः
समग्ररमणीमणी मधुपमाधवः माधवः ॥")
स भ्रात्रा मणिग्रीवेण सह वारुणीं पीत्वा कैलासोपवने गङ्गायां स्त्रीजनैः क्रीड़ितवान् । असंवृतवस्त्रौ तौ दृष्ट्वा नारदः शशाप । तच्छापेन तौ यमलार्ज्जुनौ भूत्वा श्रीवृन्दावने आसतुः । ततो दामोदरेण शापनिर्म्मुक्तौ तं नुत्वा स्वगृहं जग्मतुः । इति श्रीभागवतीयदशमस्कन्धः ॥
नलदं, क्ली, ( नलं द्यति अवखण्डयतीति । दो+कः । ) पुष्परसः । उशीरम् । ( यथा, किराते । ५ । २५ ।
"इह सिन्धवश्च वरणावरणाः
करिणां मुदे सनलदानलदाः ॥" )
जटामांसी । इति मेदिनी । दे, ३३ ॥ ( अस्य पर्य्यायो यथा, वैद्यकरत्नमालायाम् ।
"नलदं नन्दिनी पेशी मांसी लघ्वजटा जटी ।
किरातिनी च जटिला लोमशा तु तपस्विनी ॥"
नलं ददातीति । दा+आतोऽनुपेति कः ।) नलदातरि, त्रि, ॥

नलदम्बु:, पुं, निम्बवृक्ष: । इति भूरिप्रयोग: ॥
नलदा, स्त्री, ( नलद+टाप् । ) जटामांसी । इति हेमचन्द्र: ॥
नलपट्टिका, स्त्री, ( नलनिर्म्मिता पट्टिका । ) तलाची । इति हारावली । १७७ ॥ दरमा इति भाषा ॥
नलमीन:, पुं, ( नलाश्रयो मीन: । ) चिलिचिम-मत्स्य: । इत्यमर: । १ । १० । १८ ॥ ( "नल-मीन: कफात्मक: ।" इति हारीते प्रथमे स्थाने ११ अध्याये ॥ )
नलिका, स्त्री, ( नल इव आकारोऽस्त्यस्या इति । नल+ठन् । ) नाडी । नली इति ख्यात: । सा च उत्तरापथे प्रसिद्धा सुगन्धा प्रवाला-कृति: प्रवालीति क्वचित् प्रसिद्धा । पँठारी इति क्वचित् प्रसिद्धा । तत्पर्य्याय: । विद्रुम-लतिका २ कपोतवाणा ३ नलिभी ४ निर्म्मध्या ५ सुषिरा ६ आभागी ७ सुत्या ८ रक्तदला ९ नर्त्तकी १० नटी ११ । अस्या गुणा: । तिक्त-त्वम् । कटुत्वम् । तीक्ष्णत्वम् । मधुरत्वम् । कृमिवातोदरार्त्त्यर्श:शूलनाशित्वम् । मलशोध-नत्वञ्च । इति राजनिर्घण्ट: ॥ तन्नामगुणा: ।
"नलिका विद्रुमलता कपोतचरणा नटी ।
धमन्यञ्जनकेशी च निर्म्मध्या सुषिरा नली ॥
नलिका शीतला लघ्वी चक्षुष्या कफपित्तहृत् ।
कृच्छ्राश्मवाततृष्णास्रकुष्ठकण्डुज्वरापहा ॥"
इति भावप्रकाश: ॥
(अस्त्रविशेष: । यथा, आर्य्यासप्तशत्याम् । ४३७ ।
"मधुमथनवदनविनिर्हितवंशीसुषिरानुसारिणो रागा: ।
हन्त हरन्ति मनो मम नलिकाविशिखा: स्मर-स्येव ॥"
इयं हि आकृतिक्रियादिना आधुनिकनला-स्त्रस्य 'वन्दुक' इति ख्यातस्य सादृश्यं गच्छति । यथा, वैशम्पायनोक्तधनुर्व्वेदे ।
"नलिका ऋजुदेहा स्यात्तन्वङ्गी मध्यरन्ध्रिका ।
मर्म्मच्छेदकरी नीला——————॥"
"ग्रहणं चापनञ्चैव स्थूतञ्चेति गतित्रयम् ।
तामाश्रितं विदित्वा तु जेतासन्नाम् रिपून् युधि ॥"
अस्या विशेषविवरणन्तु नालिकशब्दे द्रष्टव्यम् ॥ कल्पितजलनिर्गमपथ: । यथा, यन्त्रविधि-शतके १ अध्याये ।
"नेदाङ्गुलं मस्तकोर्द्ध्वं कार्य्यं तोयस्य धारणे ।
समर्थो तत्र नलिका कुर्य्यात्तोयविमोचनीम् ॥")
नलित:, पुं, ( नल्यते इति । नल ज बन्धे+क्त: । ) शाकविशेष: । नालिता इति भाषा ॥ अस्य गुणा: । मधुरत्वम् । पित्तनाशित्वम् । शुक्र-वद्धकत्वञ्च । इति द्रव्यगुणा: ॥
नलिनं, क्ली, ( नल्यते इति । नल बन्धे+"बहुल-मन्यत्रापि ।" उणां । २ । ४९ । इति इनच् ।) पद्मम् । इत्यमर: । १ । १० । ३९ ॥ ( यथा, भागवते । २ । ६ । २२ ।
"यदास्य नाभ्यान्नलिनादहमासं महात्मन: ।
नाविदं यज्ञसम्भारान् पुरुषावयवानृते ॥" )
नीलिका । जलम् । इति हेमचन्द्र: । ४ । २२६ ॥
नलिन:, पुं, ( नल+इनच् । ) सारसपक्षी । इत्य-मर: । १ । १० । ४० ॥ लघुपाकफल: । इति शब्दचन्द्रिका ॥ पानीआमला इति भाषा ॥
नलिनी, स्त्री, ( नलानि पद्मानि सन्त्यत्र । नल+"पुष्करादिभ्यो देशे ।" ५।२।१३५ । इति इनि: । ङीप् । ) पद्मयुक्तदेश: । ( नलानां पद्मानां समूह: । "खलादिभ्य: इनिर्वक्तव्य: ।" ४।२।५१। इत्यस्य वार्त्तिकोक्त्या इनि: ।) पद्मसमूह: । पद्म-लता । इति भरत: ॥ (अस्या: पर्य्यायो यथा,—
"नलिनी स्यात् पङ्कजिनी विशिनी च सरोजिनी ।
पद्मिनीति च पर्य्याय: पद्मषण्डे सदाकरे ॥"
इति वैद्यकरत्नमालायाम् ॥ )
पद्ममात्रम् । इति रायमुकुटादय: ॥ तत्-पर्य्याय: । विसिनी २ पद्मिनी ३ । इत्यमर: । १ । १० । ३९ ॥ ( यथा, भ्रमराष्टके । ८ ।
"रात्रिर्गमिष्यति भविष्यति सुप्रभातं
भास्वानुदेष्यति हसिष्यति पद्मजालम् ।
इत्थं विचिन्तयति कोषगते द्विरेफे
हा हन्त हन्त नलिनीं गज उज्जहार ॥")
व्योमनिम्नगा । ( इयन्तु गङ्गाया: पूर्व्वदिग्गत-शाखानामन्यतमा । यथा, मात्स्ये । १२० । ४० ।
"नीणि प्राचीमभिमुखं प्रतीचीं त्रीण्यथैव च ।
स्रोतांसि त्रिपथगायास्तु प्रत्यपद्यन्त सप्तधा ॥
नलिनी ह्लादिनी चैव पावनी चैव प्राच्यगा ॥")
कमलाकर: । इति मेदिनी । ने, ८२ ॥ नलिका । इति राजनिर्घण्ट: ॥ नारिकेलसुरा । इति त्रिकाण्डशेष: ॥ ( वामनासिका । यथा, भाग-वते । ४ । २५ । ४८ ।
"नलिनी नालिनी च प्राग्द्वारावेकत्र निर्म्मिते ॥"
"नलनालशब्दौ छिद्रवचनौ तद्वती नलिनी नालिनी च वामदक्षिणनासिके ॥" इति तट्टी-कायां स्वामी ॥ )
नलिनीरुहं, क्ली, ( नलिन्यां रोहतीति । रुह+क: । ) मृणालम् । इति राजनिर्घण्ट: ॥ ब्रह्मणि, पुं ॥
नलिनेशय:, पुं, ( नलिने शेते इति । शी+अच् ।) विष्णु: । इति त्रिकाण्डशेष: ॥
नली, स्त्री, ( नल+अच् । गौरादित्वात् ङीष् । ) मन:शिला । इति विश्व: ॥ नलिका । इति भाव-प्रकाश: ॥ तत्पर्य्याय: । सुषिरा २ विद्रुमलता ३ कपोताङ्घ्रि: ४ नटी ५ । इत्यमर: । २ । ४ । १२९ ॥ ( एतद्गुणा मन:शिलानलिकाशब्दयो: ज्ञातव्या: ॥)
नलोत्तम:, पुं, ( नलेषु उत्तम: । ) देवनल: । इति राजनिर्घण्ट: ॥
नल्व:, पुं, ( नल्यते इति । नल+उल्वादयश्चेति व: ।) किष्कुचतु:शतम् । चतु:शतहस्तपरिमित-देश: । इत्यमरभरतौ ॥ ( यथा, हरिवंशे । २२४ । १ ।
"तस्यां सभायां दैत्येन्द्रो हिरण्यकशिपुस्तदा
आसीन आसने चित्रे नल्वमात्रे प्रमाणत: ।"
नल्ववर्त्मगा, स्त्री, (नल्वपरिमितं वर्त्म गच्छतीति गम्+ड: । ) काकाङ्गी । इति शब्दचन्द्रिका ॥ नल्वपरिमितपथगामिनि, त्रि ॥
नव, [ न् ] त्रि, ( नूयते स्तूयते प्रधानसंख्या-वाचकत्वेन । णु स्तवने+बाहुलकात् कनि गुणश्च । इत्युज्ज्वलदत्त: । १ । १५६ ।) संख्या-विशेष: । ९ नय इति भाषा । बहुवचनान्तो-ऽयम् । इति व्याकरणम् ॥ (यथा, रघु: । ३ । ६ ।
"इति क्षितीशो नवतिं नवाधिकां
महाक्रतूनां महनीयशासन: ॥" )
नववाचका यथा । अङ्गद्वारम् १ भूखण्डम् २ उत्तरायणमस्तक: ३ सुधाकुण्डम् ४ ग्रा-स्तन: ५ सेवधि: ६ अङ्कम् ७ रस: ८ ग्रह: ९ इति कविकल्पलता ॥ ( तद्वति, त्रि । यथा, मनु: । ३ । २६९ ।
"षण्मासान् छागमांसेन पार्षतेन च सप्त वै ।
अष्टावेणस्य मांसेन रौरवेण नवैव तु ॥" )
नव:, पुं, ( णु शि स्तवने+"ऋदोरप् ।" ३।३।५७। इति भावे अप् । ) स्तव: । इति मेदिनी । १५ ॥ रक्तपुनर्नवा । इति राजनिर्घण्ट: ॥
नव:, त्रि, (नूयते स्तूयते इति । णु स्तुतौ+"ऋदो-रप् ।" ३ । ३ । ५७ । इति अप् । ) नूतन: । इत्यमर: । ३ । १ । ७७ ॥ (यथा, हितोपदेशे । १ । २३ ।
"न स्त्रीणामप्रिय: कश्चित् प्रियो वापि न विद्यते ।
गावस्तृणमिवारण्ये प्रार्थयन्ति नवं नवम् ॥")
अभिनवान्यौषधानि प्रशस्तानि । यथा,—
"द्रव्याण्यभिनवान्येन प्रशस्तानि क्रियाविधौ ।
ऋते घृतगुडक्षौद्रधान्यकृष्णाविडङ्गत: ॥"
इति नारायणदासकृतवैद्यपरिभाषा ॥
तद्वैदिकपर्य्याय: । "नवम् १ नूतम् २ नूतनम् ३ नव्यम् ४ इदा ५ इदानीम् ६ । षट् नवनामानि ।" इति वेदनिघण्टौ ३ अध्याय: ॥
नवकारिका, स्त्री, ( नवं करोतीति । कृ+ण्वुल् । टापि अत इत्वम् । ) नवोढ़ा । इति शब्द-माला ॥ नूतन: संक्षिप्तो विवरणश्लोक: । नवीन कर्त्री च ॥
नवकालिका, स्त्री, ( नवं कलति प्राप्नोतीति । कल+ण्वुल् । टाप् । अत इत्वम् । ) नवीना । इति हारावली । १७६ ॥
नवग्रहा:, पुं, ( नव ग्रहा: । ) सूर्य्यादयो नव । यथा, तिथितत्त्वे ।
"नवग्रहमखं कृत्वा तत: कर्म्म समारभेत् ।
अन्यथा फलदं पुंसां न काम्यं जायते क्वचित् ॥"
( यथा च,—
"सूर्य्यश्चन्द्रो मङ्गलश्च बुधश्चापि बृहस्पति: ।
शुक्र: शनैश्चरो राहु: केतुश्चेति नवग्रहा: ॥")
तेषां संस्थानम् । यथा,—
"भूमेर्योजनलक्षे तु सौरं मैत्रेय ! मण्डलम् ।
लक्षे दिवाकरस्यापि मण्डलं शशिन: स्थितम् ।
पूर्णे शतसहस्रे तु योजनानां निशाकरात् ।

चन्द्रमण्डलं शतसहस्रपरिस्थात् प्रकाशते ॥
लक्षे चोत्तरे ब्रह्मन् ! बुधो नक्षत्रमण्डलात् ।
ावत्प्रमाणभागे तु बुधस्याप्युशना: स्थित: ॥
ङ्गारकोऽपि शुक्रस्य तत्प्रमाणो व्यवस्थित: ।
क्षद्वये तु भौमस्य स्थितो देवपुरोहित: ॥
ौरिर्बृहस्पतेश्चोर्द्ध्वं द्विलक्षे समवस्थित: ॥”
इति विष्णुपुराणे । २ । ७ अध्याय: ॥
ां रथादि यथा,—
योजनानां सहस्राणि भास्करस्य रथो नव ।
ादण्डस्तथैवास्य द्विगुणो मुनिसत्तम ! ॥
ार्द्धकोटिस्तथा सप्तनियुतान्यधिकानि वै ।
ोजनानान्तु तस्याक्षस्तत्र चक्रं प्रतिष्ठितम् ॥
त्वारिंशत्सहस्राणि द्वितीयोऽक्षो व्यवस्थित: ।
ान्यानि तु सार्द्धानि स्यन्दनस्य महामते ॥
प्रमाणमुभयो: प्रमाणं तद्युगार्द्धयो: ।
ोऽक्षस्तद्युगार्द्धेन ध्रुवाधारो रथस्य वै ।
ीयेऽक्षे तु तच्चक्रं संस्थितं मानसाचले ॥
याश्च सप्त छन्दांसि तेषां नामानि मे शृणु ।
ायत्री च बृहत्युष्णिग्जगती त्रिष्टुबेव च ॥
ुष्टुप् पंक्तिरित्युक्ताश्छन्दांसि हरयो रवे: ।
रथोऽधिष्ठितो देवैरादित्यैरृषिभिस्तथा ।
र्वैरप्सरोभिश्च ग्रामणीसर्पराक्षसै: ॥
ुवन्ति मुनय: सूर्य्यं गन्धर्व्वैर्गीयते पुर: ।
त्यन्त्यप्सरसो यान्ति सूर्य्यस्यानु निशाचरा: ॥
हन्ति पन्नगा यक्षै: क्रियते भीषु संग्रह: ।
ालखिल्यास्तथैवैनं परिवार्य्य समासते ॥
ोऽयं सप्तगण: सूर्य्यमण्डले मुनिसत्तम ! ।
हिमोष्णवारिवृष्टीनां हेतुत्वं समुपागत: ॥
थस्त्रिचक्र: सोमस्य कुन्दाभास्तस्य वाजिन: ।
ामदक्षिणतो युक्ता दश तेन चरत्यसौ ॥ * ॥
ायग्निद्रव्यसम्भूतो रथश्चन्द्रसुतस्य च ।
पशङ्गैस्तुरगैर्युक्त: सोऽष्टाभिर्वायुवेगिभि: ॥*॥
वरूथ: सानुकर्षो युक्तो भूसम्भवैर्हयै: ।
ोपासङ्गपताकस्तु शुक्रस्यापि रथो महान् ॥*॥
ष्टास: काञ्चन: श्रीमान् भौमस्यापि रथो महान् ।
द्मरागारुणैरश्वै: संयुक्तो वह्निसम्भवै: ॥ * ॥
ष्टाभि: पाण्डरैर्युक्तो वाजिभि: काञ्चने रथे ।
ासिंस्तिष्ठति वर्षं वै राशौ राशौ बृहस्पति: ॥
ाकाशसम्भवैरश्वै: शबलै: स्यन्दनं युतम् ।
मारुह्य शनैर्याति मन्दगामी शनैश्चर: ॥ * ॥
र्भानोस्तुरगा ह्यष्टौ भृङ्गाभा धूसरं रथम् ।
कृद्युक्तास्तु मैत्रेय ! वहन्त्यविरतं सदा ॥*॥
था केतुरथस्याश्वा अष्टौ ते वातरंहस: ।
लालधूमवर्णाभा लाक्षारसनिभारुणा: ॥ * ॥
ते मया ग्रहाणां वै तवाख्याता रथा नव ।
र्व्वे ध्रुवे महाभाग ! प्रबद्धा वायुरश्मिभि: ॥”
ति विष्णुपुराणे २ अंशे ८।१०।१२ अध्याया: ॥
ग्रहाणामशुभप्रतीकार: । राजमार्त्तण्डे ।
“दोषो न स्याद्ग्रहाणामशिशिरकिरणे ताम्र-
मिन्दौ च शङ्खं

पृथ्वीपुत्रे प्रवालं शशधरतनये शातकुम्भं भुजेन ।
देवाचार्य्ये च मुक्तां मणिमसुरगुरौ सीसकं सूर्य्यसूनौ
राहौ लौहं त्वनिष्टे कमलजतनये राजपट्टं विभर्त्तु: ॥”
शातकम्भं सुवर्णम् । राजपट्टं कर्पूरमणीति ख्यातम् । अपि च । बुद्धिप्रकाशे ।
“त्रिमूली चीरिकामूलं गोजिह्वा दृढदारकम् ।
मधुयष्टिं सिंहपुच्छीं वाचालं चन्दनं सितम् ।
अश्वगन्धां क्रमात् सूर्य्याद्यग्रहदोषोपशान्तये ॥”
इति ज्योतिषतत्त्वम् ॥
स्वजन्मराश्यवधिनवग्रहशुद्धिर्यथा,—
“केतूपप्लवभौममन्दगतय: षष्ठाश्रिसंस्था: शुभा-
श्चन्द्रार्कावपि ते च तौ च दशमौ चन्द्र: पुन: सप्तम: ।
जीव: सप्तनवद्विपञ्चमगतो युग्मेषु सोमात्मज:
शुक्र: षड्दशसप्तवर्जमितरे सर्व्वेऽप्युपान्ते शुभा: ॥”
इति दीपिका ॥
रवि: ३।६।१०।११।राशय: । सोम: ३।६।७।१०।
११ शुक्लपक्षे २।५।६ । जन्मर्क्षवर्ज्जितजन्मचन्द्र: शुभ: । मङ्गल: ३।६।१०।११ । बुध: २।४।६।८।
१०।११।१२ । बृहस्पति: २।५।७।६।११ । शुक्र:
१।२।३।४।५।८।६।११।१२ । शनि: ३।६।१०।११।
राहु: ३।६।१०।११ । केतु: ३।६।१०।११राशय: ॥
ग्रहाणां राशिभोगनिर्णय: । यथा,—
“रविर्म्मासं निशानाथ: सपाददिवसद्वयम् ।
पक्षत्रयं भूमिपुत्त्रो बुधोऽष्टादशवासरान् ॥
वर्षमेकं सुराचार्य्यश्चाष्टाविंशद्दिनं भृगु: ।
शनि: सार्द्धद्वयं वर्षं स्वर्भानु: सार्द्धवत्सरम् ॥”
रवि: १ मास: । सोम: २।० दिनम् । कुज: ४५ दिनम् । बुध: १८ दिनम् । बृहस्पति: १ वत्सर: । शुक्र: २८ दिनम् । शनि: २॥० वत्सर: । राहु: १॥० वत्सर: । केतु: १॥० वत्सर: । इति ज्योतिषम् ॥ * ॥ अथ चन्द्रादिषड्ग्रहाणामस्तोदयज्ञानम् । यथा,—
“अथोदयास्तमययो: परिज्ञानं प्रकीर्त्त्यते ।
दिवाकरकराक्रान्तमूर्त्तीनामल्पतेजसाम् ॥
सूर्य्यादभ्यधिका: पश्चादस्तं जीवकुजार्कजा: ।
ऊना: प्रागुदयं यान्ति शुक्रज्ञौ वक्रिणौ तथा ॥
अल्पा विवस्वत: प्राच्यामस्तं चन्द्रज्ञभार्गवा: ।
व्रजन्त्यभ्यधिका: पश्चादुदयं शीघ्रयायिन: ॥”*॥
एषां कालांशा यथा,—
“एकादशामरेज्यस्य तिथिसंख्यार्कजस्य च ।
अस्तांशा भूमिपुत्त्रस्य दशसप्ताधिकास्तत: ॥
पश्चादस्तमयोऽष्टाभिरुदय: प्राङ्महत्तया ।
प्रागस्त उदय: पश्चादल्पत्वाद्दशभिर्भृगो: ॥
एवं बुधो द्वादशभिश्चतुर्द्दशभिरंशकै: ।
वक्रशीघ्रगती चार्कात् करोत्यस्तमयोदयौ ॥
एभ्याधिकै: कालभागैर्द्दृश्या न्यूनैरदर्शना: ।
भवन्ति लोके खचरा भानुभाग्रस्तमूर्त्तय: ॥”
इति सूर्य्यसिद्धान्त: ॥

तेषामस्तोदयदिनसंख्याज्ञानम् । यथा,—
“भुजाश्विचन्द्रा-१२२ श्चिदशाश्च ३३ दन्ता ३२
वेदाचला ४७ रामकृती ४३ क्रमेण ।
भौमादिकस्यास्तदिनानि वक्रे
बुधस्य भूपा १६ दश भार्गवस्य ॥”
एषां एकस्मादस्तमयादुदयान्तराभ्युदयास्तज्ञानम् । यथा,—
“तथास्तवक्रात् कुजतोऽस्तवक्रे
जात्य-२२ ब्धि ४ विश्वे-१३ द्रिनि-१० नेत्र १२ मासै: ।
महास्तवक्राद्यविधौ सितस्य
क्रमेण वक्रस्तु नवेन्दुमासै: १६ ॥”
गुरोरुदयस्य प्राक् पश्चात् शुक्रस्य तु उदयवक्रमहास्तानां प्राक् पश्चात् बाल्यवृद्धदिनज्ञानम् ।
यथा,—
“वृद्ध: पुरस्तादुदयस्य पश्चात्
बालश्च पक्षं १५ वचसां पति: स्यात् ।
एवं सित: पञ्चदिनानि वृद्धो
बालो भवेत्त्रीणि दिनानि वक्रे ॥
वृद्धस्तु पक्षं १५ भृगुजो महास्ते
बाल: पुनस्तत्र दशाहमेव ॥”
इति सिद्धान्तमञ्जरी ॥
अथ नवग्रहस्तोत्रम् ।
“जवाकुसुमसङ्काशं काश्यपेयं महाद्युतिम् ।
ध्वान्तारिं सर्व्वपापघ्नं प्रणतोऽस्मि दिवाकरम्
दधिशङ्खतुषाराभं क्षीरोदार्णवसम्भवम् ।
नमामि शशिनं भक्त्या शम्भोर्म्मुकुटभूषणम् ॥
धरणीगर्भसम्भूतं विद्युत्पुञ्जसमप्रभम् ।
कुमारं शक्तिहस्तञ्च लोहिताङ्गं नमाम्यहम्
प्रियङ्गुकलिकाश्यामं रूपेणाप्रतिमं बुधम् ।
सौम्यं सर्व्वगुणोपेतं नमामि शशिन: सुतम् ॥
देवतानामृषीणाञ्च गुरुं कनकसन्निभम् ।
वन्द्यभूतं त्रिलोकेशं तं नमामि बृहस्पतिम् ॥
हिमकुन्दमृणालाभं दैत्यानां परमं गुरुम् ।
सर्व्वशास्त्रप्रवक्तारं भार्गवं प्रणमाम्यहम् ॥
नीलाञ्जनचयप्रख्यं रविसूनुं महाग्रहम् ।
छायाया गर्भसम्भूतं वन्दे भक्त्या शनैश्चरम् ॥
अर्द्धकायं महाघोरं चन्द्रादित्यविमर्द्दकम् ।
सिंहिकाया: सुतं रौद्रं तं राहुं प्रणमाम्यहम् ॥
पलालधूमसङ्काशं ताराग्रहविमर्द्दकम् ।
रौद्रं रुद्रात्मजं क्रूरं तं केतुं प्रणमाम्यहम् ॥
व्यासेनोक्तमिदं स्तोत्रं य: पठेत् प्रयत: शुचि: ।
दिवा वा यदि वा रात्रौ शान्तिस्तस्य न संशय: ॥
ऐश्वर्य्यमतुलञ्चापि आरोग्यं पुष्टिवर्द्धनम् ।
नरनारीप्रियत्वञ्च नित्यं तस्योपजायते ॥
तस्करोऽग्निर्यमो वायुर्ये चान्ये ग्रहपीडका: ।
ते सर्व्वे प्रशमं यान्ति व्यासो ब्रूयान्न संशय: ॥”
इति श्रीव्यासभाषितं नवग्रहस्तोत्रं समाप्तम् ॥
(ग्रहाणामन्यद्विवरणन्तु ग्रहशब्दे द्रष्टव्यम् ॥*॥
नवं नूतनं ग्रहो ग्रहणं यस्येति विग्रहे नववद्धे, त्रि । यथा, रामायणे । २ । ५८ । ३ ।
“दृढं परमयन्त्रितं नवग्रहमिव द्विपम् ॥”)

नवच्छात्रः, पुं, ( नवो नूतनश्छात्रः । ) प्रथममध्ययने प्रवृत्तः । नवीनविद्यार्थी । तत्पर्य्यायः । क्रियाकारः २ । इति त्रिकाण्डशेषः ॥

नवतः, पुं, ( नूयते स्तूयते इति । नु+बाहुलकात् अतच् । ) कुथः । करिकम्बलः । इति हेमचन्द्रः । ३ । ३४४ ॥

नवतिः, स्त्री, (नव दशतः परिमाणमस्य । "पङ्क्तिविंशतित्रिंशदिति ।" ५ । १ । ५९ । इति निपातनात् साधुः । ) संख्याविशेषः । इति शब्दरत्नावली ॥ ९० नव्वइ इति भाषा ॥ ( यथा, रघुः । ३ । ६९ ।
"इति क्षितीशो नवतिं नवाधिकां
महाक्रतूनां महनीयशासनः ।
समारुरुक्षुर्दिवमायुषः क्षये
ततान सोपानपरम्परामिव ॥"
नवतिसंख्यान्विते च । यथा, मनुः । ३।१७७ ।
"वीक्ष्यान्धो नवतेः काणः षष्टेः श्वित्री शतस्य तु ।
पापरोगी सहस्रस्य दातुर्नाशयते फलम् ॥")

नवतिका, स्त्री, ( नवं नूतनं तेकते करोतीति । तिक+कः । टाप् । ) तूलिका । इति हारावली । १३७ ॥ (नवतिरेव । स्वार्थे कः । ततष्टाप् । नवतिसंख्या ॥)

नवतिशः, [ स् ] व्य, बहुनवति । नवति नवतीति वीप्सायां शस्प्रत्ययः ॥

नवती, स्त्री, (नवतिः+कृदिकारादिति वा ङीष् ।) नवतिः । इति शब्दरत्नावली ॥

नवदण्डं, क्ली, ( नवो दण्डो नव दण्डा वा यत्र । ) राज्ञां छत्रविशेषः । यथा, युक्तिकल्पतरुः ।
"मनोहरं शिकनकदण्डञ्च नवदण्डकम् ।
छत्रञ्च त्रिविधं ज्ञेयं त्रिविधानां महीभुजाम् ॥"
अस्य विवरणं छत्रशब्दे द्रष्टव्यम् ॥

नवदलं, क्ली, (नवं दलमिति कर्म्मधारयः ।) पद्मस्य केशरसमीपस्थदलम् । पद्मादीनां जटिकाकारनवपत्रम् । तत्पर्य्यायः । संवर्त्तिका २ । इत्यमरः । १ । १० । ४३ ॥ संवर्त्तिः ३ संवर्त्ती ४ । इति भरतः ॥ सामान्यनूतनपत्रम् । इति हेमचन्द्रः ॥ दलमात्रम् । इति मधुः ॥

नवदीधितिः, पुं, (नव दीधितयः किरणानि यस्य ।) मङ्गलग्रहः । इति जटाधरः ॥

नवदुर्गा, स्त्री, ( नवसंख्यान्विता दुर्गा । ) नवपत्रिका । ( यदुक्तम् ।
"कदली दाड़िमी धान्यं हरिद्रा मानकं कचु ।
विल्वाशोकौ जयन्ती च विज्ञेया नवपत्रिका ॥")
यथा, वृहन्नन्दिकेश्वरपुराणे ।
"पत्रिके नवदुर्गे त्वं महादेवमनोरमे ।
पूजां समस्तां संगृह्य रक्ष मां त्रिदशेश्वरि ! ॥"
कुमारिका १ त्रिमूर्त्तिः २ कल्याणी ३ रोहिणी ४ काली ५ चण्डिका ६ शाम्भवी ७ दुर्गा ८ भद्रा ९ इति नवनामिका कन्या । यथा,—
"मन्त्राक्षरमयीं लक्ष्मीं मातॄणां रूपधारिणीम् ।
नवदुर्गात्मिकां साक्षात् कन्यामावाहयाम्यहम् ॥"
इति निर्णयसिन्धुः ॥

नवदोला, स्त्री, ( नवा नूतना दोला । ) नूतनप्रेङ्खा । अस्या विवरणं चतुर्दोलशब्दे द्रष्टव्यम् ॥ तदारोहणदिनं यथा,—
"उग्रेन्दुमूलाहिशिवाश्विवर्ज्जं
शस्तेन्दुताराातिथिलग्नयोगे ।
विष्टिक्षमापुत्रयमाहवर्ज्जं
दोलादिकारोहणमाद्यमिष्टम् ॥"
इति समयप्रदीपः ॥

नवधा, व्य, ( नव+प्रकारे धाच् । ) नवप्रकारः । यथा,—
"आचारो विनयो विद्या प्रतिष्ठा तीर्थदर्शनम् ।
निष्ठा वृत्तिस्तपो दानं नवधा कुललक्षणम् ॥"

नवनाड़ीचक्रं, क्ली, ( नवनक्षत्रयुक्तं नाड़ीचक्रम् ।) राशौ नवनक्षत्रयुक्तवक्ररेखात्रयात्मकचक्रम् । यथा, ज्योतिषतत्त्वे ।
"जन्माद्यं कर्म्म ततोऽपि दशमं सांघातिकं षोड़शभम् ।
समुदयमष्टादशभं विनाशसंज्ञं त्रयोविंशम् ॥
नाद्यः स्युः पञ्चविंशं मानसमेवं नरः षड़्क्षः स्यात् ।
नवनक्षो नृपतिः स्वजातिदेशाभिषेकर्क्षैः ॥"

नवनी, स्त्री, ( नवं नीयते इति । नी+ड़ः । गौरादित्वात् ङीष् । ) नवनीतम् । यथा,—
"अहो हैयङ्गवीनानां नवनीनां परं मुदा ।
लड्डुकानां शर्कराणां स्वस्तिकानाञ्च यत्नतः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ४५ अध्यायः ॥

नवनीतं, क्ली, (नवं नीयतेऽनेनेति । नी+क्तः । ) गव्यविशेषः । माखन् इति ननी इति च भाषा । तत्पर्य्यायः । नवोद्धृतम् २ । इत्यमरः । २ । ९ । ५२ ॥ सरजम् ३ मन्थजम् ४ हैयङ्गवीनम् ५ । इति रत्नमाला ॥ दधिजम् ६ सारम् ७ हैयङ्गवीनकम् ८ । अस्य सामान्यगुणाः । शीतत्वम् । वर्णबलावहत्वम् । सुमधुरत्वम् । वृष्यत्वम् । संग्राहकत्वम् । कफरुचिकारकत्वम् । वातसर्व्वाङ्गशूलकासश्रमनाशित्वम् । सुखकरत्वम् । कान्तिपुष्टिप्रदत्वम् । चक्षुष्यत्वम् । सर्व्वदोषापहरत्वञ्च ॥ * ॥ नवोद्भवगव्यमाहिषनवनीतगुणाः । बालवृद्धानां प्रशस्तत्वम् । बलकारित्वम् । वातवर्द्धनत्वञ्च ॥ * ॥ माहिषनवनीतगुणाः । कषायत्वम् । मधुरत्वम् । शीतत्वम् । वृष्यत्वम् । बल्यत्वम् । ग्राहित्वम् । पित्तघ्नत्वम् । सुन्दरत्वञ्च ॥ * ॥ छागनवनीतगुणाः । क्षयकासनेत्रामयकफनाशित्वम् । बल्यत्वम् । दीपनत्वञ्च ॥ * ॥ आविकनवनीतगुणाः । हिमत्वम् । लघुत्वम् । योनिशूले कफे वाते गुदशूले हितत्वञ्च ॥ * ॥ ऐड़कनवनीतगुणाः । क्लिष्टगन्धत्वम् । शीतलत्वम् । मेधानाशित्वम् । गुरुत्वम् । पुष्टिस्थौल्यकारित्वम् । मन्दाग्निदीपनत्वञ्च ॥ * ॥ हस्तिनीनवनीतगुणाः । कषायत्वम् । शीतलत्वम् । लघुत्वम् । तिक्तत्वम् । विष्टम्भित्वम् । जन्तुपित्तकफक्रमिनाशित्वञ्च ॥ * ॥ अश्वीनवनीतगुणाः । कषायत्वम् । कफवातनाशित्वम् । चक्षुष्यत्वम् । कटुत्वम् । उष्णत्वम् । ईषद्वातापहारकत्वं [illegible] गर्द्दभीनवनीतगुणाः । कषायत्वम् । कफवा[illegible] नाशित्वम् । बल्यत्वम् । दीपनत्वम् । पाके ल[illegible] त्वम् । मूत्रदोषनाशित्वञ्च ॥ * ॥ औष्ट्रनवनी[illegible] गुणाः । पाके शीतलत्वम् । व्रणक्रिमिकफा[illegible] वातनाशित्वञ्च ॥ * ॥ नारीनवनीतगुणाः [illegible] रुच्यत्वम् । पाके लघुत्वम् । चक्षुष्यत्वम् । दी[illegible] नत्वम् । सर्व्वरोगविषनाशित्वञ्च ॥ * ॥

अथ साधारणनवनीतगुणाः ।
"शीतं रुच्यनवोद्धृतं सुमधुरं वृष्यञ्च वाताप[illegible]
कासघ्नं क्रिमिनाशनं कफहरं संग्राहि मूत्रा[illegible] पहम् ।
बल्यं पुष्टिकरं तृषार्त्तिशमनं सन्तापविच्छे[illegible]
चक्षुष्यं श्रमहारि तर्पणकरं दध्युद्भवं पित्तजित् ।
एकाहाद्युषितं प्रोक्तमुत्तरोत्तरगन्धदम् ।
अरुच्यं सर्व्वरोगाढ्यं दधिजं तद्धितं स्मृतम् ॥"
इति राजनिर्घण्टः ॥
अपि च । गव्यनवनीतगुणाः ।
"नवनीतं हितं गव्यं वृष्यं वर्णबलाग्निकृत् ।
संग्राहि वातपित्तासृक्क्षयार्शोऽर्द्दितकासनुत् ।
तद्धितं बालके वृद्धे विशेषादमृतं शिशोः ॥" * ॥
माहिषनवनीतगुणाः ।
"नवनीतं महिष्यास्तु वातश्लेष्मकरं गुरु ।
दाहपित्तश्रमहरं मेदःशुक्रविवर्द्धनम् ॥"
अथ पयसो नवनीतस्य गुणाः ।
"दुग्धोत्थं नवनीतन्तु चक्षुष्यं रक्तपित्तनुत् ।
वृष्यं बल्यमतिस्निग्धं मधुरं ग्राहि शीतलम् ॥"
अथ सद्यःसमुद्धृतनवनीतगुणाः ।
"नवनीतञ्च सद्यस्कं स्वादु ग्राहि हिमं लघु ।
मेध्यं किञ्चित् कषायाम्लमीषत्तक्रांशसंक्रमात् ॥"
अथ चिरन्तननवनीतगुणाः ।
"सक्षारकटुकाम्लत्वाच्छर्द्यर्शःकुष्ठकारकम् ।
श्लेष्मलं गुरुमेदस्यं नवनीतं चिरन्तनम् ॥"
इति भावप्रकाशः ॥
"नवनीतं नवं वृष्यं ग्राहि वर्णबलाग्निकृत् ।
चक्षुष्यं बृंहणं स्निग्धं ग्रहण्यर्शोविकारनुत् ॥
क्षीरोत्थितं हिमं ग्राहि रक्तपित्ताक्षिरोगनुत् ॥"
इति राजवल्लभः ॥

नवनीतकं, क्ली, ( नवनीतात् कायति प्रकाशते इति । कै+कः ।) घृतम् । इति राजनिर्घण्टः । ( नवनीत+स्वार्थे कन् । नवनीतम् । यथा, हारीते चिकित्सितस्थाने १० अध्याये ।
"सर्पिः प्रयुक्तं नवनीतकञ्च ॥"
पर्य्यायोऽस्य यथा,—
"म्रक्षणं सरजं हैयङ्गवीनं नवनीतकम् ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे द्वितीये भागे ॥)

नवनीतधेनुः, स्त्री, ( नवनीतेन कृता धेनुः । मध्यपदलोपिकर्म्मधारयः । ) दानार्थकृतनवनीतमयधेनुविशेषः । यथा,—
"नवनीतमयीं धेनुं शृणु राजन् ! प्रयत्नतः ।
यां श्रुत्वा सर्व्वपापेभ्यो मुच्यते नात्र संशयः ॥
गोमयेनानुलिप्तायां भूमौ गोचर्म्ममात्रतः ।

...मस्तेव तस्योपरि च धारयेत् ॥
...नवनीतस्य प्रस्थमाचस्य धारयेत् ।
...चतुर्थभागस्य तस्या उत्तरतो न्यसेत् ॥
कृत्वा विधानेन च राजसिंह-
सुवर्णशृङ्गी सुखुरी च कार्य्या ।
नेत्रे च तस्या मणिमौक्तिकैस्तु
कृत्वा तथान्यच्च गुडेन जिह्वाम् ॥
ओष्ठौ च पुष्पैश्च फलैश्च दन्ता:
प्रकल्पा साक्षाच्च सितैश्च सर्वै: ॥
नवनीतस्तनीं राजन्निक्षुपादां प्रकल्पयेत् ।
ताम्रपृष्ठीं कांस्यदोहां दर्भरोमतस्तथैवम् ॥
स्वर्णशृङ्गीं रौप्यखुराम् पञ्चरत्नसमन्विताम् ।
चतुर्भिस्तिलपात्रैस्तु संयुतां सर्व्वतो दिश: ॥
आच्छाद्य वस्त्रयुग्मेन गन्धपुष्पैरलङ्कृताम् ।
दिक्षु दीपांश्च प्रज्वाल्य ब्राह्मणाय निवेदयेत् ॥
वेदवेदाङ्गविदुषे आहिताग्निर्निर्जितात्मवान् ।
सन्तापाः एव जप्याः सर्व्वधेनुषु ये स्मृताः ॥
पुरा देवासुरैः सर्व्वैः सागरस्य तु मन्थने ।
उत्पन्नं दिव्यमन्दं नवनीतमिदं शुभम् ॥
आप्यायनञ्च भूतानां नवनीत ! नमोऽस्तु ते ।
इत्युच्चार्य्य तां दद्यात् ब्राह्मणाय कुटुम्बिने ॥
धेनुञ्च दत्त्वा सुरदां सोपधानां
नयेद्गृहं विप्रवर्य्यस्य भूयः ।
हविष्यमेव सरसञ्चोपभुङ्क्ता
तिष्ठेद्दिनं धेनुदश्चापि विप्रः ॥
यः प्रपश्यति तां धेनुं दीयमानां नरोत्तम ।
सर्व्वपापविनिर्मुक्तः शिवसायुज्यतां व्रजेत् ॥
पितृभिः पूर्व्वजैः सार्द्धं भविष्यद्भिश्च मानवः ।
विष्णुलोकं व्रजत्याशु यावदाभूतसंप्लवम् ॥
य इदं शृणुयाद्भक्त्या श्रावयेद्वापि मानवः ।
सर्व्वपापविशुद्धात्मा विष्णुलोके महीयते ॥”
इति वराहपुराणम् ॥

नवपाठकः, पुं, (नवो नूतनः पाठकोऽध्यापकः ।) नूतनाध्यापकः । इति सिद्धान्तकौमुदी ॥

नवफलिका, स्त्री, (नवं फलं यस्याः । कापि अत इत्वम् ।) नवम् । नवजातरजोऽङ्गना । इति मेदिनी । के, २३० ॥

नवमः, त्रि, (नवन्+“तस्य पूरणे डट् ।” ५ । २ । ४८ । इति डट् । ततो “नान्तादसंख्यादेर्मट् ।” ५ । २ । ४९ । इति डटो मट् ।) नवानां पूरणः । इति व्याकरणम् ॥ नवम इत्यादि भाषा ॥

नवमल्लिका, स्त्री, (नवा नूतना सुख्या वा मल्लिका ।) नवमालिका । इति शब्दरत्नावली ॥ (यथा, प्रबोधचन्द्रोदये । १ । १२ ।
“रम्यं हर्म्म्यतलं नवाः सुनयना गुञ्जद्द्विरेफा लताः ।
प्रोन्मीलन्नवमल्लिकाः सुरभयो वाताः सचन्द्रा निशाः ॥”)

नवमालिका, स्त्री, (नवा नूतना मालिका । मल्लिकापुष्पम् ।) नवमल्लिकापुष्पम् । वासन्ती नेवारी इति लोके । नेयालि, इति नेवारीयार इति च भाषा । तत्पर्य्यायः । अतिमोदा २ सेव्या ३ शीतभीरु ४ सप्तला ५ सुकुमारी ६ सुरभिः ७ सुचिमल्लिका ८ सुगन्धा ९ शिखरिणी १० नवाली ११ । इति राजनिर्घण्टः ॥ भद्रवल्ली १२ देवलता १३ । इति शब्दचन्द्रिका ॥ गन्धनिलया १४ मालिका १५ नवमल्लिका १६ । इति शब्दरत्नावली ॥ तस्या गुणाः । अतिशैत्यत्वम् । सुरभित्वम् । सर्व्वरोगहरत्वञ्च । इति राजनिर्घण्टः ॥ सप्तामगुणाः ।
“नेपाली कथिता सद्भिः सप्तला नवमालिका ।
वासन्ती शीतला लघ्वी तिक्ता दोषत्रयापहा ॥”
इति भावप्रकाशः ॥

नवमी, स्त्री, (नवम+टित्वात् ङीप् ।) तिथिविशेषः । सा चन्द्रस्य नवमकलाक्रियारूपा । शुक्लपक्षे ९ कृष्णपक्षे २४ पञ्जिकाकारसङ्केतेन एतदङ्कबोधिता ॥ अथ नवमीव्यवस्था । “सा चाष्टमीयुता ग्राह्या युग्मात् । भविष्ये ।
‘मासैश्चतुर्भिर्यैत् पुण्यं विधिना पूज्य चण्डिकाम् ।
तत् फलं लभते वीर नवम्यां कार्त्तिकस्य च ॥’
तथा भविष्ये ।
‘माघे मासि तु या शुक्ला नवमी लोकपूजिता ।
महानन्देति सा प्रोक्ता सदानन्दकरी नृणाम् ॥
स्नानं दानं जपो होमो देवार्च्चनमुपोषणम् ।
सर्व्वं तदक्षयं प्रोक्तं यदस्यां क्रियते नरैः ॥’
तथा कालिकापुराणम् ।
‘नवम्यां नववर्षाणि राजन् ! पिष्टाशनो भवेत् ।
तस्य तुष्टा भवेद्गौरी सर्व्वकामप्रदा शुभा ॥’
अद्येत्यादि नवम्यामित्यारभ्य नव वर्षाणि यावत् प्रतिशुक्लनवम्यां पिष्टकभोजननिरतिव्रतमिति सङ्कल्पे विशेषः । सर्व्वकामप्रदगौरीतोषः फलम् ।” इति तिथितत्त्वम् ॥ श्रीरामनवमीव्यवस्था तच्छब्दे द्रष्टव्या ॥*॥ इयं दुर्गातिथिः । तत्र तस्याः पूजा कर्त्तव्या । यथा,—
ब्रह्मोवाच ।
“इयं देवी वरारोहा यातु शैलं हिमाचलम् ।
तत्र यूयं सुराः सर्व्वे गत्वा नन्दत माचिरम् ॥
नवम्याञ्च सदा पूज्या इयं देवी समाधिना ।
वरदा सर्व्वलोकानां भविष्यति न संशयः ॥
नवम्यां यश्च पिष्टाशी भविष्यति हि मानवः ।
नारी वा तस्य सम्पन्नं भविष्यति मनोगतम् ॥”
इति वराहपुराणम् ॥
कार्त्तिकशुक्लनवम्यां जगद्धात्रीपूजाप्रमाणानि यथा,—
“प्रपूजयेज्जगद्धात्रीं कार्त्तिके शुक्लपक्षके ।
दिनोदये च मध्याह्ने सायाह्ने नवमेऽहनि ॥”
इति मायातन्त्रे १७ पटलः ॥
“कुम्भराशिगते चन्द्रे नवम्यां कार्त्तिकस्य च ।
उपस्कन्दोदितो भानुर्दुर्गामाराध्य यत्नवान् ॥
पुत्त्रारोग्यधनं लेभे लोकसाक्षित्वमेव च ।
तां तिथिं प्राप्य मनुजः शनिभौमदिने यदि ।
प्रपूजयेज्जगद्दुर्गां धर्म्मकामार्थमोक्षदाम् ॥”
इति कात्यायनीतन्त्रे ७८ पटलः ॥
“कार्त्तिके शुक्लपक्षे तु त्रेतायाः प्रथमेऽहनि ।
त्रिसन्ध्यं पूजयेद्देवीं दुर्गां सम्पत्प्रवृद्धये ॥”
इत्युत्तरकामाख्यातन्त्रे ११ पटलः ॥
अथ नवमीजातफलम् । यथा, कोष्ठीप्रदीपे ।
“विरोधकर्त्ता सुजनैरगम्यः
परापकारार्थमतिः कुशीलः ।
आचारहीनः कृपणः कठोरः
प्रसूतिकाले नवमी यदि स्यात् ॥”

नवयौवना, स्त्री, (नवं यौवनं यस्याः ।) युवती । तत्पर्य्यायः । दिक्करी २ । इति हारावली । १५४ ॥ आढुनी ३ कुटिली ४ । इति शब्दमाला ॥

नवरङ्गः, स्त्री, (नव रङ्गा यस्मात् ।) कायस्थसुखप्रकुलीनानां पञ्चदानचतुर्भेदात्मककुलविशेषः । तद्यथा,—
“समाने प्रथमं दानं द्वितीयञ्च कनिष्ठके ।
षड्भ्रातरि तृतीयञ्च मध्यमेऽपि चतुर्थकम् ॥
तिष्ठोऽपि प्रथमं दानं कुर्य्यादेतद्विधानतः ।
ज्येष्ठायां जन्मनि समे कनिष्ठे च द्वितीयकम् ॥
तृतीयं जन्ममध्यमे तिष्ठोऽपि चतुर्थकम् ।
नवरङ्गमिति प्रोक्तं सुखानां हि महागुणम् ॥”
इति कुलाचार्य्यकारिका ॥

नवरत्नं, क्ली, (नवानां रत्नानां समाहारः ।) नवप्रकारमण्यः । तद्यथा,—
“मुक्तामाणिक्यवैदूर्य्यगोमेदान् वज्रविद्रुमौ ।
पद्मरागं मरकतं नीलञ्चेति यथाक्रमात् ॥”
इति तन्त्रसारः ॥
(यथा च,—
“वज्रञ्च मौक्तिकञ्चैव माणिक्यं नीलमेव च ।
तथा मरकतं श्रेयं महारत्नानि पञ्चधा ॥
गोमेदः पद्मरागश्च वैदूर्य्यञ्च प्रवालकम् ।
चत्वारि उपरत्नानि नवरत्नमिदं स्मृतम् ॥”
“रत्नं गारुत्मतं पुष्पं रागो माणिक्यमेव च ।
इन्द्रनीलञ्च गोमेदस्तथा वैदूर्य्यमित्यपि ॥
मौक्तिकं विद्रुमश्चेति रत्नान्युक्तानि वै नव ॥
रत्नं हीरा । गारुत्मतं पान्ना । माणिक्यं पद्मरागः । इन्द्रनीलः नीला ।”इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥) नवग्रहदोषशान्त्यै धार्य्याणि नव रत्नानि यथा,—
“वैदूर्य्यं धारयेत् सूर्य्ये नीलञ्च सुधालाञ्छने ।
आवनेयेऽपि माणिक्यं पद्मरागं शशाङ्कजे ॥
गुरौ मुक्तां भृगौ वज्रं शनौ नीलं विदुर्बुधाः ।
राहौ गोमेदकं धार्य्यं केतौ मरकतन्तथा ॥”
इति दीपिका ॥
विक्रमादित्यराजसभास्थनवसंख्यकपण्डिताः । यथा,—
“धन्वन्तरिक्षपणकामरसिंहशङ्कु-
वेतालभट्टघटकर्परकालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य ॥”
इति नवरत्नम् ॥
नव श्लोकाः । यथा,—
“मित्रमर्थो तथा नीतिर्धर्म्मकार्पण्यमर्खका ।

स्त्रीणां विद्वान् तथोत्खातान् नवरत्नमिदं क्रमात् ॥
मित्रं स्वच्छतया रिपुं नयबलैर्लुब्धं धनैरीश्वरं कार्य्येण द्विजमादरेण युवतीं प्रेम्णा समैर्बान्धवान् ।
अत्युग्रं स्तुतिभिर्गुरुं प्रणतिभिर्मूर्खं कथाभिर्बुधं विद्याभी रसिकं रसेन सकलं शीलेन कुर्य्याद्वशम् ॥ १ ॥
अर्थी लाघवमुच्छ्रितो निपतनं कामातुरो लाञ्छनं
लुब्धोऽकीर्त्तिमसङ्गरः परिभवं दुष्टोऽन्य दोषे रतिम् ।
निःस्वो वञ्चनमुन्मना विकलतां शोकाकुलः संशयं
दुर्व्वाणप्रियतां दुरोदरवशः प्राप्नोति कष्टं मुहुः ॥ २ ॥
नीतिर्भूमिभुजां नतिर्गुणवतां ह्रीरङ्गनानां धृतिर्दम्पत्योः शिशवो गृहस्य कविता बुद्धेः प्रसादो गिराम् ।
लावण्यं वपुषः स्मृतिः सुमनसां शान्तिर्द्विजस्य क्षमा
शक्तस्य द्रविणं गृहाश्रमवतां स्वास्थ्यं सतां मण्डनम् ॥ ३ ॥
धर्म्मः प्रागेव चिन्त्यः सचिवमतिगतिर्भावनीया सदैव
ज्ञेयं लोकानुवृत्तं वरचरनयनैर्मण्डलं वीक्षणीयम् ।
प्रच्छाद्यौ रागरोषौ मृदुपरुषगुणौ योजनीयौ च काले
आत्मा यत्नेन रक्ष्यो रणशिरसि पुनः सोऽपि नापेक्षणीयः ॥ ४ ॥
कार्पण्येन यशः क्रुधा गुणचयो दम्भेन सत्यं क्षुधा
मर्य्यादा व्यसनैर्धनानि विपदा स्थैर्य्यं प्रमादैर्द्विजः ।
पैशुन्येन कुलं मदेन विनयो दुश्चेष्टया पौरुषं
दारिद्र्येण जनादरो ममतया चात्मप्रकाशो हतः ॥ ५ ॥
मूर्खो शान्ततपस्वी क्षितिपतिरलसो मत्सरी धर्म्मशीलो
दुःस्थो मानी गृहस्थः प्रभुरतिकृपणः शास्त्रविद्धर्म्महीनः ।
आज्ञाहीनो नरेन्द्रः सुचिरपि सततं यः परान्नोपभोगी
वृद्धो रोगी दरिद्रः स च युवतिपतिर्धिग्विडम्बप्रकारम् ॥ ६ ॥
स्त्रीणां यौवनमर्थिनामनुगमो राज्ञां प्रतापः सतां
सत्यं स्वल्पधनस्य सञ्चितिरसद्वृत्तस्य वागडम्बरः ।
साधारस्य मनोदमः परिणतेर्विद्या कुलस्यैकता
सेनाया धनसन्ततेर्गुणचयः शान्तेर्विवेको बलम् ॥ ७ ॥
विद्वान् संसदि याचकः परवशो मानी दरिद्रो गृही
वित्ताढ्यः कृपणः सुखी परवशो वृद्धो न तीर्थाश्रितः ।
राजा दुःसचिवः प्रियः कुलभवो मूर्खः पुमान् स्त्रीजितः
वेदान्ती हतसत्क्रियः किमपरं हास्यास्पदं भूतले ॥ ८ ॥
उत्खातान् प्रतिरोपयन् कुसुमितांश्चिन्वन् शिशून् वर्द्धयन्
प्रोत्तुङ्गान् नमयन् नतान् समुदयन् विश्लेषयन् संहतान् ।
तीव्रान् कण्टकिनो बहिर्नियमयन् म्लानान् मुहुः सेचयन्
मालाकार इव प्रयोगनिपुणो राजा चिरं नन्दतु ॥ ९ ॥)

नवरात्रं, क्ली, ( नवानां रात्रीणां समाहारः । तत् साधनत्वेनास्त्यस्येति अच् । ) आश्विनशुक्लप्रतिपदादिनवमीपर्य्यन्तनवदिनकर्त्तव्यदुर्गाव्रतविशेषः । तस्यारम्भः । देवीपुराणे डामरतन्त्रे च देवीवचः ।
"अमायुक्ता न कर्त्तव्या प्रतिपत् पूजने मम ।
मुहूर्त्तमात्रा कर्त्तव्या द्वितीयादिगुणान्विता ॥"
मार्कण्डेयदेवीपुराणयोः ।
"पूर्व्वविद्धा तु या शुक्ला भवेत् प्रतिपदाश्विनी ।
नवरात्रव्रतं तस्यां न कार्य्यं शुभमिच्छता ॥"
अत्रोपवासादिकमुक्तं हेमाद्रौ भविष्ये ।
"एवञ्च विन्ध्यवासिन्यां नवरात्रोपवासतः ।
एकभक्तेन नक्तेन तथैवायाचितेन च ॥
पूजनीया जनैर्देवी स्थाने स्थाने पुरे पुरे ।
स्नातैः समुदितैर्हृष्टैर्ब्राह्मणैः क्षत्रियैर्नृपैः ॥
वैश्यैः शूद्रैर्भक्तियुक्तैर्म्लेच्छैरन्यैश्च मानवैः ॥"
मदनरत्ने देवीपुराणेऽपि ।
"कन्यासंस्थे रवौ शक्र ! शुक्लामारभ्य नन्दिकाम् ।
अयाची ह्यथवैकाशी नक्ताशी वाथ वायुदः ॥
भूमौ शयीत चामन्त्र्य कुमारीर्भोजयेन्मुदा ।
वस्त्रालङ्कारदानैश्च सन्तोष्याः प्रतिवासरम् ॥
बलिञ्च प्रत्यहं दद्यादोदनं मांसमाषवत् ।
त्रिकालं पूजयेद्देवीं जपस्तोत्रपरायणः ॥"
स्कान्दे ।
"मासि चाश्वयुजे शुक्ले नवरात्रे विशेषतः ।
संपूज्य नवदुर्गाञ्च नक्तं कुर्य्यात् समाहितः ॥
नवरात्राभिधं कर्म्म नक्तव्रतमिदं स्मृतम् ।
तिथिवृद्धौ तिथिह्रासे नवरात्रमपार्थकम् ॥
अष्टरात्रे न दोषोऽयं नवरात्रतिथिक्षयः ॥" ॥
तत्र पूजाविधिः । सा च जयन्तीत्यादिमन्त्रेण नवार्णमन्त्रेण वा कार्य्या । यथा । सङ्कल्पं विधाय घटं संस्थाप्य तत्र देवीमावाह्य षोडशोपचारैः पूजयित्वा माषभक्तबलिं कुष्माण्डादिबलिं वा निवेदयेत् ॥ ॥ ततः कुमारीपूजा । यदुक्तं हेमाद्रौ स्कान्दे ।
"एकैकां पूजयेत् कन्यामेकवृद्ध्या तथैव च ।
द्विगुणं त्रिगुणं वापि प्रत्येकं नवकन्तु वा ॥"
तथा,—
"नवभिर्लभते भूमिमैश्वर्य्यं द्विगुणेन तु ।
एकवृद्ध्या लभेत् क्षेममेकैकेन श्रियं लभेत् ॥"
अथ कुमारीनिर्णयः ।
"एकवर्षा तु या कन्या पूजार्थे तां विवर्ज्जये
गन्धपुष्पफलादीनां प्रीतिस्तस्या न विद्यते ॥"
तेन द्विवर्षमारभ्य दशवर्षपर्य्यन्तम् । कुमारि[illegible]
त्रिमूर्त्तिः २ कल्याणी ३ रोहिणी ४ काल[illegible]
चण्डिका ६ शाम्भवी ७ दुर्गा ८ सुभद्रा ९ [illegible]
नवनामभिस्ताः पूजनीयाः । आसामावा[illegible]
मन्त्रः । यथा,—
"मन्त्राक्षरमयीं लक्ष्मीं मातॄणां रूपधारिणी[illegible]
नवदुर्गात्मिकां साक्षात् कन्यामावाहयाम्य[illegible]
एवमभ्यर्च्चनं कुर्य्यात् कुमारीणां प्रयत्नतः ।
कञ्चुकेनैव वस्त्रेण गन्धपुष्पाक्षतादिभिः ॥
नानाविधैर्भक्ष्यभोज्यैर्भोजयेत् पायसादिभिः ।
तासां त्याज्यत्वमाह ।
"ग्रन्थिस्फुटितशीर्णाङ्गीं रक्तपूयव्रणाङ्किताम्
जात्यन्धां केकरां काणीं कुरूपां तनुरोमशा[illegible]
सन्त्यजेद्रोगिणीं कन्यां दासीगर्भसमुद्भवाम्[illegible]
तासां जातिविशेषे फलविशेषो यथा,—
"ब्राह्मणीं सर्व्वकार्य्ये च जयार्थे नृपवंशजाम्
लाभार्थे वैश्यवंशोत्थां सुतार्थे शूद्रवंशजाम्
दारुणे चान्त्यजातानां पूजयेद्विधिना नरः ।
अत्र वेदचण्डीपाठ उक्तः । रुद्रयामले ।
"एवं चतुर्व्वेदविदो विप्रान् सर्व्वान् प्रसादये[illegible]
तेषाञ्च वरणं कार्य्यं वेदपारायणाय वै ॥"
तथा,—
"एकोत्तराभिवृद्ध्या तु नवमीं यावदेव हि[illegible]
चण्डीपाठं जपेच्चैव जापयेद्वा विधानतः ॥"
अत्राश्वतोऽश्वपूजनमुक्तम् । मदनरत्ने दे[illegible]
पुराणे ।
"अश्वयुक्शुक्लप्रतिपत्स्वातियोगे शुभे दिने ।
पूर्व्वमुच्चैःश्रवा नाम प्रथमं श्रियमाहरत् ।
तस्मात् साश्वैर्नरैस्तत्र पूज्योऽसौ श्रद्धया स[illegible]
पूजनीयाश्च तुरगा नवमीं यावदेव हि ॥
शान्तिः स्वस्त्ययनं कार्य्यं तथा तेषां दिने [illegible]
धान्यं भल्लातकं कुष्ठं वचा सिद्धार्थकास्तथा
पञ्चवर्णेन सूत्रेण ग्रन्थिन्तेषान्तु बन्धयेत् ।
वायव्यैर्वारुणैः सौरैः शाक्रैर्मन्त्रैः सवैष्णवैः ॥
वैश्वदेवैस्तथाग्नेयैर्होमः कार्य्यो दिने दिने ॥"
तत्र गजपूजापि । कल्पतरौ ।
"ज्येष्ठायोगे पुरा तत्र गजाश्चाष्टौ महाबला[illegible]
पृथिवीमवहन् पूर्व्वं सशैलवनकाननाम् ॥
कुमुदैरावतौ पद्मः पुष्पदन्तोऽथ वामनः ।
सुप्रतीकोऽञ्जनो नीलस्तस्मात्तांस्तत्र पूजयेत् ॥"
अथ प्रतिपदादिषु विशेषो दुर्गाभक्तितरङ्गिण्यां
भविष्ये ।
"केशसंस्कारद्रव्याणि प्रदद्यात् प्रतिपद्दिने ।
पट्टतोर्लं द्वितीयायां केशसंयमहेतवे ॥
दर्पणञ्च तृतीयायां सिन्दूरालक्तकन्तथा ।

मधुपर्कं चतुर्थ्यान्तु तिलकं नेत्रमञ्जनम् ॥
पञ्चम्यामङ्गरागञ्च शक्त्यालङ्करणानि च ।
षष्ठ्यां विल्वतरौ बोधं सायंसन्ध्यासु कारयेत् ॥
सप्तम्यां प्रातरानीय गृहमध्ये प्रवेशयेत् ।
उपोषणमथाष्टम्यामालम्भश्चा तु पूजनम् ॥
नवम्यामुग्ररूपायाः पूजां कुर्य्याद्बलिन्तथा ।
संपूज्योपोषणं कुर्य्यात् दशम्यां शावरोत्सवैः ॥
अनेन विधिना यस्तु देवीं प्रीणयते नरः ।
स्कन्दवत् पालयेद्देवी तं पुत्त्रधनकीर्त्तिभिः ॥”
आश्विनशुक्लपक्षे मूलनक्षत्रे सरस्वतीस्थापनम् ।
यथोक्तं निर्णयामृते देवीपुराणे ।
“मूलेषु स्थापनं देव्याः पूर्व्वाषाढ़ासु पूजनम् ।
उत्तरासु बलिं दद्यात् श्रवणेन विसर्ज्जयेत् ॥”
रुद्रयामलेऽपि ।
“मूलऋक्षे सुराधीश पूजनीया सरस्वतीम् ।
पूजयेत् प्रत्यहं देव यावद्वैष्णवऋक्षकम् ॥
नाध्यापयेन्न च लिखेन्नाधीयीत कदाचन ।
पुस्तके स्थापिते देवि! विद्याकामो द्विजोत्तमः ॥”
स्त्रीणाञ्च नवरात्रे ताम्बूलचर्व्वणादिकं न निषिद्धम् । तदुक्तं व्रतहेमाद्रौ गारुड़े ।
“गन्धालङ्कारताम्बूलपुष्पमालानुलेपनम् ।
उपवासे न दुष्यन्ति दन्तधावनमञ्जनम् ॥”
एतत् सभर्तृकोपवासविषयम् ॥ * ॥ हेमाद्रौ ।
आश्विनमाघचैत्रश्रावणमासचतुष्टये छाया-दश्यादिपञ्चदशरात्रव्रतमभिधाय । अथवा नव-रात्रञ्च सप्तपञ्चत्रिकं दिवा । इत्युक्तम् । देवी-पुराणे ।
“नवरात्रव्रतेऽशक्तस्त्रिरात्रञ्चैकरात्रकम् ।
व्रतञ्चरति यो भक्तस्तस्मै दास्यामि वाञ्छितम् ॥”*
( यथाच देवीभागवते । ३ । २६—२७ ।
“शृणु राजन्! प्रवक्ष्यामि नवरात्रव्रतं शुभम् ।
शरत्काले विशेषेण कर्त्तव्यं विधिपूर्व्वकम् ॥
वसन्ते च प्रकर्त्तव्यं तथैव प्रेमपूर्व्वकम् ।
द्वावृतू यमदंष्ट्राख्यौ नूनं सर्व्वजनेषु वै ॥
शरद्वसन्तनामानौ दुर्गमौ प्राणिनामिह ।
तस्माद्यत्नादिदं कार्य्यं सर्व्वत्र शुभमिच्छता ॥
द्वावेव सुमहाघोरावृतू रोगकरौ नृणाम् ।
वसन्तशरदावेव जननाशकरावुभौ ॥
तस्मात्तत्र प्रकर्त्तव्यं चण्डिकापूजनं बुधैः ।
चैत्राश्विने शुभे मासि भक्तिपूर्व्वं नराधिप ! ॥
अमावस्याञ्च सम्प्राप्य सम्भारं कल्पयेच्छुभम् ।
हविष्यञ्चाशनं कार्य्यमेकभुक्तन्तु तद्दिने ॥
मण्डपस्तु प्रकर्त्तव्यः समे देशे शुभे स्थले ।
हस्तषोड़शमानेन स्तम्भध्वजसमन्वितः ॥
गौरमृद्गोमयाभ्याञ्च लेपनं कारयेत्ततः ।
तन्मध्ये वेदिका शुभ्रा कर्त्तव्या च समा स्थिरा ॥
चतुर्हस्ता च हस्तोच्चा पीठार्थं स्थानमुत्तमम् ।
तोरणानि विचित्राणि वितानञ्च प्रकल्पयेत् ॥
रात्रौ द्विजानथामन्त्र्य देवीतत्त्वविशारदान् ।
आचारनिरतान् दान्तान् वेदवेदाङ्गपारगान् ॥
प्रतिपद्दिवसे कार्य्यं प्रातःस्नानं विधानतः ।
नद्यां नदे तड़ागे वा वाप्यां कूपे गृहेऽथ वा ॥

नवरा

प्रातर्नित्यं पुरः कृत्वा द्विजानां वरणं ततः ।
अर्घ्यपाद्यादिकं सर्व्वं कर्त्तव्यं मधुपूर्व्वकम् ॥
वस्त्रालङ्करणादीनि देयानि च स्वशक्तितः ।
वित्तशाठ्यं न कर्त्तव्यं विभवे सति कर्हिचित् ॥
विप्रैः सन्तोषितैः कार्य्यं सम्पूर्णं सर्व्वथा भवेत् ।
नव पञ्च त्रयश्चैको देव्याः पाठे द्विजाः स्मृताः ॥
वरयेद्ब्राह्मणं शान्तं पारायणकृते सदा ।
स्वस्तिवाचनकं कार्य्यं वेदमन्त्रविधानतः ॥
वेद्यां सिंहासनं स्थाप्य क्षौमवस्त्रसमन्वितम् ।
तत्र स्थाप्याम्बिका देवी चतुर्हस्तायुधान्विता ॥
रत्नभूषणसंयुक्ता मुक्ताहारविराजिता ।
दिव्याम्बरधरा सौम्या सर्व्वलक्षणसंयुता ॥
शङ्खचक्रगदापद्मधरा सिंहे स्थिता शिवा ।
अष्टादशभुजा वापि प्रतिष्ठाप्या सनातनी ॥
अर्च्चाभावे तथा यन्त्रं नवार्णमन्त्रसंयुतम् ।
स्थापयेत् पीठपूजार्थं कलसं तत्र पार्श्वतः ॥
पञ्चपल्लवसंयुक्तं वेदमन्त्रैः सुसंस्कृतम् ।
सुतीर्थजलसम्पूर्णं हेमरत्नैः समन्वितम् ॥
पार्श्वे पूजार्थसम्भारान् परिकल्प्य समन्ततः ।
गीतवादित्रनिर्घोषान् कारयेन्मङ्गलाय वै ॥
तिथौ हस्तान्वितायाञ्च नन्दायां पूजनं वरम् ।
प्रथमे दिवसे राजन्! विधिवत् कामदं नृणाम् ॥
नियमं प्रथमं कृत्वा पश्चात् पूजां समाचरेत् ।
उपवासेन नक्तेन चैकभक्तेन वा पुनः ॥
करिष्यामि व्रतं मातर्नवरात्रमनुत्तमम् ।
साहाय्यं कुरु मे देवि! जगदम्ब! ममाखिलम् ॥
यथाशक्ति प्रकर्त्तव्यो नियमो व्रतहेतवे ।
पश्चात् पूजा प्रकर्त्तव्या विधिवन्मन्त्रपूर्व्वकम् ॥
चन्दनागुरुकर्पूरैः कुसुमैश्च सुगन्धिभिः ।
मन्दारकरणाशोकचम्पकैः करवीरकैः ॥
मालतीब्रह्मकापुष्पैस्तथा विल्वदलैः शुभैः ।
पूजयेज्जगतां धात्रीं धूपैर्दीपैर्विधानतः ॥
फलैर्नानाविधैरर्घ्यं प्रदातव्यञ्च तत्र वै ।
नारिकेलैर्मातुलिङ्गैर्दाड़िमीकदलीफलैः ॥
नारङ्गैः पनसैश्चैव तथा पूगफलैः शुभैः ।
अन्नदानं प्रकर्त्तव्यं भक्तिपूर्व्वं नराधिप ! ॥
नैवेद्यानि विचित्राणि सर्व्वान्नसंयुतानि च ।
ओदनं पायसञ्चैव पूपांश्च वटकांस्तथा ॥
मांसाशनं ये कुर्व्वन्ति तैः कार्य्यं पशुहिंसनम् ।
महिषाजवराहाणां बलिदानं विशिष्यते ॥
देव्यग्रे निहता यान्ति पशवः स्वर्गमव्ययम् ।
न हिंसा पशुजा तत्र निघ्नतां तत्कृतेऽनघ ! ॥
अहिंसा याज्ञिकी प्रोक्ता सर्व्वशास्त्रविनिर्णये ।
देवतार्थे विसृष्टानां पशूनां स्वर्गतिर्ध्रुवा ॥
होमार्थञ्चैव कर्त्तव्यं कुण्डञ्चैव त्रिकोणकम् ।
स्थण्डिलं वा प्रकर्त्तव्यं त्रिकोणं मानतः शुभम् ॥
त्रिकालं पूजनं नित्यं नानाद्रव्यैर्मनोहरैः ।
गीतवादित्रनृत्यैश्च कर्त्तव्यश्च महोत्सवः ॥
नित्यं भूमौ च शयनं कुमारीणाञ्च पूजनम् ।
वस्त्रालङ्करणैर्दिव्यैर्भोजनैश्च सुधामयैः ॥
एकैकां पूजयेन्नित्यमेकवृद्ध्या तथा पुनः ।
[illegible]
द्विगु

नवरा

विभवस्यानुसारेण कर्त्तव्यं पूजनं किल ।
वित्तशाठ्यं न कर्त्तव्यं राजन्! भक्तिमखे सदा ॥
एकवर्षा न कर्त्तव्या कन्या पूजाविधौ नृप ! ।
परमज्ञा तु भोगानां गन्धादीनाञ्च बालिका ॥
कुमारिका तु सा प्रोक्ता द्विवर्षा या भवेदिह ।
त्रिमूर्त्तिश्च त्रिवर्षा च कल्याणी चतुरब्दिका ॥
रोहिणी पञ्चवर्षा च षड्वर्षा कालिका स्मृता ।
चण्डिका सप्तवर्षा स्यादष्टवर्षा च शाम्भवी ॥
नववर्षा भवेद्दुर्गा सुभद्रा दशवार्षिकी ।
अत ऊर्द्ध्वं न कर्त्तव्या सर्व्वकार्य्यविगर्हिता ॥
एभिश्च नामभिः पूजा कर्त्तव्या विधिसंयुता ।
तासां फलानि वक्ष्यामि नवानां पूजने सदा ॥
कुमारी पूजिता कुर्य्याद्दुःखदारिद्र्यनाशनम् ।
शत्रुक्षयं धनायुष्यबलवृद्धिं करोति वै ॥
त्रिमूर्त्तिपूजनादायुस्त्रिवर्गस्य फलं भवेत् ।
धनधान्यागमश्चैव पुत्त्रपौत्त्रादिवृद्धयः ॥
विद्यार्थी विजयार्थी च राज्यार्थी यश्च पार्थिवः ।
सुखार्थी पूजयेन्नूनं कल्याणीं सर्व्वकामदाम् ॥
रोहिणीं रोगनाशाय पूजयेद्विधिवन्नरः ।
कालिकां शत्रुनाशार्थं पूजयेद्भक्तिपूर्व्वकम् ॥
ऐश्वर्य्यधनकामश्च चण्डिकां परिपूजयेत् ।
पूजयेच्छाम्भवीं नित्यं नृप ! संमोहनाय च ॥
दुःखदारिद्र्यनाशाय संग्रामे विजयाय च ।
क्रूरशत्रुविनाशार्थं तथोग्रकर्म्मसाधने ॥
दुर्गाञ्च पूजयेद्भक्त्या परलोकसुखाय च ।
वाञ्छितार्थस्य सिद्ध्यर्थं सुभद्रां पूजयेत् सदा ॥
श्रीरस्त्विति च मन्त्रेण पूजयेद्भक्तितत्परः ।
श्रीयुक्तमन्त्रैरथवा वीजमन्त्रैरथापि वा ॥
कुमारस्य च तत्त्वानि या सृजत्यपि लीलया ।
कादीनपि च देवांस्तां कुमारीं पूजयाम्यहम् ॥
सत्त्वादिभिस्त्रिमूर्त्तिर्या तैर्हि नानास्वरूपिणी ।
त्रिकालव्यापिनी शक्तिस्त्रिमूर्त्तिं पूजयाम्यहम् ॥
कल्याणकारिणी नित्यं भक्तानां पूजिताऽनिशम् ।
पूजयामि च तां भक्त्या कल्याणीं सर्व्वकामदाम् ॥
रोहयन्ती च वीजानि प्राग्जन्मसञ्चितानि वै ।
या देवी सर्व्वभूतानां रोहिणीं पूजयाम्यहम् ॥
काली कालयते सर्व्वं ब्रह्माण्डं सचराचरम् ।
कल्पान्तसमये या तां कालिकां पूजयाम्यहम् ॥
चण्डिकां चण्डरूपाञ्च चण्डमुण्डविनाशिनीम् ।
तां चण्डपापहरिणीं चण्डिकां पूजयाम्यहम् ॥
अकारणात् समुत्पत्तिर्यन्मयैः परिकीर्त्तिता ।
यस्यास्तां सुखदां देवीं शाम्भवीं पूजयाम्यहम् ॥
दुर्गात् त्रायति भक्तं या सदा दुर्गार्त्तिनाशिनी ।
दुर्ज्ञेया सर्व्वदेवानां तां दुर्गां पूजयाम्यहम् ॥
सुभद्राणि च भक्तानां कुरुते पूजिता सदा ।
अभद्रनाशिनीं देवीं सुभद्रां पूजयाम्यहम् ॥
एभिर्मन्त्रैः पूजनीयाः कन्यकाः सर्व्वदा बुधैः ।
वस्त्रालङ्करणैर्माल्यैर्गन्धैरुच्चावचैरपि ॥”
“हीनाङ्गीं वर्ज्जयेत् कन्यां कुष्ठयुक्तां व्रणाङ्किताम् ।
गन्धस्फुरितहीनाङ्गीं विशालकुलसम्भवाम् ॥
जात्यन्धां केकरां काणीं कुरूपां बहुरोमशाम् ।
[illegible]रोगिणीं कन्यां रक्तपुष्पादिनाङ्किताम् ॥

दासीगर्भसमुद्भूता गोलका कम्यकोद्भवाम् ।
वर्ज्जनीयाः सदा चैताः सर्व्वपूजादिकर्म्मसु ॥
अरोगिणीं सुरूपाङ्गीं सुन्दरीं व्रणवर्ज्जिताम् ।
एकवंशसमुद्भूतां कन्यां सम्यक् प्रपूजयेत् ॥
ब्राह्मणी सर्व्वकार्य्येषु जयार्थे नृपवंशजा ।
लाभार्थे वैश्यवंशोत्था चेमे च शूद्रवंशजा ॥
ब्राह्मणैर्ब्राह्मजाः पूज्याः राजन्यैर्ब्रह्मवंशजाः ।
वैश्यैस्त्रिवर्गजाः पूज्याश्चतस्रः पादसम्भवैः ॥
कारुभिश्चैव वंशोत्था यथायोग्यं प्रपूजयेत् ।
नवरात्रविधानेन भक्तिपूर्व्वं सदैव हि ॥
अष्टम्यां नियतं पूजां कर्त्तुं चैन्नवरात्रके ।
अष्टम्याश्च विशेषेण कर्त्तव्यं पूजनं सदा ॥
पुराष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी ।
प्रादुर्भूता महाघोरा योगिनीकोटिभिः सह ॥
अतोऽष्टम्यां विशेषेण कर्त्तव्यं पूजनं सदा ।
नानाविधोपचारैश्च गन्धमाल्यानुलेपनैः ॥
पायसैरामिषैर्होमैर्ब्राह्मणानाञ्च भोजनैः ।
फलपुष्पोपहारैश्च तोषयेच्छगदम्बिकाम् ॥
उपवासे ह्यशक्तानां नवरात्रव्रते पुनः ।
उपोषणत्रयं प्रोक्तं यथोक्तं फलदं नृप ! ॥
सप्तम्याञ्च तथाष्टम्यां नवम्यां भक्तिभावतः ।
त्रिरात्रकरणात् सर्व्वं फलं भवति पूजनात् ॥
सम्पूर्णं तद्व्रतं प्रोक्तं विप्राणाञ्चैव भोजनैः ।
व्रतानि यानि चान्यानि दानानि विविधानि च ॥
नवरात्रव्रतस्यास्य नैव तुल्यानि भूतले ।
धनधान्यप्रदं नित्यं सुखसन्तानवृद्धिदम् ॥
आयुरारोग्यदञ्चैव स्वर्गदं मोक्षदं तथा ।
विद्यार्थी वा धनार्थी वा पुत्त्रार्थी वा भवेन्नरः ।
तेनेदं विधिवत् कार्य्यं व्रतं सौभाग्यदं शिवम् ॥
विद्यार्थी सर्व्वविद्यां वै प्राप्नोति व्रतसाधनात् ।
राज्यभ्रष्टो नृपो राज्यं समवाप्नोति सर्व्वदा ॥
पूर्व्वजन्मनि यैर्नूनं न कृतं व्रतमुत्तमम् ।
ते व्याधिनो दरिद्राश्च भवन्ति पुत्त्रवर्ज्जिताः ॥
वन्ध्या च या भवेन्नारी विधवा धनवर्ज्जिता ।
अनुमा तत्र कर्त्तव्या नेयं कृतवती व्रतम् ॥
नवरात्रव्रतं प्रोक्तं न कृतं येन भूतले ।
स कथं विभवं प्राप्य मोदतेऽत्र तथा दिवि ॥
रक्तचन्दनसंमिश्रैः कोमलैर्विल्वपत्रकैः ।
भवानी पूजिता येन स भवेन्नृपतिः क्षितौ ॥"*॥)
अथ नवरात्रपारणानिर्णयः । सा च दशम्यां
कार्य्या ॥ * ॥ दशम्यां विशेषस्तु भार्गवार्च्चन-
दीपिकायां भविष्ये ।
"शमीयुक्तं जगन्नाथं भक्तानामभयङ्करम् ।
अर्च्चयित्वा शमीवृक्षमर्च्चयेच्च ततः पुनः ॥"
शमीमन्त्रः । स्कान्दे हेमाद्रौ गोपथब्राह्मणे ।
"अमङ्गलानां शमनीं शमनीं दुष्कृतस्य च ।
दुःखप्रनाशिनीं धन्यां प्रपद्येऽहं शमीं शुभाम् ॥"
तथा भविष्ये ।
"शमी शमयते पापं शमी शत्रुविनाशिनी ।
अर्ज्जुनस्य धनुर्द्धारी रामस्य प्रियवादिनी ॥
करिष्यमाणा या यात्रा यथाकालं सुखं मया ।
तत्र निर्व्विघ्नकर्त्री त्वं भव श्रीरामपूजिते ॥"

अथ बलनीराजनम् । काश्यपः । तत्र मन्त्रः ।
"चतुरङ्गं बलं मह्यं निररिष्टं व्रजत्विह ।
सर्व्वत्र विजयो मेऽस्तु त्वत्प्रसादात् सुरेश्वरि ॥"
गौड़निबन्धे ज्योतिषि ।
"कृत्वा नीराजनं राजा बलवृद्ध्यै यथाक्रमम् ।
शोभनं खञ्जनं पश्येत् जलगोष्ठस्य सन्निधौ ॥"
इति निर्णयसिन्धुः ॥
**नवरात्रिकं**, क्ली, ( नवरात्रेण निर्वृत्तम् । नव-
रात्र + "तेन निर्वृत्तम् ।" ५ । १ । ७९ । इति
ठक् । ) नवरात्रम् । यथा, भविष्योत्तरे ।
"आश्विने शुक्लपक्षे तु कर्त्तव्यं नवरात्रिकम् ।
प्रतिपदादिक्रमेणैव यावच्च नवमी भवेत् ॥"
**नववधूः**, स्त्री, ( नवा नूतना वधूः । ) नवोढ़ा ।
नवीना भार्य्या । यथा,—
"असम्भवद्भनरसा शतालिगणसेविता ।
कथं न सह्यते राजन् ! भूमिर्नववधूरिव ॥"
इति हर्षकायम् ॥ * ॥
नववध्वागमनदिनं यथा । तत्र अष्टमदशम-
द्वादशवत्सचतुर्थवर्षाणि निषिद्धानि । ( यदुक्तं
ज्योतिषे ।
"श्वश्रूं हन्त्यष्टमे वर्षे श्वशुरञ्च दशाब्दिके ।
संप्राप्ते द्वादशे वर्षे पतिं हन्ति द्विरागमे ॥
विवाहमासि प्रथमं वध्वा नागमनं यदि ।
तदा सर्व्वमिदं चिन्त्यं युग्माब्दादि विचक्षणैः ॥")
मासा मार्गफाल्गुनवैशाखा विहिताः । पक्षः
शुक्लः । विहितनक्षत्राणि पुष्यस्वातीहस्ताधनि-
ष्ठोत्तराषाढ़ोत्तरफल्गुन्युत्तरभाद्रपदारेवतीमृग-
शिरोरोहिणीपुनर्व्वसुपूर्व्वाषाढ़ाः । वाराः वृह-
स्पतिबुधशुक्रसोमानाम् । तिथयो यात्राप्रकर-
णोक्ताः । चन्द्रक्षणवारवेलादिकशूलादीन् परि-
त्यज्य ताराचन्द्रशुद्धौ कालशुद्धौ च कार्य्यम् ॥
इति ज्योतिषम् ॥ अपि च ।
"स्वातीमूलपुनर्व्वसूत्तरकराश्चित्रानुराधाश्विनी
रोहिण्यः श्रवणा द्विरागमविधौ पुष्या धनिष्ठा
तथा ।
भर्त्तुर्गोचरशोभने दिनपतौ काले पुनः शोभने
कुम्भाजालिरवौ शुभे शुभतिथौ वाराहियाचो-
दिते ॥
वैशाखे मार्गशीर्षे हि फाल्गुने हि शुभे रवौ ।
नववध्वागमं कुर्य्यादन्यमासे विवर्ज्जयेत् ॥"
इति मधुरेशचक्रवर्त्तिकृतसारसंग्रहः ॥
( अस्य द्विरागमनशब्दे द्रष्टव्यम् ॥ )
**नववध्वागमनं**, क्ली, ( नववध्वा आगमनम् । )
नवोढ़ायाः प्रथमपतिगृहगमनम् । तद्दिनं यथा,
"कौशुक्लाजघटालिसंयुतरवौ काले विशुद्धे भृगुं
सन्त्यज्य प्रतिलोमगं शुभदिने यात्राप्रवेशोदिते ।
त्यक्त्वाहस्तु निरंशकं नववधूयात्राप्रवेशौ पतिः
कुर्य्यादेकपुरादिषु प्रतिभृगोर्नैवास्ति दोषं बुधाः ॥
एकग्रामे चतुःशाले दुर्भिक्षे राष्ट्रविप्लवे ।
पतिना नीयमानायाः पुरः शुक्रो न दुष्यति ॥"
इति दीपिका ॥
अन्यत् नववधूशब्दे द्रष्टव्यम् ॥

**नववरिका**, स्त्री, ( नवो वरोऽस्यास्या इति । नव-
वर + ठन् । ) नवोढ़ा । इति हारावली । १५४ ॥
**नववल्लभं**, क्ली, ( नवानां नवीनानां वल्लभम् । )
दाहागुरु । इति राजनिर्घण्टः ॥ ( नवो वल्लभो
यस्य । ) नवीनप्रिये, त्रि ॥
**नववस्त्रं**, क्ली, ( नवं वस्त्रम् । ) नवीनवसनम् ।
नूतन कापड़ इति भाषा ॥ तत्पर्य्यायः । अना-
हतम् २ आहतम् ३ अहतम् ४ तन्त्रकम् ५
निष्प्रवाणि ६ । इति शब्दरत्नावली ॥ नवा-
म्बरम् ७ इत्यमरः । २ । ६ । ११२ ॥
अथ नववस्त्रपरिधानदिनम् ।
तत्र वाराः बुधवृहस्पतिशुक्राणाम् । नक्षत्राणि
रोहिणीमृगशिरोमघानुराधाधनिष्ठापुष्यवि-
शाखाहस्ताश्विन्युत्तरफल्गुन्युत्तराषाढ़ोत्तरभा-
द्रपदाश्विनीस्वातीपुनर्व्वसुरेवत्यः ॥
"धनिष्ठा रोहिणी हस्ता विशाखा चोत्तरात्रयम् ।
ज्येष्ठा पुनर्व्वसुस्वाती चित्राश्विनी च रेवती ॥"
इति सारसंग्रहः ।
अपि च ।
"धातानुराधवसुपुष्यविशाखहस्ता-
चित्रोत्तराश्विपवनादितिरेवतीषु ।
लक्ष्मार्त्तजीवबुधशुक्रदिनेतुसवादौ
धार्य्यं नवं वसनमीश्वरविप्रतुष्टौ ॥
शोर्णं रवौ सततमम्बुभिरार्द्रमिन्दौ
भौमे शुचं बुधदिने च भवेद्धनाय ।
ज्ञानाय मन्त्रिणि भृगौ प्रियसङ्गमाय
मन्दे मराय च नवाम्बरधारणं स्यात् ॥"
इति समयप्रदीपः ॥
**नवशायकः**, पुं, ( नवविधः शायक इव । ) नवशा
गोपादिजातिविशेषः । नवशाक इति भाषा ॥
यथा, पराशरसंहितायाम् ।
"गोपमाली तथा तैली तन्त्री मोदकवारजी ।
कुलालः कर्म्मकारश्च नापितो नवशायकाः ॥"
**नवसूतिका**, स्त्री, ( नवा सूतिः प्रसवो यस्याः ।
कप् । ) धेनुः । इत्यमरः । २ । ९ । ७१ ॥ नूतन-
प्रसवायाञ्च ॥
**नवांशः**, पुं, ( नवमोऽंशः । ) मेषादिद्वादशलग्नानां
नवभागः । यथा, दीपिकायाम् ।
"चराणां स्वत्रिकोणानां तच्चराद्या नवांशकाः ।"
"मेषकेशरिधनुषां मेषाद्यास्तु नवांशकाः ।
वृषकन्याजगाणाञ्च मकरादिनवांशकाः ॥
तुलामिथुनकुम्भानां तुलाद्याः समुदाहृताः ।
कर्किवृश्चिकमीनानां कर्कटाद्या नवांशकाः ॥
स्वनवांशस्तु राशीनां वर्गोत्तम इति स्मृतः ॥"
इति ज्योतिस्तत्त्वम् ॥
( नवभागमात्रम् ॥ )
**नवाङ्गा**, स्त्री, ( नवमिव अङ्गं यस्याः । टाप् । )
कर्कटशृङ्गी । इति राजनिर्घण्टः ॥ ( नवविधेन
प्रयोग अङ्गं यस्येति विग्रहे । ) पाचनविशेषे,
क्ली । यथा, वैद्यके ।
"विश्वाब्दवाव्द्भूनिम्बैः पथ्यामृतोशमन्वितैः ।
कृतः कषायो हन्त्याशु वातपित्तोद्भवं ज्वरम् ॥"

न्नं, क्ली, ( नवं नूतनं अन्नम् । ) नूतनान्नम् । न्निमित्तश्राद्धम् । यथा,—

वराह उवाच ।

कृत्वा यो नवान्नानि मम कर्म्मपरायणः ।
भुञ्जन्ति ये नवान्नानि परैः प्रदत्तानि केन च ॥
नाहं लोभेन पिच्छामि पुनर्भोगेन सुन्दरि ! ।
प्रथममेव कर्त्तव्यं मम कर्म्मपरायणैः ॥
त्तो भागवतो भूत्वा नवान्नं यो न कारयेत् ।
पतरस्तस्य नाश्नन्ति वर्षाणि दश पञ्च च ॥
दत्वा यस्तु भुञ्जीत नवान्नानि कथञ्चन ।
तस्य धर्म्मो विद्येत एवमेतन्न संशयः ॥
यश्च ते प्रवक्ष्यामि येन तच्च प्रशाम्यते ।
यश्चित्तं महाभागे ! मम भक्तसुखावहम् ॥
उपवासं त्रिरात्रन्तु तत एकेन वा पुनः ।
प्राकाशशयनं कृत्वा चतुर्थेऽह्नि शुध्यति ॥
ग्रं तत्र विधिं कृत्वा उदिते च दिवाकरे ।
पञ्चगव्यं ततः पीत्वा शीघ्रं मुच्येत किल्बिषात् ॥
। एतेन विधानेन प्रायश्चित्तं समाचरेत् ।
सर्वसङ्गान् परित्यज्य मम लोकाय गच्छति ॥"

इति नवान्नभोजनापराधप्रायश्चित्तम् ॥ इति वराहपुराणम् ॥*॥ तस्य निषिद्धदिनं यथा,—

'सूर्य्ये चैव विशाखगे स्मरतिथौ पापे त्रिजन्मा-
स्थिते
नन्दामन्दमहीजकार्यदिवसे पौषे मधौ
कार्त्तिके ।
वैधृत्यादिविशिष्टेषु विष्णुशयने कृष्णे शशिन्यष्टमे
श्राद्धं भोजनकं नवान्नविहितं पुत्रार्थनाश-
प्रदम् ॥"

सूर्य्ये चैव विशाखगे मार्गशीर्षस्य विंशति-
दिवसाधिकप्रथमदिनत्रयावस्थिते सूर्य्ये । स्मर
तिथौ त्रयोदश्याम् । पापे पञ्चमतारात्रये ।
उग्राः पूर्व्वात्रयमघाभरण्यः । अहिरश्लेषा ।
शिव आर्द्रा ।
'ज्येष्ठाश्लेषार्द्रगे सूर्य्ये न्यूनेनाग्निहतामके ।
नवान्नभोजनं श्राद्धं जन्मचन्द्रे तिथौ न च ॥
अश्लेषाकृत्तिकाज्येष्ठामूलाजपदकेषु च ।
भृगुभौमदिने रिक्ततिथौ नाद्यान्नवौदनम् ॥"
तस्य विधिर्यथा,—
"प्राश्नीयाद्दधिसंयुक्तं नवं विप्राभिमन्त्रितम् ॥"
दीपिकायाम् ।
"भेष्वादिद्विशिवान्त्येषु विभौमशनिवासरे ।
अन्नप्राशनवत् कुर्य्यान्नवान्नफलभक्षणम् ॥"
अधिकञ्च ।
"हस्ता स्वातिपुनर्व्वसू मृगशिरःपुष्यानुराधा
तथा
मूलायां श्रवणे च रेवतिधने चित्रामखे वारुणे ।
नाशे शुक्रविशाखयोश्च तुरगे सौम्येन्दुजीवार्कके
चन्द्रे शोभनतारके च शुभदं श्राद्धं नवान्नैः
कृतम् ॥"
भोजराजः ।
"नक्षा विष्णुहवश्वती शशधरो मार्त्तण्डपौष्णा-
दितौ.

मैत्रे चैव विशाखवायुधनभे मूलाश्विवह्नौ
तथा ।
शुक्रे वारुण कुम्भके शुभदिने श्राद्धं नवं शस्यते
नन्दाभार्गवभूमिजेषु न भवेच्छ्राद्धं नवान्नो-
द्भवम् ॥"

इति ज्योतिस्तत्त्वम् ॥'

आग्निमाधिकारे ।
"शुक्लपक्षे नवं धान्यं ज्ञात्वा पक्वं सुशोभनम् ।
गच्छेत् पैत्री विधानेन गीतवाद्यपुरःसरः ॥"

इत्यादिना ब्रह्मपुराणेन श्राद्धविधानात् ॥
अपि च ।
"शरद्वसन्तयोः केचिन्नवयज्ञं प्रचक्षते ।
धान्यपाकवशादन्ये श्यामाको वनिनः स्मृतः ॥"

इति मलमासतत्त्वम् ॥

नवाम्बरं, क्ली, (नवं नूतनमम्बरं वस्त्रम् ।) नूतन-
वस्त्रम् । इत्यमरः । २ । ६ । ११२ ॥ ( यथा,
समयप्रदीपे ।
"शीर्णं रवौ सततमम्बुभिरार्द्रमिन्दौ
भौमे शुचं बुधदिने च भवेद्धनाय ।
ज्ञानाय मन्त्रिणि भृगौ प्रियसङ्गमाय
मन्दे मलाय च नवाम्बरधारणं स्यात् ॥")
नवार्च्चिः, [ स् ] पुं, ( नव अर्च्चींषि यस्य । )
मङ्गलग्रहः । इति त्रिकाण्डशेषः ॥ ( क्ली,
नवं नूतनं अर्च्चिः ।) नवशिखा ॥ (नव अर्च्चींषि
इति विग्रहे तु नवसंख्यकार्किरणार्थे बहु-
वचनम् ॥ )
नवाहः, पुं, ( नवं अहः । समासे टच् । ) नव-
दिनम् । प्रतिपत्तिथिः । इति विश्वः ॥
नविका, स्त्री, ( नवोऽस्त्यस्या इति । नव+ठन्+
टाप् । नविं नवं कायति इति वा ।) नवशब्द-
युक्ता । इति स्त्रीत्वप्रकरणे दुर्गादासः ॥
नवीनं, त्रि, ( नवमेव । नव+"नवस्य न्वादेशो-
त्नप्तनप्खाश्च प्रत्यया वक्तव्याः ।"५।४।२५।
इत्यस्य वार्त्तिकोक्त्या खः न्वादेशश्च ।) नूतनम् ।
इत्यमरः । ३ । १ । ७७ ॥ ( यथाह गदाधरः ।
"गदाधरविनिर्म्मिता विविधदुर्गतर्काटवी
नवीनपदवीमदं वितनुतां सतां धीमताम् ॥" )
नवोढ़ा, स्त्री, (नवा नूतना ऊढ़ा) नवविवाहिता ।
तत्पर्य्यायः । वधूः २ जनी ३ । इति जटाधरः ॥
नववरिका ४ दिव्वरी ५ नवयौवना ६ । इति
हारावली । १५४ ॥ मुग्धानायिकाभेदः । तस्या
लक्षणं यथा ।"लज्जाभयपराधीनरतिर्नवोढ़ा ॥'
तस्या उदाहरणं यथा, रसमञ्जर्य्याम् ।
"बलान्नीता पार्श्वं मुखमनुमुखं नैव कुरुते
धुनानामव्याजं क्षिपति वदनं चुम्बनविधौ ।
हृदि न्यस्तं हस्तं क्षिपति गमनारोपितमना
नवोढ़ा वोढ़ारं रमयति च सन्तापयति च ॥"
नवोदकं, क्ली, (नवमुदकम् ।) नूतनजलम् । यथा,
मिताक्षरायां स्मृतिः ।
"काले नवोदकं शुद्धं न पातव्यञ्च तत् त्र्यहम् ।
अकाले तु दशाहानि पीत्वा नाद्याद्दशाहनिशम् ॥"

इति शुद्धितत्त्वम् ॥

तन्निमित्तकं श्राद्धं कर्त्तव्यम् । यथा, शातातपः ।
"नवोदके नवान्ने च गृहप्रच्छादने तथा ।
पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च ॥
तस्माद्दद्यात् सदा युक्तो विद्वत्सु ब्राह्मणेषु च ॥
नवोदके वर्षोपक्रमे । आर्द्रागते रवाविति यावत् ।
'आर्द्रादितो विशाखान्तं रविचारेण वर्षति ।'
इति नवयज्ञमासभूतात् ॥
'प्राविट्काले समायाते रौद्रनक्षत्रगते रवौ ।
नाडीवेधसमायोगे जलयोगं वदाम्यहम् ॥'

इति ब्रह्मयामलाच्च ॥

रौद्रमार्द्रा ॥*॥ नवोदकश्राद्धस्य सावकाश-
त्वात् त्रयोदश्यादिकनिषिद्धमाह दीपिकायाम् ।
'त्रयोदशीं जन्मदिनञ्च नन्दां
जन्मर्क्षतारां सितवासरञ्च ।
त्यक्त्वा चरीज्येन्दुकरान्त्यमैत्र-
ध्रुवेषु च श्राद्धविधानमिष्टम् ॥'
सितवासरं शुक्रवारम् । ऋक्षं राशिः । चर्य्या-
दयः श्रवणपुष्यस्वातिमृगशिरोहस्तारेवत्यनुराधोत्तरा
त्रिसयरोहिण्यः । कृष्णपक्षे चेन्नवोदकश्राद्ध-
कालस्तदोभयोः श्राद्धयोस्तन्त्रात् सिद्धिः ।" इति
तिथ्यादितत्त्वम् ॥
नवोद्धृतं, क्ली, ( नवमुद्धृतम् । ) नवनीतम् । इत्य-
मरः । २ । ९ । ५२ ॥ नूतनोत्थिते, त्रि ॥
नव्यं, त्रि, (नूयते स्तूयते इति । णु स्तुतौ+"अचो
यत् ।" ३ । १ । ९७ । इति यत् । यद्वा, नव-
मेव । "शाखादिभ्यो यत् ।" ५ । ३ । १०३ ।
इति स्वार्थे यत् ।) नूतनम् । इत्यमरः ।३।१।७७॥
( यथा, ऋग्वेदे । १ । ५५ । १६ ।
"नवा नवा युवतयो भवन्तीर्महद्देवानामसुर-
त्वमेकम् ॥"
स्तुत्यम् । यथा, ऋग्वेदे । ५ । १३ । ३ ।
"कया नो अग्न ऋतयन्नृतेन
भुवो नवेदा उचथस्य नव्यः ॥" )
स्त्री, स्तुतिः । णु ल स्तुतौ भावे अल् नवशब्दात्
स्वार्थे ये निष्पन्नः ॥
नव्यः, पुं, ( नूयते इति । णु+यत् ।) रक्तपुनर्नवा ।
इति राजनिर्घण्टः ॥
नशाकः, पुं, ( नश्यतीति । नश नाशे+"आकः
स्वजादेः स तु कित् ।" ४।१३३। इति उणादि-
कोषटीकाधृतसूत्रात् आकः ।) काकभेदः ।
इत्युणादिकोषः ॥
नशिता, [ तृ ] त्रि, नाशाश्रयः । इति नशधातोः
कर्त्तरि तृच्प्रत्ययनिष्पन्नः ॥
नष्टप्रकृतिका, स्त्री, ( नष्टा प्रकृतिः सन्तति-
र्यस्याः । कप् । ततष्टाप् । ) मृतवत्सा । तत्-
पर्य्यायः । नष्टः २ मृतपुत्रिका ३ । इति हेम-
चन्द्रः । ३ । १९५ ॥
नश्वरः, त्रि, ( नश्यतीति । नश+"इण्नशजि-
सर्त्तिभ्यः क्वरप् ।"३ । २ । १६३ । इति क्वरप् ।)
नाशप्रतियोगी । ध्वंसयोग्यः । इति नशधातोः
कर्त्तरि वरप्रत्ययनिष्पन्नः ॥ ( यथा, भागवते ।
५ । १८ । ४ ।

"वदन्ति विश्वं कवयः स्म नश्वरं
पश्यन्ति चाध्यात्मविदो विपश्चितः ।
तथापि मुह्यन्ति तवाज मायया
सुविस्मितं कृत्यमजं नतोऽस्मि तम् ॥" )

नष्टः, त्रि, ( नश + क्तः । ) अदर्शनविशिष्टः । तत्पर्य्यायः । तिरोहितः २ । इत्यमरः । २ । ८ । ११२ ॥ ( यथा, पञ्चतन्त्रे । १ । ३७८ ।
"नष्टं मृतमतिक्रान्तं नानु शोचन्ति पण्डिताः ।
पण्डितानाञ्च मूर्खाणां विशेषोऽयं यतः स्मृतः ॥"
अधमः । यथा, चाणक्ये । ८० ।
"असन्तुष्टा द्विजा नष्टाः सन्तुष्टा इव पार्थिवाः ।
सलज्जा गणिका नष्टा निर्लज्जास्तु कुलस्त्रियः ॥"
प्रचलितः । यथा, हरिवंशे । १७४ । १२३ ।
"तृतीये तु मुहूर्त्ते सा नष्टा बाणपुरात् तदा ।
सखीप्रियं चिकीर्षन्ती पूजयन्ती तपोधनान् ॥"
पलायितः । यथा, रत्नावल्याम् ।
"नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपाम् ॥"
निष्फलः । यथा, मनुः । ३ । १८० ।
"नष्टं देवलके दत्तं अप्रतिष्ठन्तु वार्द्धुषौ ॥" )
नाशाश्रयः । यथा । "योगो नष्टः परन्तप ॥"
इति श्रीभगवद्गीता ॥ नाशे, क्ली ॥

नष्टचन्द्रः, पुं, ( नष्टो दुष्टश्चन्द्रः । ) सौरभाद्रस्योभयपक्षे चतुर्थ्यामुदितचन्द्रः । यथा,—
"नष्टचन्द्रो न द्रष्टव्यो भाद्रे मासि सितासिते ।
चतुर्थ्यामुदितोऽशुद्धः प्रतिषिद्धो मनीषिभिः ॥
चन्द्रस्ताराापहरणं कलङ्कमतिदुष्करम् ।
तस्मै ददाति हे नन्द ! कामतो यदि पश्यति ॥
अकामतो नरो दृष्ट्वा मन्त्रपूतं जलं पिबेत् ।
तदा शुद्धो भवेत् सद्यो निष्कलङ्को महीतले ॥
'सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः ।
सुकुमारक ! मारोदीस्तव ह्येष स्यमन्तकः ॥'
इति मन्त्रेण पूतञ्च जलं साधुः पिबेद्ध्रुवम् ॥
पुरा तारा गुरोः पत्नी नवयौवनसंयुता ।
रत्नभूषणभूषाढ्या रत्नकञ्चाम्बरा सती ॥
सुश्रोणी सुस्मिता रम्या सुन्दरी सुमनोहरा ।
अतीवकबरीरम्या मालतीमाल्यभूषिता ॥
सिन्दूरबिन्दुना सार्द्धं चारुचन्दनबिन्दुभिः ।
कस्तूरीबिन्दुनाधश्च भालमध्यस्थलोज्ज्वला ॥
रत्नेन्द्रसारनिर्म्माणक्वणन्मञ्जीररञ्जिता ।
सुवक्रलोचना श्यामा सुचारुकज्जलोज्ज्वला ॥
सुचारुचारुमुक्ताभदन्तपङ्क्तिमनोहरा ।
रत्नकुण्डलयुग्मेन चारुगण्डस्थलोज्ज्वला ॥
कामिनीष्वतुला बाला गजेन्द्रमन्दगामिनी ।
सुकोमला चन्द्रमुखी कामाधारा च कामुकी ॥
स्वर्गमन्दाकिनीतीरे स्नाता स्निग्धाम्बरा वरा ।
ध्यायन्ती गुरुपादं सा स्वगृहं गमनोन्मुखी ॥
दृष्ट्वा तस्याश्च सर्व्वाङ्गमनङ्गबाणपीड़ितः ।
भाद्रे चतुर्थ्याञ्चन्द्रश्च जहार चेतनं व्रज ! ॥
स्नानं चणेन संप्राप्य रथस्थो रसिको बली ।
रथमारोहयामास करे धृत्वा च तारकाम् ॥
कामोन्मत्तः कामिनीन्तां समाश्लिष्य चुचुम्ब सः ।
शृङ्गारं कर्त्तुमुद्यन्तं तमुवाच गुरुप्रिया ॥

तारकोवाच ।
त्यज मां त्यज मां चन्द्र ! सुरेषु कुलपांसक ! ।
गुरुपत्नीं ब्राह्मणीञ्च पतिव्रतपरायणाम् ॥
गुरुपत्नीसङ्गमने ब्रह्महत्याशतं लभेत् ।
पुत्रस्त्वं तव माताहं धैर्य्यं कुरु सुरेश्वर ! ॥
धिक् त्वां श्रुत्वा सुरगुरुर्भस्मीभूतं करिष्यति ।
गुरुपत्नी विप्रपत्नी यदि सा च पतिव्रता ॥
ब्रह्महत्यासहस्रञ्च तस्याः सङ्गमने लभेत् ।
पुत्राधिकश्च शिष्यश्च प्रियो मत्स्वामिनो भवान् ॥
स्वधर्म्मं रक्ष पापिष्ठ ! मामेव मातरं त्यज ।
दास्यामि स्त्रीवधं तुभ्यं यदि मां संग्रहीष्यसि ॥
विलङ्घ्य तारावचनं ताञ्च सम्भोक्तुमुद्यतम् ।
शशाप तारा कोपेन निष्कामा सा पतिव्रता ॥
राहुग्रस्तो घनग्रस्तः पापयुक्तो भवान् भव ।
कलङ्की यक्ष्मणा ग्रस्तो भविष्यसि न संशयः ॥
चन्द्रमेवं तदा तूर्णं कामदेवं शशाप सा ।
तेजस्विना केनचित्त्वं भस्मीभूतो भविष्यसि ॥
चन्द्रस्तारां गृहीत्वा च त्वत्वा च रमणं व्रज ! ।
क्रोड़े निधाय प्रययौ रुदन्तीं तां शुचिस्मिताम् ॥
निर्जने निर्जने रम्ये शैले शैले मनोहरे ।
तत्र दृष्ट्वासुरगुरुं बलिगेहात् समागतम् ॥
प्रणम्य सर्व्वमुक्ता च चन्द्रस्तं शरणं ययौ ।
शुक्रस्तं बोधयामास वचनं नीतियुक्तितः ॥

शुक्र उवाच ।
शृणु वत्स ! प्रवक्ष्यामि गुरवे देहि तारकाम् ।
गुरुपत्नीं मातृपरां त्यज मद्वचनाद्विधो ! ॥
कुरु पापक्षयोपायं निवृत्तिस्तु महाफला ।
सतीनां गुरुपत्नीनां ग्रहणेन बलेन च ॥
ब्रह्महत्यासहस्राणां पातकं लभते जनः ।
कुम्भीपाके पच्यते च यावद्वै ब्रह्मणः शतम् ॥
बृहस्पतिश्च तेजस्वी त्वां भस्मीकर्त्तुमीश्वरः ।
न चकार कृपालुश्चेत् प्रियशिष्येण हेतुना ॥
उतथ्यपत्नीं दृष्ट्वा स पुरा रेमे सकामतः ।
तत्पतेः शापतोऽस्यैव परग्रस्ता प्रिया सती ॥"
"एतस्मिन्नन्तरे ब्रह्मा बोधयित्वा कविं विभुः ।
समानीय निशानाथं तारकासहितं व्रज ! ।
शम्भोश्च चरणाम्भोजे चकार च समर्पणम् ॥
शम्भुस्तं प्रीतियुक्तश्च वासयामास वक्षसि ॥
दत्त्वा तस्मै पादरेणुं निष्पापञ्च चकार सः ।
दत्त्वा तन्मस्तके हस्तं कृपालुरभयं ददौ ॥
क्षीरोदे स्नापयित्वा च प्रायश्चित्तेन शङ्करः ।
चकार चन्द्रं निष्पापं ब्रह्मणा सहितः शुचिम् ॥
योगेन चन्द्रं योगीन्द्रो द्विखण्डञ्च चकार सः ।
ररक्षार्द्धं ललाटे च सोऽप्यर्द्धं ब्रह्मणः पुरः ॥
अतएव महादेवो बभूव चन्द्रशेखरः ।
मृगाङ्को लज्जितस्तत्र कलङ्की देवसंसदि ॥
लज्जया च स्वयोगेन देहत्यागञ्चकार सः ।
तच्छरीरञ्च क्षीरोदे ब्रह्मणा च समर्पितम् ॥
वरोदाचिन्त्य कृपया शुचा क्षीरोदधेस्तटे ।
अचेष्टस्तु जलं तस्य पपात च जले व्रज ! ॥
भस्माद्बभूव चन्द्रश्च निष्पापो देवसंसदि ।
ब्रह्मा च भगवान् शम्भुरभिषेकञ्चकार तम् ॥
उवाच च महादेवो निर्भयं देवसंसदि ।

महादेव उवाच ।
स्वस्थानं गच्छ पुत्र ! त्वं कुरु स्वविषयं सुरा
पश्चात् श्वशुरशापेन यक्ष्मग्रस्तो भविष्यसि ।
अयं पतिव्रताशापं कर्त्तुमीशश्च को भुवि ।
ममाशिषा यक्ष्मणश्च प्रतिकारो भविष्यति ।
यस्माद्भाद्रचतुर्थ्यान्तु गुरुपत्नी च्युता कृता ।
तस्मात्तस्मिन्दिने वत्स ! पापदृश्यो युगे युगे
मा भुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपि ।
अवश्यमेव भोक्तव्यं कृतं कर्म्म शुभाशुभम् ।
देहत्यागेन हे वत्स ! कर्म्मभोगो न नश्यति
प्रायश्चित्तान्न सन्देहो स्वल्पमेव भविष्यति ।
तारापहरणं वत्स ! कलङ्कश्चन्द्रमण्डले ।
मृगाङ्कितं विलग्नञ्च भविष्यति युगे युगे ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे । ८०-८१ अ

नष्टचेष्टता, स्त्री, ( नष्टा चेष्टा यस्य । तस्य भाव तल् । ) प्रलयः । इत्यमरः । १ । ७ । ३३ शोकादिना परिस्पन्दनाशो नष्टचेष्टता त प्रलयः प्रलीयतेऽनेन प्रलयः ली ङ ष अो श्ल अल् । प्रलयः सात्त्विको भावः मूर्च्छेत्यर्थ इति सर्व्वस्वम् ॥ हर्षशोकादिभिरशेषचेष्ट नाशः प्रलय इत्यर्थः । इति भरतः ॥ ईह शून्यता च ॥

नष्टाग्निः, पुं, ( नष्टः प्रमादात् निर्व्वाणमा अग्निर्यस्य । ) यस्याग्निहोत्रिणः प्रमादादि कारणान्तरेण वा अग्निर्नष्टो निर्व्वाणः स्या सः । तत्पर्य्यायः । वीरहा २ । इत्यमरः । २ । ७ । ५३ ॥

नष्टाप्तिसूत्रं, क्ली, ( नष्टस्य चौरेणापहृतस्य वस् आप्तिः तस्याः सूत्रमिव । ) किञ्चित्प्रापणी नीतद्रव्यम् । तत्पर्य्यायः । लोप्त्रम् २ । इ हारावली । १५८ ॥

नष्टेन्दुकला, स्त्री, ( नष्टा इन्दुकला यस्याम् । कुहूः । इत्यमरः । १ । ४ । ६ ॥

नसा, स्त्री, ( नस् + वा टाप् । यद्वा, नसते कुटि लतां प्रकाशयतीति । नस कौटिल्ये + अच् टाप् । ) नासिका । इति त्रिकाण्डशेषः ॥

नस्तः, पुं, ( नसते कुटिलतां प्रकाशयत्यनेनेति नस् + क्तः । बाहुलकात् इड़भावः । ) नासिका इति शब्दमाला ॥ ( यथा, महाभारते । ५ १३१ । १० ।
"नेत्राभ्यां नस्ततश्चैव श्रोत्राभ्याञ्च समन्ततः ।
प्रादुरासन् महारौद्राः सधूमाः पावकार्चिषः ।
नस्ये, क्ली । इति रत्नमाला ॥ पञ्चविधनस्य कर्म्माणि यथा,—
"प्रतिमर्षोऽवपीड़श्च नस्यं प्रधमनन्तथा ।
शिरोविरेचनञ्चैव नस्तकर्म्म तु पञ्चधा ।
ईषदुच्छ्वसनात् स्नेहो यावान् वक्त्रं प्रपद्यते ।
नस्ते निषिक्तस्तं विद्यात् प्रतिमर्षं प्रमाणतः ।
प्रतिमर्षेऽत्र नस्यार्थं करोति च न दोषभाक् ।
शोधनः स्तम्भनस्तु स्यादवपीड़ो द्विधा मतः ।
अवपीड्य दीयते यस्मादवपीड़स्ततः स्मृतः ।

स्नेहार्थं शून्यशिरसां ग्रीवास्कन्धोरसां तथा ॥
बलार्थं दीयते स्नेहो नस्यशब्दोऽत्र वर्त्तते ।
नस्यस्य स्नैहिकस्याष्ट देयास्त्वष्टौ तु विन्दवः ॥
प्रत्येकशो नस्तकयोर्नृणामिति विनिश्चयः ॥”
इति वैद्यकपरिभाषा ॥
“शुक्तिश्च पाणिशुक्तिश्च मात्रास्तिस्रः प्रकी-
र्त्तिताः ।
द्वात्रिंशद्विन्दवश्चात्र शुक्तिरित्यभिधीयते ॥
द्विशुक्ती पाणिशुक्तिश्च देयास्तु कुशलैर्नरैः ।
तैलं कफे च वाते च केवले पवने वसाम् ॥
दद्यान्नस्यं सदा पित्ते सर्पिर्मण्डं समारुते ।
ध्मापनं रेचनं चूर्णं युञ्ज्यात्तं मुखवायुना ॥
षडङ्गुलद्विमुखया नाड्या भेषजगर्भया ।
स हि भूरितरं दोषं चूर्णत्वादपकर्षति ॥
शिरोविरेचनद्रव्यैः स्नेहैर्वातैः प्रसाधितैः ।
शिरोविरेचनं दद्यात् रोगेष्वेतेषु बुद्धिमान् ॥
गौरवे शिरसः शूले जाड्ये स्यन्दे गलामये ।
शोथगण्डक्रिमिग्रन्थिकुष्ठापस्मारपीनसे ॥
तोयमद्यगरस्नेहपीतानां पातुमिच्छताम् ।
भुक्तभक्तशिरः स्नातस्नातुकामसुतास्त्रजाम् ॥
नवपीनसरोगार्त्तसूतिकाश्वासकासिनाम् ।
शुद्धानां दत्तवस्तीनां तथा नार्त्तवदुर्द्दिने ॥
अन्यत्रात्ययिके व्याधौ नैषां नस्यं प्रयोजयेत् ।
न नस्यं न्यूनसप्ताब्दे नातीताशीतिवत्सरे ।
न चोनष्टादशे धूमः कवडो नोनपञ्चमे ॥
न शुद्धिर्न्यूनदशमे न चातिक्रान्तसप्ततौ ।
आजन्ममरणं शस्तं प्रतिमर्षस्तु वस्तिवत् ॥”
इति सारकौमुदी ॥
ला, स्त्री, ( नस्त+टाप् । ) नासाकृतं छिद्रम् ।
इति नस्तितशब्दटीकायां भरतः ॥
“नस्ताभेदनदाहाभ्यां कर्णदाहादिभेदनैः ।
अतिदाहातिवाहाभ्यां वधे चान्द्रायणञ्चरेत् ॥”
इति स्मृतिः ॥
स्तितः, पुं, ( नस्ता नासाच्छिद्रं जाता अस्य ।
तारकादित्वादितच् । ) नासानिहितरज्जुवली-
वर्द्दादि । नाकफोँड़ा बलद इति भाषा । तत्-
पर्य्यायः । नस्योतः २ । इत्यमरः ।२ । ९ । ६३॥
ोतः, पुं, (वे ञ तन्तुसन्ताने+भावे क्तः । नस्ते
नासिकायां ऊतं वयनं यस्य ।) नस्तितः । इत्य-
मरटीकायां रमानाथः ॥
, स्त्री, ( नासिकायै हितम् । नासिका+यत् ।
ासादेशश्च । ) नासिकादेयचूर्णादि । तत्-
र्य्यायः । नस्तम् २ नावनम् ३ । इति रत्न-
ाला ॥ यथा, वैद्यकपरिभाषायाम् ।
वमनं रेचनं नस्यं निरूहश्चानुवासनम् ।
ियं पञ्चविधं कर्म्म मात्रा तस्य प्रवक्ष्यते ॥”
ासाद्वारा देयौषधविशेषः । यथा,—
प्रस्थे द्वे गन्धमालानां क्वाथयेत् द्रोणमम्भसाम् ।
तुर्भागावशेषेण तैलप्रस्थं विपाचयेत् ॥
ाञ्जिकस्याढकं दत्त्वा पिष्टान्येतानि दापयेत् ।
नन्तं वा गोक्षुरकं सैन्धवं शूषणं वचा ॥
रलं सुरदारुश्च बृहती कण्टकारिका ।

नस्यपानाद्धरत्येव कर्णमूलं हनुग्रहम् ॥”
इति गारुडे १९८ अध्यायः ॥
अपि च ।
“सिद्धार्थकवचाहिङ्गुकरञ्जं देवदारु च ।
मञ्जिष्ठा त्रिफला श्वेता शिरीषो रजनीद्वयम् ॥
प्रियङ्गुनिम्बत्रिकटु गोमूत्रेणावघर्षितम् ।
नस्यमालेपनञ्चैव स्नानमुद्वर्त्तनं तथा ॥
अपस्मारविषोन्मादशोषालक्ष्मीज्वरापहम् ।
भूतेभ्यश्च भयं हन्ति राजद्वारे च शासनम् ॥”
इति गारुडे १९९ अध्यायः ॥
( यथा च ।
“नस्यन्तत् कथ्यते धीरैर्नासाग्राह्यं यदौषधम् ।
नावनं नस्यकर्म्मेति तस्य नामद्वयं मतम् ॥
नस्यभेदो द्विधा प्रोक्तो रेचनं स्नेहनन्तथा ।
रेचनं कर्षणं प्रोक्तं स्नेहनं बृंहणं मतम् ॥
कफपित्तानिलध्वंसे पूर्व्वमध्यापराह्णके ।
दिनस्य गृह्यते नस्यं रात्रौ वाप्युत्कटे गदे ॥
नस्यं त्यजेद्भोजनान्ते दुर्द्दिने चापि तर्पणे ।
तथा नवप्रतिश्यायी गर्भिणी गरदूषितः ॥
अजीर्णी दत्तवस्तिश्च पीतस्नेहोदकासवः ।
क्रुद्धः शोकाभिभूतश्च तृषार्त्तो वृद्धबालकौ ॥
वेगावरोधी तापी च स्नातुकामश्च वर्ज्जयेत् ।
अष्टवर्षस्य बालस्य नस्यकर्म्म समाचरेत् ॥
अशीतिवर्षादूर्द्ध्वञ्च नावनं नैव दीयते ।
अथ वैरेचनं नस्यं ग्राह्यं तैलैः सुतीक्ष्णकैः ॥
तीक्ष्णभेषजसिद्धैर्वा स्नेहैः क्वाथै रसैस्तथा ।
नासिकारन्ध्रयोरष्टौ षट् चत्वारश्च विन्दवः ॥
प्रत्येकं रेचने योज्या मुख्यमध्यान्तमात्रया ।
नस्यकर्म्मणि दातव्यं शाणिकं तीक्ष्णमौषधम् ॥
हिङ्गुः स्याद्यवमात्रस्तु माषिकं सैन्धवं मतम् ।
क्षीरञ्चैवाष्टशाणं स्यात् पानीयञ्च त्रिकार्षिकम् ॥
कार्षिकं मधुरं द्रव्यं नस्यकर्म्मणि योजयेत् ॥
अवपीड़ः प्रधमनं द्वौ भेदावपरौ स्मृतौ ।
शिरो विरेचनस्थाने तौ तु देयौ यथायथम् ॥
कल्कीकृतादौषधाद्यः पीड़ितो निःसृतो रसः ।
सोऽवपीडः समुद्दिष्टस्तीक्ष्णद्रव्यसमुद्भवः ॥
षड़ङ्गुला द्विवक्त्राया नाड़ीचूर्णन्तया धमेत् ।
तीक्ष्णकोलमितं वक्त्रवातैः प्रधमनं हितम् ॥
ऊर्द्ध्वजत्रुगते रोगे कफजे स्वरसंक्षये ।
अरोचके प्रतिश्याये शिरःशूले च पीनसे ॥
शोफापस्मारकुष्ठेषु नस्यं वैरेचनं हितम् ।
भीरुस्त्रीकृशबालानां नस्यं स्नेहेन शस्यते ॥
गलरोगे सन्निपाते निद्रायां विषमज्वरे ।
मनोविकारे क्रमिषु युज्यते चावपीड़नम् ॥
अत्यन्तोत्कटदोषेषु विसंज्ञेषु च दीयते ।
चूर्णं प्रधमनन्धीरैस्तद्धि तीक्ष्णतरं यतः ॥
नस्यं स्याद्गुड़शुण्ठीभ्याम्पिप्पल्या सैन्धवेन च ।
जलपिष्टेन तेनाक्षिकर्णनासाशिरोगदाः ॥
हनुमन्यागलोद्भूता नश्यन्ति भुजपृष्ठजाः ।
मधूकसारकृष्णाभ्यां वचा मरिचसैन्धवैः ॥
नस्यङ्कोष्णजले पिष्टं दद्यात् संज्ञा प्रबोधनम् ॥
अपस्मारे तथोन्मादे सन्निपातेऽपतन्त्रके ॥”

इति मध्यखण्डे विशेऽध्याये शार्ङ्गधरेणोक्तम् ॥
“नस्यकर्म्म यथाकालं यो यथोक्तं निषेवते ।
न तस्य चक्षुर्न घ्राणं न श्रोत्रमुपहन्यते ॥
न स्युः श्वेता न कपिलाः केशाः श्मश्रूणि वा पुनः ।
न च केशाः प्रलुप्यन्ते वर्द्धन्ते च विशेषतः ।
मन्यास्तम्भः शिरःशूलमर्द्दितं हनुसंग्रहः ॥
पीनसार्द्धावभेदौ च शिरःकम्पश्च शाम्यति ।
सिराः शिरःकपालानां सन्धयः स्नायुकण्डराः ॥
नावनप्रीणिताश्चास्य लभन्तेऽभ्यधिकं बलम् ॥
मुखं प्रसन्नोपचितं स्वरः स्निग्धः स्थिरो महान् ।
सर्व्वेन्द्रियाणां वैमल्यं बलं भवति चाधिकम् ॥
न चास्य रोगाः सहसा प्रभवन्त्यूर्द्ध्वजत्रुजाः ।
जीर्य्यतश्चोत्तमाङ्गे च जरा न लभते बलम् ॥”
इति चरके सूत्रस्थाने पञ्चमेऽध्याये ॥
“औषधमौषधसिद्धो वा स्नेहो वा नासि-
काभ्यां दीयत इति नस्यं तद्द्विविधं शिरोविरे-
चनं स्नेहनञ्च । तद्द्विविधमपि पञ्चधा । तद्-
यथा । नस्यं शिरोविरेचनं प्रतिमर्षोऽवपीड़ः
प्रधमनञ्च । तेषु नस्यं प्रधानं शिरोविरेचनञ्च
नस्यविकल्पः प्रतिमर्षः शिरोविरेचनविक-
ल्पोऽवपीड़ः प्रधमनञ्च । ततो नस्यशब्दः
पञ्चधा निपातितः । तत्र यः स्नेहनार्थं शून्य-
शिरसां ग्रीवास्कन्धोरसां बलजननार्थं दृष्टि-
प्रसादजननार्थं वा स्नेहो विधीयते तस्मिन्
वैशेषिको नस्यशब्दः । तत्तु नस्यं देयं वाता-
भिभूते शिरसि दन्तकेशश्मश्रुप्रपातदारुण-
कर्णशूलकर्णक्ष्वेड़तिमिरस्वरोपघातनासारोगास्य
शोषापबाहुकाकालजवलीपलितप्रादुर्भावदारु-
णप्रबोधेषु वातपैत्तिकेषु मुखरोगेष्वन्येषु च
वातपित्तहरद्रव्यसिद्धेन स्नेहेनेति ॥”
“तन्नेतद्द्विविधमभुक्तवतोऽन्नकाले पूर्व्वाह्णे
श्लेष्मरोगिणां मध्याह्ने पित्तरोगिणामपराह्णे
वातरोगिणाम् ॥”
इति सुश्रुते चिकित्सितस्थाने ४० अध्याये ॥)
नासाया हिते तत्सम्बन्धिनि च, त्रि । प्रग्रहे,
पुं । इति संक्षिप्तसारव्याकरणम् ॥
नस्या, स्त्री, ( नासिकायै हिता । नासिका+
“शरीरावयवात् यत् ।” ५ । १ । ६ । इति यत्
ततो नसादेशः । ) नासिका । यथा,—
“घ्राणं गन्धवहा नासा नसा नस्या च नासिका ॥”
इति भरतधृतसाहसाङ्कः ॥
( नासाकृतछिद्रम् । इति कश्चित् । )
नस्योतः, पुं, ( नस्यया नासारज्ज्वा ऊतः । )
नस्तितः । इत्यमरः । २ । ९ । ६३ ॥ ( यथा,
महाभारते । ३ । ३० । २६ ।
“मणिः सूत्र इव प्रोतो नस्योत इव गोवृषः ॥”)
नहि, अ, निषेधः । ( यथा,—
“इयं सन्ध्या दूरादुपगतो हन्त मलयात्
तदेकां त्वद्गेहे विनयवति ! नेष्यामि रजनीम् ।
समीरेणोक्तैवं नवकुसुमिता चूतलतिका
धुनाना मूर्द्धानं नहि नहि नहीत्येव कुरुते ॥”
इत्युद्भटः ॥)

अभावः। तत्पर्य्यायः। अ २ नो ३ न ४। इत्यमरः॥ अन ५ अना ६ ना ७। इति भरतः॥ (यथा, महाभारते। ४। २४। १३।
"नहि विद्मो गतिं तेषां वासं हि नरसत्तम!॥)

नहुषः, पुं, (नह्यते इति। नह+"पृनहिकलिभ्य उषच्।" उणां। ४। ७५। इति कर्त्तरि कर्म्मणि वा उषच्।) नागभेदः। (यथा, महाभारते। १। ३५। ६।
"आप्तः करोटकश्चैव शङ्खो वालिशिखस्तथा।
निष्ठानको हेमगुहो नहुषः पिङ्गलस्तथा॥")
चन्द्रवंशीयराजभेदः। इति मेदिनी। षे, ३८॥ स च पुरूरवसो ज्येष्ठपुत्त्रस्यायुषः सुतः। इति पुराणम्॥ (अयं हि अगस्त्यशापात् अजागरत्वमाप्तो वनमध्ये बहुकालं स्थितवान् ततः कदाचित् भीमं प्रगृह्य युधिष्ठिरात् मुक्तिमाप। एतद्विवरणं यथा, महाभारते। ३। १८१। ३३—४५।
"अहं हि दिवि दिव्येन विमानेन चरन् पुरा।
अभिमानेन मत्तः सन् किञ्चिन्नान्यदचिन्तयम्॥
ब्रह्मर्षिदेवगन्धर्व्वयक्षराक्षसपन्नगाः।
करान्मम प्रयच्छन्ति सर्व्वे त्रैलोक्यवासिनः॥
चक्षुषा यं प्रपश्यामि प्राणिनं पृथिवीश्वर!।
तस्य तेजो हराम्याशु तद्धि दृष्टेर्बलं मम॥
ब्रह्मर्षीणां सहस्रं हि उवाह शिविकां मम।
स मामपनयो राजन्! भ्रंशयामास वै श्रियः॥
तत्र ह्यगस्त्यः पादेन वहन् स्पृष्टो मया मुनिः।
अगस्त्येन ततोऽस्म्युक्तो ध्वंस सर्पेति वै रुषा॥
ततस्तस्माद्विमानाग्रात् प्रच्युतश्च्युतभूषणः।
प्रपतन् बुबुधेत्मानं व्यालीभूतमधोमुखम्॥
अयाचन्तमहं विप्रं शापस्यान्तो भवेदिति।
प्रमादात् संप्रमूढ़स्य भगवन्! क्षन्तुमर्हसि॥
ततः स मामुवाचेदं प्रपतन्तं कृपान्वितः।
युधिष्ठिरो धर्म्मराजः शापात्त्वां मोचयिष्यति॥
अभिमानस्य घोरस्य पापस्य च नराधिप!।
फले क्षीणे महाराज! फलं पुण्यमवाप्स्यसि॥
ततो मे विस्मयो जातस्तद्दृष्ट्वा तपसो बलम्।
ब्रह्म च ब्राह्मणत्वञ्च येन त्वाहमचूचुदम्॥
सत्यं दमस्तपो दानमहिंसा धर्म्मनित्यता।
साधकानि सदा पुंसां न जातिर्न कुलं नृप!॥
अरिष्ट एव ते भ्राता भीमसेनो महाबलः।
स्वस्ति तेऽस्तु महाराज! गमिष्यामि दिवं पुनः॥
वैशम्पायन उवाच।
इत्युक्ताजगरं देहं त्यक्त्वा स नहुषो नृपः।
दिव्यं वपुः समास्थाय गतस्त्रिदिवमेव हि॥"*॥
(नह्यति सर्व्वाणि भूतानि माययेति। विष्णुः। यथा, महाभारते। १३। १४६। ४७।
"इष्टो विशिष्टः शिष्टेष्टः शिखण्डी नहुषो वृषः॥")

नहुषाख्यं, क्ली, (नहुष आख्या यस्य।) तगरपुष्पम्। इति राजनिर्घण्टः॥

नहुषात्मजः, पुं, (नहुषस्य आत्मजः।) ययातिराजा। इति पुराणम्॥ (वाच्यलिङ्गेऽपि दृश्यते। तथाहि महाभारते। १। ७८। १४।
"अथ तं देशमभ्यागाद्ययातिर्नहुषात्मजः॥")

ना, व्य, (नह बन्धे+बाहुलकात् डा।) नहि। अभावः। इत्यमरटीकायां भरतः॥

ना, [ऋ] पुं, (नयति नीयते वा। णी प्रापणे+"नयतेर्डिच।" उणां २।१०१। इति ऋ प्रत्ययः। स च डित्।) पुरुषः। इत्यमरः। २। ६। १॥ (यथा, माघः। २। ४२।
"विधाय वैरं सामर्षे नरोऽरौ य उदासते।
प्रक्षिप्योदर्च्चिषं कक्षे शेरते तेऽभिमारुतम्॥")

नाकः, पुं, (न कं सुखमिति अकं दुःखम्। तन्नास्त्यत्रेति।) स्वर्गः। इत्यमरः। १। १। ६॥ (यथा, भट्टिः। १। ४।
"सन्तर्पणो नाकसदां वरेण्यः॥"
नभः। इति निघण्टुः। १। ४॥ यथा, महाभारते। १। १७२। ६।
"य एष दिवि धिष्ण्येन नाकं व्याप्नोति तेजसा॥"
क्ली, अस्त्रजातिविशेषः। यथा, महाभारते। ५। ६६। ४०।
"काकुदीकं शुकं नाकमक्षिसन्तर्ज्जनं तथा।
सन्तानं नर्त्तकं घोरमास्यमोदकमष्टमम्॥
एतैर्विद्धाः सर्व्व एव मरणं यान्ति मानवाः॥"
क्षत्त्रियजातिविशेषः। यथा, वायुपुराणे।
"नव नाकास्तु भोक्ष्यन्ति पुरीं चम्पावतीं नृपाः॥")

नाकनाथः, पुं, (नाकस्य स्वर्गस्य नाथः।) इन्द्रः। इति त्रिकाण्डशेषः॥

नाकनायकः, पुं, (नाकस्य नायकः।) इन्द्रः। यथा, नैषधे ५ सर्गः।
"स व्यतीत्य वियदन्तरगाधं
नाकनायकनिकेतनमाप॥"

नाकनायकपुरोहितः, पुं, (नाकनायकस्य इन्द्रस्य पुरोहितः।) बृहस्पतिः। यथा,—
"स्वीयधर्म्मतनयद्युनस्थितो
नाकनायकपुरोहितः शुभः॥"
इति ज्योतिस्तत्त्वम्॥

नाकी, [न्] पुं, (नाकः स्वर्गो वासस्थानत्वेनास्त्यस्येति। नाक+इनिः।) देवता। इति हेमचन्द्रः॥ (यथा, राजेन्द्रकर्णपूरे। ६।
"देवाकर्णय नाकिनां पुरि नृणां लोके पुरे भोगिनाम्॥")

नाकुः, पुं, (नम्यतेऽनेनेति। नम+"फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च।" उणां १। १६। इति उः धातोर्नाकिः। इकार उच्चारणार्थः।) वल्मीकः। इत्यमरः। २। १। १४॥ मुनिविशेषः। पर्व्वतः। इति मेदिनी के, २७॥

नाकुलः, पुं, (नकुलस्य गोत्रापत्यम्। नकुल+"ऋष्यन्धकवृष्णिकुरुभ्यश्च।" ४। १। ११४। इत्यण्।) नकुलपुत्त्रः। इति सिद्धान्तकौमुदी॥ (यथा, महाभारते। ६। ४७। ५१।
"शवराः कुण्डलाश्चैव वत्साश्च सह नाकुलैः।
नकुलः सहदेवश्च वामं पार्श्वं समाश्रिताः॥"
तन्त्रविशेषे, क्ली। यथा, कूर्म्मपुराणे।
"एवं सम्बोधितो रुद्रो माधवेन मुरारिणा।
चकार मोहशास्त्राणि केशवोऽपि शिवेरितः।
कापालं नाकुलं वामं भैरवं पूर्व्वपश्चिमम्।
पञ्चरात्रं पाशुपतं तथान्यानि सहस्रशः॥"
नकुलस्येदम्। तस्येदमित्यण्।) नकुलसम्बन्धिनि॥ (न आकुलः इति विग्रहे। अनाकुलश्च।

नाकुली, स्त्री, (नकुलेन दृष्टा पीता वा। नकुल+अण्+ङीप्।) कुक्कुटीकन्दः। रास्ना। चविका इति मेदिनी। ले, १०१॥ यवतिक्ता। श्वेतकण्टकारी। कन्दविशेषः। नाइ इति ख्याता तत्पर्य्यायः। सर्पगन्धा २ सुगन्धा ३ रक्तपत्त्रिका ४ ईश्वरी ५ नागगन्धा ६ अहिभुक् ७ सरसा ८ सर्पादनी ९ व्यालगन्धा १०। अस्या गुणाः। तिक्तत्वम्। कटुत्वम्। उष्णत्वम् त्रिदोषानेकविषनाशित्वञ्च। इति राजनिर्घण्टः॥

नाक्षत्रं, स्त्री (नक्षत्रस्येदमिति। नक्षत्र+"तस्येदम्।" ४। ३। १२०। इति अण्।) नक्षत्रसम्बन्धि। (यथा, सूर्य्यसिद्धान्ते। १४। १५।
"भचक्रभ्रमणं नित्यं नाक्षत्रं दिनमुच्यते।
नक्षत्रनाम्ना मासास्तु ज्ञेयाः पर्व्वान्तयोगतः॥"
मासविशेषे, पुं। स च द्विविधः। सप्तविंशतिनक्षत्रात्मक एकः। यथा, विष्णुधर्म्मोत्तरे।
"नक्षत्रसत्राण्ययनानि चेन्दोर्मानेन कुर्य्याद्भगणात्मकेन।"
सप्तविंशतिनक्षत्रात्मकेन।
"सर्व्वर्क्षपरिवर्त्तैश्च नाक्षत्र इह चोच्यते।'
सप्तविंशतिनक्षत्रावच्छिन्नो नाक्षत्रः। अस्य प्रयोजनं नक्षत्रसत्रादौ। जन्मनक्षत्रे शनिभौमवारयोगे मनोदुःखदाने च। यथा, दीपिकायाम्।
"जन्मन्यर्क्षे यदि स्यातां वारौ भौमशनैश्चरौ।
स मासः कल्मषो नाम मनोदुःखप्रदायकः॥"
द्वितीयः षष्टिदण्डात्मकनक्षत्रभोगकालरूपदिनत्रिंशदात्मकः। यथा, सूर्य्यसिद्धान्ते। १। १२
"नाडीषष्ट्या तु नाक्षत्रमहोरात्रं प्रचक्षते।
तत्त्रिंशता भवेन्मासः सावनोऽर्कोदयैस्तथा॥"
द्वितीयस्य प्रयोजनं आयुर्गणनायाम्। यथा,
"आयुर्दाये स्मृतं प्राज्ञैर्नाक्षत्रं षष्टिनाडिकम्॥"
इति मलमासतत्त्वम्॥

नाक्षत्रिकः, पुं, (नक्षत्रादागतः। नक्षत्र+ठञ्।) नाक्षत्रमासः। यथा, शब्दरत्नावल्याम्।
"नक्षत्रगणनेनैव नाक्षत्रिक उदाहृतः॥"

नाक्षत्रिकी, स्त्री, (नाक्षत्रिक+ङीप्।) नक्षत्रदशा। यथा।"कलौ नाक्षत्रिकी दशा।" इति ज्योतिषम्। अस्या विवरणं दशाशब्दे द्रष्टव्यम्
नक्षत्रसम्बन्धिनि, त्रि॥

नागं, क्ली, (नगे पर्व्वते भवम्। नग+अण्।) रङ्गम्। सीसकम्। (अस्य पर्य्यायो यथा,—
"नागं महाबलं चीनं पिष्टं योगेष्टसीसकम्॥"
इति वैद्यकरत्नमालायाम्।)
करणविशेषः। इति मेदिनी। गे, ६॥ नाम करणजातफलम्। तथा,—

"नागोद्भवो नागधनाभिलाषी
वक्रोक्तिभाषी नितरां कुशीलः ।
क्रोधाग्निसन्तापितबन्धुवर्गो
भर्गोपमः स्यात् किल रङ्गभूमौ ॥"
इति कोष्ठीप्रदीपः ॥

रङ्गसीसकार्थे क्वचित् पुंलिङ्गोऽपि दृश्यते । पाकहीनयोस्तयोर्दोषो यथा,—
"पाकहीनौ नागवङ्गौ कुष्ठगुल्मरुजाकरौ ।
मेहपाण्डुकरौ वातकफान्त्युकरौ पुनः ॥"
तयोर्मारणं यथा,—
"अश्वत्थचिञ्चात्वक्चूर्णं चतुर्थांशेन निःक्षिपेत् ।
मृतपात्रे विद्रुते नागे लौहदर्व्या च चालयेत् ॥
यामैकेन भवेद्भस्म तत्तुल्यांश्च मनःशिलाम् ।
काञ्जिकेन द्वयं पिष्ट्वा पचेद्दृढपुटेन च ॥
स्वाङ्गशीतं पुनः पिष्ट्वा शिलया काञ्जिकेन च ॥
पुनः पुटेच्छरावाभ्यामेवं षड्भिः पुटैर्मृतिः ॥"
नागः सिन्दूरवर्णाभो म्रियते सर्व्वकार्य्यकृत् ।
सतिक्तमधुरो नागो मृतो भवति भस्मसात् ॥
आयुःकीर्त्तिं वीर्य्यवृद्धिं करोति सेवनात् सदा ।
रोगान् हन्ति मृतो नागो वङ्गवद्गुणकारकः ॥"
इति सुखबोधः ॥

नागः, पुं, (नगे भवः । नग + अण् । यद्वा, दह्यत्यस्मात् विषाग्निनेति । दह + "दहेर्गो लोपो दश्च नः ।" उणां ५ । ६१ । गः । अन्त्यलोपः । दस्य नः । बाहुलकात् नकारस्य ना ।) पन्नगः । (यथा, विष्णुपुराणे । १ । ९ । ९६ ।
"जगृहुश्च विषं नागाः क्षीरोदाब्धिसमुत्थितम् ॥")
हस्ती । (यथा, रघुः । ४ । ८३ ।
"भेजे भिन्नकटैर्नागैरन्यानुपरुरोध यैः ॥")
क्रूराचारी । मेघः । नागकेशरः । पुन्नागः । नागदन्तकः । मुस्तकः । देहानिलप्रभेदः ।
"उद्गारे नाग इत्युक्तो नीलजीमूतसन्निभः ॥"
इति शारदातिलकटीका ॥

उत्तरपदस्थिते श्रेष्ठः । इति मेदिनी । गे, १० ॥ (सीसकम् । अस्योत्पत्तिर्नामानि गुणाश्च । यथा, भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ।
"दृष्ट्वा भोगिसुतां रम्यां वासुकिस्तु समोच यत् ।
वीर्य्यं जातस्ततो नागः सर्व्वरोगापहो नृणाम् ॥"
"नागस्तु नागशततुल्यबलं ददाति
व्याधिं विनाशयति जीवनमातनोति ।
वह्निं प्रदीपयति कामबलं करोति
मृत्युञ्च नाशयति सन्ततसेवितः सः ॥
पाकेन हीनौ किलवङ्गनागौ
कुष्ठानि गुल्मांश्च तथातिकष्टान् ।
कण्डूं प्रमेहानिलसादशोथः
भगन्दरादीन् कुरुतः प्रयुक्तौ ॥")
ताम्बूली । देशभेदः । इति नानार्थटीकायां भरतः ॥ पर्व्वतविशेषः । (यथा, विष्णुपुराणे । २ । २ । २८ ।
"शङ्खकूटोऽथ ऋषभो हंसो नागस्तथापरः ।
कालाञ्जराद्याश्च तथा उत्तरे केसराचलाः ॥")
नगे गिरौ चन्दनादितरौ वा भवः । न गच्छतीति अगः न अगः नागः इति वा । तक्षककर्कोटप्रभृतिर्देवयोनिर्मनुष्याकारः फणालाङ्गूलयुक्तः । इति भरतः ॥ तत्पर्य्यायः । काद्रवेयः । २ । इत्यमरः । १ । ८ । ४ ॥ नागोत्पत्तिर्यथा,—
"सृजता ब्रह्मणा सृष्टिं मरीचिः सूतिकारणम् ।
प्रथमं मनसा ध्यातस्तस्य पुत्त्रस्तु काश्यपः ॥
तस्य दाक्षायणी भार्य्या कद्रुर्नाम सुचिस्मिता ।
मारीचो जनयामास तस्यां पुत्त्रान्महाबलान् ॥
अनन्तं वासुकिञ्चैव कम्बलञ्च महाबलम् ।
कर्कोटकञ्च राजेन्द्र ! पद्मं चान्यं सरीसृपम् ॥
महापद्मं तथा शङ्खं कुलिकञ्चापराजितम् ।
एते काश्यपदायादाः प्रधानाः परिकीर्त्तिताः ।
एतेषान्तु प्रसूत्या तु इदमापूरितं जगत् ॥
कुटिला हीनकर्म्माणस्तीक्ष्णास्योत्थविषोल्बणाः ।
दृष्ट्वा संदशन्ति मनुजान् भस्म कुर्य्युः क्षणाद्ध्रुवम् ॥
शब्दगामी यथा सर्पो मनुष्याणां नराधिप ! ।
अहन्यहनि जायेत क्षयः परमदारुणः ॥
आत्मनस्तु क्षयं दृष्ट्वा प्रजाः सर्व्वाः समन्ततः ।
जग्मुः शरण्यं शरणं परन्तु परमेश्वरम् ॥
इमं सेवार्थमुद्दिश्य प्रजाः सर्व्वा महीपते ! ।
ऊचुः कमलजं देवं पुराणं ब्रह्मसंज्ञितम् ॥
देवा ऊचुः ।
देव देवेश लोकानां प्रकृतिः परमेश्वर ।
त्राहि नस्तीक्ष्णदंष्ट्रेभ्यो भुजङ्गानां महात्मनाम् ॥
अहन्यहनि ये देव ! पश्येयुरुरगा दृशा ।
मनुष्यं मृगयूथं वा तत् सर्व्वं भस्मसाद्भवेत् ॥
त्वया सृष्टिः कृता देव क्षीयते सा भुजङ्गमैः ।
एतज्ज्ञात्वा तु दुर्वृत्तं तत् कुरुष्व महामते ॥
ब्रह्मोवाच ।
अहं रक्षां विधास्यामि भवतीनां न संशयः ।
व्रजध्वं स्वानि धिष्ण्यानि प्रजापालाः ससाध्वसाः ॥
एवमुक्ताः प्रजास्तेन ब्रह्मणाव्यक्तमूर्त्तिना ।
आगतास्तु प्रजास्तास्तानाहूय भुजङ्गमान् ॥
शशाप परमक्रुद्धो वासुकिप्रमुखांस्तथा ।
ब्रह्मोवाच ।
यतो मत्प्रभवान्नित्यं क्षयं नयत मानुषान् ॥
भवान्तरे तथान्यस्मिंस्तासुः शापात् सुदारुणात् ।
भवितातिक्षयो घोरो नूनं स्वायम्भुवान्तरे ॥
एवमुक्तास्तु वेपन्तो ब्रह्मणा भुजगोत्तमाः ।
निपत्य पादयोस्तस्य इदमूचुर्वचस्तदा ॥
नागा ऊचुः ।
भगवन् ! कुटिला जातिरस्माकं भवता कृता ।
विषोल्बणत्वं क्रूरत्वं दृक्शस्त्रत्वञ्च नस्तथा ॥
सम्पादितं त्वया देव इदानीं शमयाच्युत ! ॥
ब्रह्मोवाच ।
यदि नाम मया सृष्टा भवन्तः कुटिलाशयाः ।
ततः किं मनुजान्नित्यं भक्षयध्वं गतव्यथाः ॥
नागा ऊचुः ।
मर्य्यादां कुरु देवेश ! स्थानञ्चैव पृथक् पृथक् ।
नागानां वचनं श्रुत्वा देवो वचनमब्रवीत् ॥
अहं करोमि वो नागाः समयं मनुजैः सह ।
तदेकमनसः सर्व्वे शृणुध्वं मम शासनम् ॥
पातालं वितलञ्चैव सुतलाख्यं तृतीयकम् ।
दत्तं वै वसुकामानां गृहं तत्र गमिष्यथ ॥
तत्र भोगान् बहुविधान् भुञ्जध्वं मम शासनात् ।
तिष्ठध्वं सप्तमं यावन्नाशान्तमेति पुनः पुनः ॥
ततो वैवस्वतस्यादौ काश्यपेया भविष्यथ ।
दायादाः सर्व्वदेवानां सुपर्णस्य च धीमतः ॥
तदा प्रसूतिर्वः सर्व्वा भोक्ष्यते चित्रभानुना ।
भवतां नैव दोषोऽयं भविष्यति न संशयः ॥
ये वै क्रूरा भोगिनो दुर्विनीता-
स्तेषामन्तो भविता नान्यथैतत् ।
कालं प्राप्तं भक्षयध्वं दशध्वं
तथा परान् चापकृतो मनुष्यान् ॥
मन्त्रौषधैर्गारुडमण्डलैश्च
बद्धैर्दृष्टा मानवा ये चरन्ति ।
तेषां भीतैर्व्वर्जितव्यं नचान्य-
च्चिन्त्यं कार्य्यं चान्यथा वो विनाशः ॥
इतीरिते ब्रह्मणा ते भुजङ्गा
जग्मुः स्थानं स्वातलाख्यं हि सर्व्वे ।
तस्थुर्भोगान् भुञ्जमानाः समग्रान्
रसातले लीलया संस्थितास्ते ॥
एवं शापं ते तु लब्ध्वा प्रसादञ्च चतुर्मुखात् ।
तस्थुः पातालनिलये मुदितेनान्तरात्मना ॥
एतत् सर्व्वञ्च पञ्चम्यां तेषां जातं महात्मनाम् ।
अतस्त्वियं तिथिर्धन्या सर्व्वपापहरा शुभा ॥
एतस्यां संयतो यस्तु अम्लन्तु परिवर्ज्जयेत् ।
क्षीरेण स्नापयेन्नागांस्तस्य यास्यन्ति मित्रताम् ॥"
इति वराहपुराणम् ॥

एषां शिवभूषणप्रसाधनं यथा,—
"वासुक्याद्याश्च ये सर्पा यथास्थानञ्च ते हरम् ।
भूषयाञ्चक्रुरव्यग्राः शिरोबाह्वादिषु द्रुतम् ॥"
इति कालिकापुराणे शिववियाहे १८ अः ।
कम्बलाश्वतरनागयोः सरस्वत्या गानवरप्राप्तिविवरणं यथा,—
"एवं स्तुता तदा देवी विष्णोर्जिह्वा सरस्वती ।
प्रत्युवाच महात्मानं नागमश्वतरं ततः ॥
सरस्वत्युवाच ।
वरन्ते कम्बलभ्रातः ! प्रयच्छाम्युरगाधिप ! ।
तदुच्यतां प्रदास्यामि यत्ते मनसि वर्त्तते ॥
अश्वतर उवाच ।
सहायं देहि देवि ! त्वं पूर्व्वं कम्बलमेव मे ।
समस्तस्वरसम्बन्धमुभयोः संप्रयच्छ च ॥
सरस्वत्युवाच ।
सप्त स्वरा ग्रामरागाः सप्त पन्नगसत्तम ! ।
गीतकानि च सप्तैव तावतीश्चापि मूर्च्छनाः ॥
तानाश्चैकोनपञ्चाशत्तथा ग्रामत्रयञ्च यत् ।
एतत् सर्व्वं भवान् गाता कम्बलश्चैव ते सखा ॥
ज्ञास्यते मत्प्रसादेन भुजगेन्द्र परन्तथा ।
चतुर्व्विधं पदं तालं त्रिप्रकारं लयत्रयम् ॥
यतित्रयं तथा तोद्यं मया दत्तं चतुर्व्विधम् ॥
एतद्भवान् मत्प्रसादात् पन्नगेन्द्रापरञ्च यत् ।
अस्यान्तर्गतमायत्तं स्वरव्यञ्जनयोश्च यत् ॥
तदशेषं मया दत्तं भवतः कम्बलस्य च ।

यथा नान्यस्य भूर्लोके पाताले वापि पन्नग !॥
प्रणेतारौ भवन्तौ च सर्व्वस्यास्य भविष्यत:।
पाताले देवलोके च भूर्लोके चैव पन्नगौ ॥
इत्युक्ता सा तदा देवी सर्व्वजिह्वा सरस्वती।
जगामादर्शनं सद्यो नागस्य कमलेक्षणा ॥”
इति मार्कण्डेयपुराणम् ॥
कालियवंशनागहनने दोषो यथा,—
“तद्वंशजातान् सर्पांश्च हन्ति यो मानवाधम:।
ब्रह्महत्यासमं पापं भविता तस्य निश्चितम् ॥
मत्पादपद्मचिह्ने य: करोति दण्डताडनम्।
द्विगुणं ब्रह्महत्याया भविता तस्य किल्बिषम् ॥
लक्ष्मीर्यास्यति तद्गेहात् शापं दत्त्वा सुदारुणम्।
वंशायुर्यशसां हानिर्भविता तस्य निश्चितम् ॥
ध्रुवं वर्षशतं कालसूत्रं यास्यति मत्प्रिया ॥”
इति ब्रह्मवैवर्त्तपुराणे श्रीकृष्णजन्मखण्डे १९ अ: ॥
वास्तुनागशुद्धिर्यथा,—
“वास्तुप्रमाणेन तु गात्रकेण
वामेन शेते खलु नित्यकालम्।
त्रिभिस्तु मासै: परिवृत्य पार्श्वं
तं वास्तुनागं प्रवदन्ति सिद्धा: ॥
भाद्रादिके वासवदिक्शिरा: स्या-
न्मार्गादिकेषु त्रिषु याम्यमूर्द्धा।
प्रत्यक्शिरा: स्यात् खलु फाल्गुनादौ
ज्यैष्ठादिकौवेरशिरा: स नाग: ॥
मूर्द्ध्नि घाते भवेन्मृत्यु: पृष्ठे स्यात् पुत्त्रभार्य्ययो:।
जघनेऽर्थक्षयं विद्यात् सर्व्वसम्पत्तथोदरे ॥
एकं नागोडुसंशुद्धौ हि चेद्दक्षिणपश्चिमे।
त्रिशालं पूर्व्वतो हीनं कुर्य्याद्वा सौम्यवर्ज्जितम् ॥
केचिद्दक्षिणभागे तु वदन्त्येकं गृहं बुधा:।
न कोणेषु गृहं कुर्य्यान्नाप्यन्त्ये नापि मध्यत: ॥
कोणे च धनहानि: स्यादन्ते रिपुभयं भवेत्।
मध्ये च सर्व्वनाश: स्यात्तस्मादेतद्विवर्ज्जयेत् ॥”
इति ज्योतिस्तत्त्वम् ॥

नागकन्द:, पुं, (नाग इव कन्दं मूलं यस्य। दृढ़-त्वमलत्वादेव तथात्वम्।) हस्तिकन्द:। इति राजनिर्घण्ट: ॥

नागकर्ण:, पुं, (नागकर्ण इव आकृति: पर्णेऽस्य-स्येति। अच्।) रक्तैरण्ड:। इति राजनिर्घण्ट: ॥

नागकिञ्जल्कं, क्ली, (नागस्येव किञ्जल्को यस्य।) नागकेशरपुष्पम्। इति राजनिर्घण्ट: ॥

नागकुमारिका, स्त्री, (नागस्य कुमारीव। कन् टाप् पूर्व्वह्रस्वश्च।) गुडूची। मञ्जिष्ठा। इति राजनिर्घण्ट: ॥

नागकेशर:, पुं, (नागस्येव केशरोऽस्य।) नागकेसरवृक्ष:। इति भरत: ॥ (यथा, हारीते चिकित्सितस्थाने १० अध्याये।
“नलशैलेयकं एला पद्मकं नागकेशरम् ॥”)

नागकेसर:, पुं, (नागस्येव केसरो यस्य।) पुष्पवृक्षविशेष:। नागेश्वर इति भाषा ॥ तत्पर्य्याय:। चाम्पेय: २ केसर: ३ काञ्चनाह्वय: ४। इत्यमर:। २।४।६५ ॥ केशर: ५ नागकेशर: ६। इति भरत: ॥ किञ्जल्क: ७ नागकिञ्जल्क: ८ नागीय: ९ काञ्चनम् १० सुवर्णम् ११ हेमकिञ्जल्क: १२ रुक्मम् १३ हेम १४ पिञ्जर: १५ फणिकेसर: १६ पन्नगकेसर: १७। तत्पुष्पगुणा:। अल्पोष्णत्वम्। लघुत्वम्। तिक्तत्वम्। कफवस्तिवातामयकण्ठशीर्षरोगनाशित्वञ्च। इति राजनिर्घण्ट: ॥
तन्नामगुणा:।
“नागपुष्प: स्मृतो नाग: केसरो नागकेसर:।
चाम्पेयो नागकिञ्जल्क: कथित: काञ्चनाह्वय: ॥
नागपुष्पं कषायोष्णं रूक्षं लघ्वामपाचनम्।
ज्वरकण्डूतृषास्वेदच्छर्द्दिहृल्लासनाशनम् ॥
दौर्गन्ध्यकुष्ठवीसर्पकफपित्तविषापहम् ॥”
त्रिजातकं नागकेशरसंयुक्तं चतुर्ज्जातकं भवति यथा,—
“त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धित्रिजातकम्।
नागकेशरसंयुक्तं चतुर्ज्जातकमुच्यते ॥
तद्द्वयं रोचकं रूक्षं तीक्ष्णोष्णं मुखगन्धहृत्।
लघु पित्ताग्निकृद्वर्ण्यं कफवातविषापहम् ॥”
इति भावप्रकाश: ॥

नागगन्धा, स्त्री, (नागस्य गन्ध इव गन्धो यस्या:।) नाकुलीकन्द:। इति राजनिर्घण्ट: ॥ (नाकुलीशब्देऽस्या विशेषो ज्ञातव्य: ॥)

नागगर्भं, क्ली, (नाग: सीसकं गर्भ उत्पत्तिकारणं यस्य।) सिन्दूरम्। इति राजनिर्घण्ट: ॥

नागच्छत्रा, स्त्री, (नागस्य फणेव छत्रं छादनं पत्रे यस्या:।) नागदन्ती। इति राजनिर्घण्ट: ॥

नागजं, क्ली, (नागात् सीसकात् जायते इति। जन + ड:।) सिन्दूरम्। इति राजनिर्घण्ट: ॥ रङ्गम्। इति हेमचन्द्र:। ४। १०८ ॥ नागजाते, त्रि ॥

नागजिह्वा, स्त्री, (नागस्य सर्पस्य जिह्वेव।) शारिवा। अनन्तमूलम्। इति रत्नमाला ॥

नागजिह्विका, स्त्री, (नागस्य जिह्वेव रक्तता यस्या:। कप्। टापि अत इत्वम्।) मन:शिला। इत्यमर:। २। ९। १०८ ॥ (यथास्या: पर्य्याय:।
“मन:शिला मनोगुप्ता मनोज्ञा नागजिह्विका।
नैपाली कुनटी गोला शिला दिव्यौषधि: स्मृता ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

नागजीवनं, क्ली, (नाग: सीसकं जीवनं यस्य।) वङ्गम्। इति हेमचन्द्र:। ४। १०८ ॥

नागदन्त:, पुं, (नागस्य गजस्य दन्त:।) हस्तिदन्त:। (यथा, महाभारते। १२। ९८। १९।
“द्वीपिचर्म्मावनद्धश्च नागदन्तकृतत्सरु: ॥”
नागदन्त: साधनत्वेनास्त्यस्येति अच्।) गृहान्तर्गतदारु। इति मेदिनी। ते, २०१ ॥ दाँतिया इति दाण्डा इति च भाषा ॥

नागदन्तक:, पुं, (नागदन्त + स्वार्थे कन्।) नागदन्त:। (नागदन्तेन कायतीति। कै + क:।) भित्तिदारुद्वयम्। तत्पर्य्याय:। निर्यूह: २। इति जटाधर: ॥

नागदन्तिका, स्त्री, (नागस्य सर्पस्य दन्त इ[illegible] पीडादायकं पत्रं यस्या:। कापि अत इत्वम्।) वृश्चिकाली। इति रत्नमाला ॥ बिछुटी इ[illegible] भाषा ॥

नागदन्ती, स्त्री, (नागस्य गजस्य दन्त इ[illegible] फलाद्याकारे यस्या:। ङीष्।) कुम्भा। श्रीह[illegible] स्तिनी। इति मेदिनी। ते, २०१ ॥ हाति[illegible] शुण्डा इति भाषा ॥ शेषस्य पर्य्याय:। विशल्या[illegible] पर्व्वपुष्पी ३ विषौषधी ४ शुक्लपुष्पा ५ इभ[illegible] दन्ताह्वा ६ काकेरी ७ कामदूतिका ८। इ[illegible] रत्नमाला ॥ श्वेतपुष्पा ९ मधुपुष्पा १० विषो[illegible] धिनी ११ नागस्फोता १२ विशालाक्षी १[illegible] नागच्छत्रा १४ विषघ्नी १५ सर्पपुष्पी १[illegible] शुक्लपुष्पी १७ स्वादुका १८ शतदन्तिका १[illegible] सितपुष्पी २० सर्पदन्ती २१ नागिनी २२ अस्या गुणा:। कटुत्वम्। तिक्तत्वम्। रूक्ष[illegible] त्वम्। वातकफगुल्मशूलोदरव्याधिकण्डूदोष[illegible] नाशित्वञ्च। इति राजनिर्घण्ट: ॥

नागदमनी, स्त्री, (नागो दम्यतेऽनयेति। दम + ल्युट् + ङीप्।) क्षुद्रक्षुपविशेष:। तत्पर्य्याय:। जम्बू: २ जाम्बवती ३ वृक्का ४ रक्तपुष्पा ५ जाम्बवी ६ मलघ्नी ७ दुर्द्धर्षा ८ दु:सहा ९ अस्या गुणा:। तिक्तत्वम्। उष्णत्वम्। कटु[illegible] त्वम्। त्रिदोषोदराध्मानदोषनाशित्वम्। कोष्ठ[illegible] शोधनकारित्वञ्च। इति राजनिर्घण्ट: ॥*॥
तन्नामगुणा:।
“विज्ञेया नागदमनी बला मोटा विषापहा।
नागपुष्पी नागपत्रा महायोगेश्वरीति च ॥
बला मोटा कटुस्तिक्ता लघु: पित्तकफापहा।
मूत्रकृच्छ्रव्रणान् हन्ति नाशयेज्जालगर्द्दभम् ॥
सर्व्वग्रहप्रशमनी नि:शेषविषनाशिनी।
जयं सर्व्वत्र कुरुते धनदा सुमतिप्रदा ॥”
इति भावप्रकाश: ॥

नागदलोपमं, क्ली, (नागदलस्य ताम्बूल्या उपम[illegible] यत्र।) परूषफलम्। इति रत्नमाला ॥ (परूष[illegible] शब्देऽस्य गुणादयो ज्ञातव्या: ॥)

नागद्रु:, पुं, (नागप्रियो द्रुर्वृक्ष:।) समन्तदुग्धा इति शब्दचन्द्रिका ॥ सिज इति भाषा ॥

नागनिर्य्यूह:, पुं, (नाग इव निर्य्यूहो नागदन्त:। नागदन्तक:। इति जटाधर: ॥

नागपञ्चमी, स्त्री, (नागप्रिया पञ्चमी। शाक[illegible] पार्थिवादिवत् समास:।) आषाढ़ी कृष्णा पञ्चमी। तत्र मनसापूजा कर्त्तव्या। यथा,—
“देवीपुराणे।
‘सुप्ते जनार्द्दने कृष्णे पञ्चम्यां भवनाङ्गने।
पूजयेन्मनसादेवीं स्नुहीविटपसंस्थिताम् ॥
पद्मनाभे गते शय्यां देवै: सर्व्वैरनन्तरम्।
पञ्चम्यामसिते पक्षे समुत्तिष्ठति पन्नगी ॥’
मनसादेवीं विषहरीम्। स्नुही सिजवृक्ष: देवैरिति सहार्थे तृतीया।
‘देवीं सम्पूज्य नत्वा च न सर्पभयमाप्नुयात्।
पञ्चम्यां पूजयेन्नागाननन्ताद्यान् महोरगान्।

क्षीरं सर्पिस्तु नैवेद्यं देयं सर्पविषापहम् ॥'
नवधाध्यानम् । यथा, पद्मपुराणे ।
'देवीमम्बामहीनां शशधरवदनां चारुकान्तिं वदान्यां
हंसारूढ़ामुदारामरुणितवसनां सर्व्वदां सर्व्वदैव ।
स्मेरास्यां मण्डिताङ्गीं कनकमणिगणैर्नागरत्नैरनेकै-
र्वन्देऽहं साष्टनागामुरुकुचयुगलां भोगिनीं कामरूपाम् ॥'
पुराणान्तरे ।
'अनन्तो वासुकिः पद्मो महापद्मोऽथ तक्षकः ।
कुलीरः कर्कटः शङ्खो ह्यष्टौ नागाः प्रकीर्त्तिताः ॥
शेषः पद्मो महापद्मः कुलिकः शङ्खपालकः ।
वासुकिस्तक्षकश्चैव कालीयो मणिभद्रकः ॥
ऐरावतो धृतराष्ट्रः कर्कोटकधनञ्जयौ ॥'
गारुड़ेऽपि ।
'अनन्तं वासुकिं शङ्खं पद्मं कम्बलमेव च ।
तथा कर्कोटकं नागं धृतराष्ट्रञ्च शङ्खकम् ॥
कालीयं तक्षकञ्चापि पिङ्गलं मणिभद्रकम् ।
पूजेतानखिलान्नागान् दष्टमुक्तो दिवं व्रजेत् ॥'
अन्यच्च ।
योऽसौ चानन्तरूपेण ब्रह्माण्डं सचराचरम् ।
पुष्पवद्धारयेन्मूर्ध्नि तस्मै नित्यं नमो नमः ॥'
इत्यनेन प्रणवपूर्व्वेण मत्स्यपुराणोक्तेनानन्तं पूजयेत् ॥ रत्नाकरे ।
पिचुमर्द्दस्य पत्राणि स्थापयेद्भवनोदरे ।
स्वयञ्चापि तदश्नीयात् ब्राह्मणांश्चैव भोजयेत् ॥'
पिचुमर्द्दस्य निम्बस्य ॥" इति तिथ्यादितत्त्वम् ॥
नागपत्रा, स्त्री, (नागदमनं पत्रं यस्याः । टाप् ।)
नागदमनी । इति भावप्रकाशः ॥
नागपत्री, स्त्री, ( नागवत् पत्रं यस्याः । ङीष् । )
लक्ष्मणा । इति राजनिर्घण्टः ॥
नागपदः, पुं, (नागवत् पदं स्थानं यस्य ।) षोड़शरतिबन्धान्तर्गतद्वितीयबन्धः । तस्य लक्षणं यथा,—
पादौ स्कन्धे तथा हस्ते क्षिपेल्लिङ्गं भगे लघु ।
रमयेत् कामुको नारीं बन्धो नागपदो मतः ॥"
इति रतिमञ्जरी ॥
नागपाशः, पुं, ( नागपाश इव आकृतिरस्यास्ति । अच् । ) स्त्रीणां करणम् । (नागः पाश इव । ) वरुणायुधः । इति मेदिनी । शे, ३५ ॥
नागद्वयावर्त्तनात्तु नागपाश इति स्मृतः ।
स्वर्णाग्निमयो दृष्टा नागपाशमयापि वा ॥"
इत्यागमः ॥
स्थितं नागपाशेन भ्रुकुटीभीषणाननम् ॥"
इति देवीपुराणीयदुर्गाध्यानम् ॥
नागपाशकः, पुं, (नागपाश इव प्रतिकृतिः । "इवे प्रतिकृतौ ।" ५ । ३ । ९६ । इति कन् । यद्वा, नागपाश इव कायतीति । कै + कः । ) रतिबन्धविशेषः । तस्य लक्षणं यथा,—
जङ्घाद्वयमध्यस्थां हस्ताभ्यां धारयेत् कुचौ ।
रमेन्निःशङ्कितः कामी बन्धोऽयं नागपाशकः ॥"
इति रतिमञ्जरी ॥
नागपुरं, क्ली, ( नागनामकं पुरम् । शाकपार्थिवादिवत् समासः । ) देशविशेषः । तद्विवरणं यथा,—
"जटाजूटात् पपातोर्व्वी मेरोश्चक्रात्ततोऽगमत् ।
देवैः परिवृता गङ्गा हेमकूटञ्च पर्व्वतम् ॥
मन्दरञ्चैव कैलासं हिमवन्तञ्च पर्व्वतम् ।
तामायान्तीन्तु रोधाय स्वलीलो नाम दानवः ॥
पार्व्वतं रूपमास्थाय वर्षाणाञ्च शतैर्द्विजाः ।
ततो भगीरथो राजाराधयामास कौशिकम् ॥
स तुष्टः प्रददौ नागं वाहनं तं भगीरथः ।
समारुह्यागमत्तत्र यत्र बद्धा भगीरथी ॥
तेन नागेन तं दैत्यं संविदार्य्य स सङ्गतः ।
शतधा तं समाधाय मूर्द्ध्न्यैरावतो गजः ॥
महीतलं समापेदे स यावन्नागसाह्वयम् ॥
तस्मात् ख्यातगजाह्वया अभून्नागपुरं वरम् ॥"
इति वह्निपुराणे गङ्गावतरणनामाध्यायः ॥
नागपुष्पः, पुं, ( नागस्य हस्तिनो मदगन्धयुक्तं पुष्पं यस्य । ) पुन्नागवृक्षः । नागकेशरः । ( यथा, महाभारते । १ । २०८ । ४० ।
"पुन्नागैर्नागपुष्पैश्च लकुचैः पनसैस्तथा ॥")
चम्पकः । इति मेदिनी । पे, २५ ॥ ( पुन्नागपुष्पे तु क्ली । तत्र गुणा यथा,—
"नागपुष्पं कषायोष्णं रूक्षं लघ्वामपाचनम् ।
ज्वरकण्डूतृषास्वेदच्छर्द्दिहृल्लासनाशनम् ॥
दौर्गन्ध्यकुष्ठवीसर्पकफपित्तविषापहम् ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
नागपुष्पफला, स्त्री, ( नागस्य नागकेशरस्येव पुष्पफले यस्याः । ) कुष्माण्डी । इति राजनिर्घण्टः ॥
नागपुष्पिका, स्त्री, ( नागस्य पुष्पमिव पुष्पं यस्याः । कप् । टापि अत इत्वम् । ) स्वर्णयूथी । इति राजनिर्घण्टः ॥
नागपुष्पी, स्त्री, ( नागस्य नागकेशरस्य पुष्पमिव पुष्पं यस्याः । ङीष् ।) नागदमनी । इति भावप्रकाशः ॥ ( पर्य्यायोऽस्या यथा, भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ।
"नागपुष्पी श्वेतपुष्पा नागिनी रामदूतिका ॥"
अस्या गुणा । यथा,—
"नागिनी रोचनी तिक्ता तीक्ष्णोष्णा कफपित्तहृत् ॥")
नागफलः, पुं, ( नागस्य पुन्नागस्येव फलं यस्य । )
पटोलः । इति राजनिर्घण्टः ॥
नागबन्धुः, पुं, ( नागानां हस्तिनां बन्धुरिव प्रियत्वात् । ) अश्वत्थवृक्षः । इति शब्दचन्द्रिका ॥
नागानां बान्धवश्च ॥
नागबलः, पुं, ( नागानामिव बलं यस्य । ) भीमसेनः । इति त्रिकाण्डशेषः ॥ ( अस्य नागबलाप्तिकथा । यथा, महाभारते । १ । १२८ । ६५—७० ।
"एवमुक्तस्तदा नागो वासुकिं प्रत्यभाषत ।
यदि नागेन्द्र ! तुष्टोऽसि किमस्य धनसञ्चयैः ॥
रसं पिबेत् कुमारोऽयं त्वयि प्रीते महाबलः ।
बलं नागसहस्रस्य यस्मिन् कुण्डे प्रतिष्ठितम् ॥
यावत् पिबति बालोऽयं तावदस्मै प्रदीयताम् ।
एवमस्त्विति तं नागं वासुकिः प्रत्यभाषत ॥
ततो भीमस्तदा नागैः कृतस्वस्त्ययनः शुचिः ।
प्राङ्मुखश्चोपविष्टः स रसं पिबति पाण्डवः ॥
एकोच्छ्वासात्ततः कुण्डं पिबति स्म महाबलः ।
एवमष्टौ स कुण्डानि ह्यपिबत् पाण्डुनन्दनः ॥
ततस्तु शयने दिव्ये नागदत्ते महाभुजः ।
अशेत भीमसेनस्तु यथासुखमरिन्दमः ॥"
तथा च तत्रैव । १ । १२९ । १९—२१ ।
"ततोऽष्टमे तु दिवसे प्रत्यबुध्यत पाण्डवः ।
तस्मिंस्तदा रसे जीर्णे सोऽप्रमेयबलो बली ॥
तं दृष्ट्वा प्रतिबुध्यन्तं पाण्डवं ते भुजङ्गमाः ।
सान्त्वयामासुरव्यग्रा वचनञ्चेदमब्रुवन् ॥
यत्ते पीतो महाबाहो ! रसोऽयं वीर्य्यसंभृतः ।
तस्मान्नागायुतबलो रणेऽधृष्यो भविष्यति ॥")
हस्तितुल्यबलवति, त्रि ॥
नागबला, ( नागस्येव बलं यस्याः ।) बलाप्रभेदः ।
गोरक्षचाउलिया इति गुलशकरी इति ककही इति च भाषा ॥ (यथा, गारुडे १७९ अध्याये ।
"अब्दं नागबला चूर्णं श्वासकासादिनुद्भवेत् ॥")
तत्पर्य्यायः । गाङ्गेरुकी २ भषा ३ ह्रस्वगवेधुका ४ । इत्यमरः । २ । ४ । ११७ ॥ गाङ्गेरुकी ५ गोरक्षतण्डुला ६ । इति भरतः ॥ भद्रोदनी ७ खरगन्धा ८ चतुःपला ९ महोदया १० महापत्रा ११ महाशाखा १२ महाफला १३ विश्वदेवा १४ अरिष्टा १५ देवदण्डा १६ महागन्धा १७ घण्टा १८ । अस्या गुणाः । मधुराम्लत्वम् । कषायत्वम् । उष्णत्वम् । गुरुत्वम् ।
कण्डूतिकुष्ठवातव्रणपित्तनाशित्वञ्च । इति राजनिर्घण्टः ॥ स्निग्धत्वम् । आयुष्यत्वम् । वृष्यत्वम् । ग्राहित्वम् । लघुक्षीणक्षयरोगेषु हितत्वञ्च । इति राजवल्लभः ॥
नागभृत्, पुं, ( नागः क्रूरचारी सन् बिभर्त्ति आत्मानमिति । भृ + क्विप् । ) डुण्डुभसर्पः । इति त्रिकाण्डशेषः ॥
नागमल्लः, पुं, ( नागेषु हस्तिषु मल्लः ।) ऐरावतः ।
इति शब्दरत्नावली ॥
नागमाता, [ ऋ ] स्त्री, ( नागानां हस्तिनां मातेव भूषकत्वात् । ) मनःशिला । इति हेमचन्द्रः । ४ । १२६ ॥ (नागानां सर्पाणां माता ।)
मनसादेवी । इति शब्दरत्नावली ॥ ( यथा, ब्रह्मवैवर्त्ते । २ । १ । ६७ ।
"नागेश्वरस्यानन्तस्य भगिनी नागपूजिता ।
नागेश्वरी नागमाता सुन्दरी नागवाहिनी ॥"
सुरसा । इयं हि सागरोल्लङ्घनसमये हनुमतः परीक्षार्थं देवैरादिष्टा तस्य विघ्नमाचरितुं गता तेन वञ्चिता च । यथा, रामायणे । ५।१।१३९ ।
"ततो देवाः सगन्धर्व्वाः सिद्धाश्च परमर्षयः ।
अब्रुवन् सूर्य्यसङ्काशां सुरसां नागमातरम् ॥"
यथा, च अध्यात्मरामायणे । ५ । १ । ८—२४ ।

"दृष्ट्वानिलसुतं देवा गच्छन्तं वायुवेगतः।
परीक्षार्थं सत्त्वस्य वानरस्येदमब्रुवन् ॥
गच्छत्येष महासत्त्वो वानरो वायुविक्रमः।
लङ्कां प्रवेष्टुं शक्तो वा न वा जानीमहे बलम् ॥
एवं विचार्य्य नागानां मातरं सुरसाभिधाम्।
अब्रवीद्देवताह्वन्दः कौतूहलसमन्वितः ॥
गच्छ त्वं वानरेन्द्रस्य किञ्चिद्विघ्नं समाचर।
ज्ञात्वा तस्य बलं बुद्धिं पुनरेहि त्वरान्विता ॥
इत्युक्ता सा ययौ शीघ्रं हनुमद्विघ्नकारणात्।
आवृत्य मार्गं पुरतः स्थित्वा वानरमब्रवीत् ॥
एहि मे वदनं शीघ्रं प्रविशस्व महामते!।
देवैस्त्वं कल्पितो भक्ष्यः क्षुधासम्पीडितात्मनः ॥
तामाह हनुमान् मातरहं रामस्य शासनात्।
गच्छामि जानकीं द्रष्टुं पुनरागम्य सत्वरः ॥
रामाय कुशलं तस्याः कथयित्वा त्वदाननम्।
निवेक्ष्ये देहि मे मार्गं सुरसायै नमोऽस्तु ते ॥
इत्युक्ता पुनरेवाह सुरसा क्षुधितास्म्यहम्।
प्रविश्य गच्छ मे वक्त्रं नोचेत् त्वां भक्षयाम्यहम् ॥
इत्युक्तो हनुमानाह मुखं शीघ्रं विदारय।
प्रविश्य वदनं तेऽद्य गच्छामि त्वरयान्वितः ॥
इत्युक्ता योजनायामदेहो भूत्वा पुरः स्थितः।
दृष्ट्वा हनुमतो रूपं सुरसा पञ्चयोजनम्।
मुखं चकार हनुमान् द्विगुणं रूपमादधत् ॥
ततश्चकार सुरसा योजनानाञ्च विंशतिम्।
वक्त्रं चकार हनुमांस्त्रिंशद्‌योजनसम्मितम् ॥
ततश्चकार सुरसा पञ्चाशद्‌योजनायतम्।
वक्त्रं तदा हनूमांस्तु बभूवाङ्गुष्ठसन्निभः ॥
प्रविश्य वदनं तस्याः पुनरेत्य पुरः स्थितः।
प्रविष्टो निर्गतोऽहं ते वदनं देवि! ते नमः ॥
एवं वदन्तं दृष्ट्वा सा हनुमन्तमथाब्रवीत्।
गच्छ साधय रामस्य कार्य्यं बुद्धिमतां वर! ॥
देवैः सम्प्रेषिताहं ते बलं जिज्ञासुभिः कपे!।
दृष्ट्वा सीतां पुनर्गत्वा रामं द्रक्ष्यसि गच्छ भो।"
कद्रूः। इति महाभारतम् ॥)

नागमारः, पुं, (नागं मारयतीति। मृ+णिच्+अण्।) केशराजः। इति त्रिकाण्डशेषः ॥ हस्तिमारके सर्पमारके च त्रि ॥

नागयष्टिः, स्त्री, (नागाधिष्ठिता यष्टिः।) पुष्करिण्यादिस्थितकाष्ठविशेषः। ददकाठ इति भाषा ॥ तत्पर्य्यायः। नागाञ्चला २। इति जटाधरः ॥ (यथा, हयशीर्षे।
"वैणवं वारुणञ्चैव पुन्नागं नागकेशरम्।
वकुलं चम्पकञ्चैव बिल्वञ्चैवाथ खादिरम् ॥
एतेषामेव दारूणां नागयष्टिः प्रकीर्त्तिता।
सवक्रकोटरं त्यक्त्वा तस्मात् कुर्य्यात् यथेप्सितम् ॥")

नागरं, क्ली, (नगरे भवम्। नगर+अण्।) शुण्ठी। इत्यमरः। २। ९। ३८ ॥ (अस्य गुणा यथा,—
"नागरं दीपनं वृष्यं ग्राहि हृद्यं विबन्धनुत्।
रुच्यं लघु स्वादुपाकं स्निग्धोष्णं कफवातजित् ॥"
इति वाभटे सूत्रस्थाने षष्ठेऽध्याये ॥

यथा च भारते। १८६ अध्याये।
"शुक्लीतकवचायुक्तं मरीचं नागरं तथा।
चर्व्वित्वा च इमं सद्यो जिह्वया त्वलनं लिखेत् ॥")
मुस्ता। इति मेदिनी। रे, १७२ ॥ रतिबन्धः। इति विश्वः ॥ (क्वचित् पुं।) नागरदेशीयाचरश्च ॥

नागरः, पुं, (नागरो विदग्धस्तद्वद्‌भागोऽस्त्यस्येति। अच्।) देवरः। इति त्रिकाण्डशेषः ॥ नागरङ्गः। इति शब्दरत्नावली ॥ त्रि, (नगरे भवः। "तत्र भवः।" ४।३।५३। इत्यण्।) विदग्धः। (यथा, आर्य्यासप्तशत्याम्। ३२३।
"नागर गौरिरिवासौ ग्रामस्थित्यापि भूषिता सुतनुः।
कस्तूरी न मृगोदरवासवशाद्विस्रतामेति ॥")
नगरोद्भवः। इति मेदिनी। रे, १७२ ॥ (यथा, देवीभागवते। २। ६। ६६।
"नागरा धृतराष्ट्रस्य सर्व्वे तत्र समाययुः ॥"
नगरहितश्च। यथा, महाभारते। ३।५।१२२।
"धनुर्व्वेदस्य सूत्रं वै यन्त्रसूत्रञ्च नागरम् ॥")

नागरकः, पुं, (नागर एव। स्वार्थे कन्। यद्वा, नागरेण कायतीति। कै+कः।) रतिबन्धविशेषः। यथा,—
"जानूरूपरि स्थित्वा योषिदूरुद्वयं यदि।
ग्रीवां धृत्वा कराभ्याञ्च बन्धो नागरको मतः ॥"
इति रतिमञ्जरी ॥

नागरक्तं, क्ली, (नागजातं रक्तम्।) सिन्दूरम्। इति हेमचन्द्रः ।४।१२७॥ नागस्य शोणितञ्च ॥

नागरघनः, पुं, (नागर एव घनो मुस्ता।) नागरमुस्ता। इति राजनिर्घण्टः ॥ (नागरमुस्ताशब्देऽस्य विवृतिर्ज्ञातव्या ॥)

नागरङ्गः, पुं, (नागस्य नागसम्भूतस्य सिन्दूरस्येव रङ्गो यस्य।) वृक्षविशेषः। नारङ्गीलेबुर गाछ इति भाषा ॥ इत्यमरः। २। ४। ३८ ॥ तत्पर्य्यायः। नारङ्गः २ नार्य्यङ्गः ३ नागरः ४ ऐरावतः ५ नागरुकः ६ वक्राधिवासी ७। इति शब्दरत्नावली ॥ तत्फलगुणाः। सुरभित्वम्। विपाके गुरुत्वम्। दुर्ज्जरत्वम्। अत्यम्लत्वम्। ईषन्मधुरत्वम्। हृद्यत्वम्। वातविनाशित्वञ्च। तत्केशरगुणः। रुच्यत्वम्। वातहरत्वञ्च। इति राजवल्लभः ॥

नागरमुस्ता, स्त्री, (नागर इव मुस्ता।) मुस्ताप्रभेदः। नागरमुता इति भाषा ॥ तत्पर्य्यायः। नागरोत्था २ नागराह्वयसंज्ञका ३ चक्राङ्का ४ नादेयी ५ चूडाला ६ पिण्डमुस्ता ७ शिशिरा ८ हृषधाङ्क्षी ९ कच्छरुहा १० नादकेसरा ११ उच्चटा १२ पूर्णकोष्ठसंज्ञा १३ कलापिनी १४। अस्या गुणाः। तिक्तत्वम्। कटुत्वम्। कषायत्वम्। शीतलत्वम्। कफपित्तज्वरातिसारारुचितृष्णादाहश्रमनाशित्वञ्च। इति राजनिर्घण्टः ॥

नागराजः, पुं, (नागानां राजा। "राजाहःसखिभ्यष्टच्।" ५।४।९१। इति टच्।) शेषः। अनन्तः। यथा, कविकल्पद्रुमे।

"पाताले नागराजं भुजगयुवतयो यस्य गायन्ति कीर्त्तिम्।"

नागराह्वं, क्ली, (नागरमिति आह्वा आख्या यस्य।) शुण्ठी। इति राजनिर्घण्टः ॥ (विवृतिरस्या शुण्ठीशब्दे ज्ञातव्या ॥)

नागरी, स्त्री, (नगरे भवा। नगर+अण्+ङीप्।) स्नुही। इति शब्दचन्द्रिका ॥ विदग्धा नारी। यथा, उद्भटः।
"हन्ताभीरीः स्मरतु स कथं सम्भृतो नागरीभिः।"
नागरपत्नी। नगरभवे, त्रि ॥

नागरुकः, पुं, (नागं रवति साहाय्येन प्राप्नोतीति। रु गतौ+बाहुलकात् कप्रत्ययेन साधुः।) नागरङ्गः। इति शब्दरत्नावली ॥

नागरेणुः, पुं, (नागस्य सीसकस्य रेणुः।) सिन्दूरम्। इति राजनिर्घण्टः ॥

नागरेयकः, त्रि, (नगरे भवः नगरस्यायं वा। "कत्त्र्यादिभ्यो ढकञ्।" ४। २। ९५। इति ढकञ्।) नगरसम्बन्धी। नगरस्यायमिति शैषिकप्रत्ययान्तात् स्वार्थे कः ॥

नागलता, स्त्री, (नागः सर्पस्तद्वत् लता।) लिङ्गम्। इति त्रिकाण्डशेषः ॥

नागलोकः, पुं, (नागानां लोकः।) पातालम्। इत्यमरः ।१।८।१॥ (यथा, हरिवंशे। ८२।८८।
"रसातले स ददृशे नागलोकमिमं यथा ॥")

नागवल्लरी, स्त्री, (नाग इव दीर्घा वल्लरी।) नागवल्ली। इति भावप्रकाशः ॥

नागवल्लिका, स्त्री, (नागवल्लि+स्वार्थे कन्।) नागवल्ली। इति रत्नमाला ॥

नागवल्ली, स्त्री, (नाग इव दीर्घा वल्ली लता।) ताम्बूली। इत्यमरः। २। ४। १२० ॥ अस्याः पर्य्यायास्ताम्बूलवल्लीशब्दे ज्ञातव्याः। सा च श्रीवाटाम्लवाटादिनानाप्रकारस्थानभेदादेव भिन्ना।
"एकाप्येषा देशभेदात्तस्याविशेषा-
न्नानाकारं याति नाम्ने गुणे च ॥
श्रीवाटी मधुरा तीक्ष्णा वातपित्तकफापहा।
रसाढ्या च रसा रुच्या विपाके शिशिरा स्मृता ॥
स्यादम्लवाटी कटुकाम्लतिक्ता
तीक्ष्णा तथोष्णा मुखपाककर्त्री।
विदाहपित्तास्रविकोपनी च
विष्टम्भदा वातनिवर्हणी च ॥
सप्तमी मधुरा तीक्ष्णा कटुकोष्णा च पाचनी।
गुल्मोदराध्मानहरा वन्हिसन्दीपनी परा ॥"
अन्यच्च।
"गुहागरे सप्तशिरा प्रसिद्धा
तत्पर्णचूर्णातिरसातिरुच्या।
सुगन्धितीक्ष्णा मधुरातिहृद्या
सन्दीपनी पुंस्त्वकरा च बल्या ॥
विरेचनी वक्त्रसुगन्धिकारिणी।
नाम्ना याऽम्लसरा सुतीक्ष्णमधुरा रुच्या हिमा दाहनुत्
पित्तोद्रेकहरा सुदीपनकरी बल्या सुखामोदिनी।

सौभाग्यविवर्द्धिनी मदकरी श्रेया सदा वल्लभा
श्वागविबन्धजिच्च कथिता सा मालवे तु
स्थिता ॥
पुष्कलिका नाम कषायोष्णा कटुस्तथा ।
पकर्षा कण्ठस्य पित्तहृद्वातनाशिनी ॥
यो कटुस्तीक्ष्णा हृद्या दीर्घदला च सा ।
वातहरा रुच्या कटुदीपनपाचनी ॥”
इति राजनिर्घण्टः ॥

ारिकः, पुं, ( नागानां हस्तिनां वारो वारणम् । स कार्य्यत्वेनास्यास्येति । नागवार + ठन् । ) कुञ्जरः । हस्तिपः । गजस्य राजः । ( नागानां सर्पाणां वारो वारणमस्त्यस्येति । ) गरुडः । यूरः । इति मेदिनी । के, २३० ॥

वीटः, पुं, ( नाग इव विशेषेण एटति इतस्ततो भ्रमतीति । वि + इट गतौ + “इगुपधज्ञेति ।” ३ । १ । १३५ । इति कः । ) टाङ्करः । ति त्रिकाण्डशेषः ॥ धाकरा इति ख्यातः ॥

वीथी, स्त्री, ( नागस्येव वीथी पन्थाः । ) अश्विन्यादिनक्षत्रचयघटितग्रहस्थानत्रयान्तर्गतोत्तरस्थानस्थपथविशेषः । यथा,—
‘सर्व्वग्रहाणां त्रीण्येव स्थानानि द्विजसत्तमाः ।
स्थानं जारद्गवं मध्यं तथैरावतमुत्तरम् ।
वैश्वानरं दक्षिणतो निर्द्दिष्टमिह तत्त्वतः ॥
तदेव मध्योत्तरदक्षिणमार्गत्रयं प्रत्येकं वीथीत्रयेण त्रिधा भिद्यते । तथाहि त्रिभिस्त्रिभिरश्विन्यादिनक्षत्रैर्नागवीथी गजवीथी ऐरावती चेत्युत्तरमार्गे वीथीत्रयम् । तथाचोक्तम् ।
अश्विनी कृत्तिका याम्या नागवीथीति
शब्दिता ॥”
इति विष्णुपुराणे । २ । ८ । ७६ श्लोकटीकायां श्रीधरस्वामी ॥ कश्यपापत्यविशेषः । यथा,—
“नागवीथी च यामिन्याम् ।” इति ब्रह्मपुराणे द्वितीयोऽध्यायः ॥ ( धर्म्मस्य यामिपत्नीगर्भजाता कन्या । यथा, मत्स्यपुराणे । ५ । १८ ।
लम्बायां घोषनामानो नागवीथी तु यामिजा ॥”)

ागशुण्डी, स्त्री, ( नागस्य शुण्डवत् आकृतिरस्त्यस्येति । अच् । ततो गौरादित्वात् ङीष् । ) डङ्गरीफलम् । इति राजनिर्घण्टः ॥

गसम्भवं, क्ली, ( नागात् सीसकात् सम्भवो यस्य । ) सिन्दूरम् । इत्यमरः । २ । ६ । १०५ ॥

गसुगन्धा, स्त्री, ( नागस्येव सु शोभनो गन्धो यस्याः । ) भुजङ्गाक्षी । सर्पसुगन्धा । इति भरतधृतस्वामी ॥ ( रास्नाभेदः । तत्पर्य्यायो यथा,—
“नाकुली सुरसा नागसुगन्धा गन्धनाकुली ।
नकुलेष्टा भुजङ्गाक्षी सर्पाङ्गी विषनाशिनी ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

ागस्तोकक, क्ली, ( नागस्य नागविषस्य स्तोकः स्वल्पता यत्र । कप् । स्थावरविषत्वादेवास्य तथात्वम् । ) वत्सनाभः । इति राजनिर्घण्टः ॥

ागस्फोता, स्त्री, ( नाग इव स्फोता । ) दन्ती । नागदन्ती । इति राजनिर्घण्टः ॥

नागहनुः, पुं, ( नागस्य हस्तिनो हनुरिव । ) नखनामगन्धद्रव्यम् । इति राजनिर्घण्टः ॥

नागहन्त्री, स्त्री, ( नागान् हन्तीति । हन + तृच् + ङीप् । ) वन्ध्याकर्कोटकी । इति राजनिर्घण्टः ॥

नागाख्यः, पुं, ( नाग एव आख्या यस्य । ) नागकेशरः । इति त्रिकाण्डशेषः ॥

नागाचला, स्त्री, नागयष्टिः । इति जटाधरः ॥

नागाञ्जना, स्त्री, हस्तिनी । ( नागस्येव अञ्जनं कृष्णवर्णत्वं यस्याः । ) नागयष्टिः । इति मेदिनी । ने, १८८ ॥

नागाधिपः, पुं, ( नागानां अधिपः । ) अनन्तः । इति हेमचन्द्रः । ४ । ३७३ ॥

नागान्तकः, पुं, ( नागानां अन्तको विनाशकः । ) गरुडः । इत्यमरः । १ । १ । ३१ ॥

नागारातिः, पुं, ( नागानां अरातिः शत्रुः । ) वन्ध्याकर्कोटकी । इति राजनिर्घण्टः ॥

नागालाबुः, स्त्री, ( नाग इव अलाबुः । ) कुम्भतुम्बी । इति राजनिर्घण्टः ॥

नागाशनः, पुं, ( अश्नातीति । अश + ल्युः । नागानां अशनो भक्षकः । ) गरुडः । इति हारावली । १० ॥

नागाह्वं, क्ली, ( नागस्य आह्वा नाम आह्वा यस्य । ) हस्तिनापुरम् । इति त्रिकाण्डशेषः ॥

नागाह्वा, स्त्री, ( नागं नागकेशरं आह्वयते स्पर्द्धते इति । आ + ह्वे + अच् । टाप् । ) लक्ष्मणाकन्दः । इति राजनिर्घण्टः ॥

नागी, स्त्री, ( नागस्य स्थूला पत्नी । नाग + जानपदेति स्थौल्यार्थे ङीष् । ) नागपत्नी । इति मुग्धबोधम् ॥ ( अस्याः दधिगुणा यथा,—
“लघु पाके बलासघ्नं वीर्य्योष्णं पक्तिनाशनम् ।
कषायानुरसं नाग्या दधि वर्च्चो विवर्द्धनम् ॥”
इति सुश्रुते सूत्रस्थाने ४५ अध्याये ॥ )

नागोदं, क्ली, ( नागवदुदरं यस्मात् । पृषोदरादित्वात् रलोपः । ) उदरत्राणम् । इति हेमचन्द्रः । ३ । ४३२ ॥

नागोदरं, क्ली, ( नागवत् हस्त्युदरं यस्मात् । ) उरस्त्राणम् । इति हारावली । १६८ ॥ ( गर्भिण्या गर्भोपद्रवविशेषः । यथा, सुश्रुते शारीरस्थाने । १० अध्याये ।
“शुक्रशोणितं वायुनाभिप्रपन्नमवक्रान्तजीवमाध्मापयत्युदरं तत् कदाचित् यदृच्छया उपशान्तं नैगमेषापहृतमिति भाषन्ते । तमेव कदाचित् प्रलीयमानं नागोदरमित्याहुः । तत्रापि लीनवत् प्रतीकारः ॥”)

नाचिकेतः, पुं, नचिकेताः । अग्निः । यथा,—
“स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो
प्रब्रूहि तं श्रद्दधानाय मह्यम् ।
स्वर्गलोका अमृतत्वं भजन्त
एतद्द्वितीयेन वृणे वरेण ॥
प्र ते ब्रवीमि तदु मे निबोध
स्वर्ग्यमग्निं नचिकेतः प्रजानन् ।
अनन्तलोकाप्तिमथो प्रतिष्ठां
विद्धि त्वमेतं निहितं गुहायाम् ॥
लोकादिमग्निं तमुवाच तस्मै
या इष्टका यावतीर्वा यथा वा ।
स चापि तत्प्रत्यवदद्यथोक्त-
मथास्य मृत्युः पुनरेवाह तुष्टः ।
तमब्रवीत् प्रीयमाणो महात्मा
वरं तवेहाद्य ददामि भूयः ।
तवैव नाम्ना भवितायमग्निः
सृङ्कां चेमामनेकरूपां गृहाण ॥
त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं
त्रिकर्म्मकृत्तरति जन्ममृत्यू ।
ब्रह्मजज्ञं देवमीड्यं विदित्वा
निचाय्येमां शान्तिमत्यन्तमेति ॥
त्रिणाचिकेतस्त्रयमेतद्विदित्वा
य एवं विद्वांश्चिनुते नाचिकेतम् ।
स मृत्युपाशान् पुरतः प्रणोद्य
शोकातिगो मोदते स्वर्गलोके ॥”
इति कठोपनिषदि प्रथमा वल्ली । १३-१८ ॥
( ऋषिविशेषः । अस्य विवरणं यथा, महाभारते । १३ । ७१ । २—२१ ।
“अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
ऋषिरुद्दालकेर्व्वाक्यं नाचिकेतस्य चोभयोः ॥
ऋषिरुद्दालकिर्दीक्षामुपगम्य ततः सुतम् ।
त्वं मामुपचरस्वेति नाचिकेतमभाषत ॥
समाप्ते नियमे तस्मिन् महर्षिः पुत्त्रमब्रवीत् ।
उपस्पर्शनशक्तस्य स्वाध्यायाभिरतस्य च ॥
इध्मा दर्भाः सुमनसः कलसश्चातिभोजनम् ।
विस्मृतं मे तदादाय नदीतीरादिहाव्रज ॥
गत्वानवाप्य तत् सर्व्वं नदीवेगसमाप्लुतम् ।
न पश्यामि तदित्येव पितरं सोऽब्रवीन्मुनिः ॥
क्षुत्पिपासाश्रमाविष्ट ऋषिरुद्दालकिस्तदा ।
यमं पश्येति तं पुत्त्रमशपत् स महातपाः ॥
तथा स पित्राभिहितो वाग्वज्रेण कृताञ्जलिः ।
प्रसीदेति ब्रुवन्नेव गतसत्त्वोऽपतद्भुवि ॥
नाचिकेतं पिता दृष्ट्वा पतितं दुःखमूर्च्छितः ।
किं मया कृतमित्युक्त्वा निपपात महीतले ॥
तस्य दुःखपरीतस्य स्वं पुत्त्रमनुशोचतः ।
व्यतीतं तदहःशेषं सा चोग्रा तत्र शर्व्वरी ॥
पित्र्येणाश्रुप्रपातेन नाचिकेतः कुरूद्वह ।
प्रास्पन्दच्छयने कौश्ये वृष्ट्या शस्यमिवाप्लुतम् ॥
स पर्य्यपृच्छत्तं पुत्त्रं क्षीणं पर्य्यागतं पुनः ।
दिव्यैर्गन्धैः समादिग्धं क्षीणस्वप्नमिवोत्थितम् ॥
अपि पुत्त्र जिता लोकाः शुभास्ते स्वेन कर्म्मणा ।
दिष्ट्या चासि पुनः प्राप्तो न हि ते मानुषं
वपुः ॥
प्रत्यक्षदर्शी सर्व्वस्य पित्रा पृष्टो महात्मना ।
स तां वार्त्तां पितुर्मध्ये महर्षीणां न्यवेदयत् ॥
कुर्व्वन् भवच्छासनमाशु यातो
ह्यहं विशालां रुचिरप्रभावाम् ।
वैवस्वतीं प्राप्य सभामपश्यं
सहस्रशो योजनहैमभासम् ॥
दृष्ट्वैव मामभिमुखमापतन्तं
देहीति स ह्यासनमादिदेश ।

वैवस्वतोऽर्घ्यादिभिरर्हणैश्च
भवत्कृते पूजयामास मां सः ॥
ततस्त्वहं तं शनकैरवोचं
वृतः सदस्यैरभिपूज्यमानः ।
प्राप्तोऽस्मि ते विषयं धर्म्मराज !
लोकानर्हे यानहं तान् विधत्स्व ॥
यमोऽब्रवीन्मां न मृतोऽसि सौम्य
यमं पश्येत्याह स त्वां तपस्वी ।
पिता प्रदीप्ताग्निसमानतेजा
न तच्छक्यमनृतं विप्रकर्त्तुम् ॥
दृष्टस्तेऽहं प्रतिगच्छस्व तात
शोचत्यसौ तव देहस्य कर्त्ता ।
ददानि किञ्चापि मनःप्रणीतं
प्रियातिथेस्तव कामान् वृणीष्व ॥
तेनैवमुक्तस्तमहं प्रत्यवोचं
प्राप्तोऽस्मि ते विषयं दुर्निवर्त्तम् ।
इच्छाम्यहं पुण्यकृतां समृद्धान्
लोकान् द्रष्टुं यदि तेऽहं वरार्हः ॥
यानं समारोप्य तु मां स देवो
वाहैर्युक्तं सुप्रभं भानुमत्तत् ।
सन्दर्शयामास तदात्मलोकान्
सर्व्वांस्तथा पुण्यकृतां द्विजेन्द्र ! ॥”)

नाचिकेतुः, पुं, अग्निः । इति त्रिकाण्डशेषः ॥

नाटः, पुं, ( नट+भावे घञ् । ) नृत्यम् । देश-विशेषः । कर्णाटक इति ख्यातः । इति शब्द-रत्नावली ॥ ( तद्देशवासिनि, त्रि । यथा, राज-तरङ्गिण्याम् । १ । ३०२ ।
“आहत्य चोलकर्णाटनाटादींश्च नरेश्वरान् ॥”)

नाटकं, क्ली, (नाटयतीति । नट+णिच्+ण्वुल् ।) गद्यपद्यप्राकृतभाषादिमयग्रन्थविशेषः । तत्-पर्य्यायः । महारूपकम् २ । इति त्रिकाण्ड-शेषः ॥ तस्य लक्षणं यथा,—
“नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम् ।
विलासर्द्ध्यादिगुणवत् युक्तं नानाविभूतिभिः ॥
सुखदुःखसमुद्भूतिनानारससमन्वितम् ।
पञ्चादिका दशपरास्तत्राङ्काः परिकीर्त्तिताः ॥
प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् ।
दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः ॥
एक एव भवेदङ्गी शृङ्गारो वीर एव वा ।
अङ्गमन्ये रसाः सर्व्वे कार्य्यं निर्व्वहणेऽद्भुतम् ॥
चत्वारः पञ्च वा मुख्याः कार्य्यव्यापृतपूरुषाः ।
गोपुच्छाग्रसमाग्रन्तु बन्धनं तस्य कीर्त्तितम् ॥”
इति साहित्यदर्पणे । ६ । २७७ ॥
अपि च ।
“नाटकं स्यात् प्रकरणं व्यायोगोऽङ्कस्तथा डिमः ।
ईहामृगः प्रहसनं भाणः समवकारकः ॥
वीथीति भरतः प्राह नाम्नैव दशरूपकम् ।
नाटिका प्रेक्षणञ्चैव त्रोटकं शाकटं तथा ॥
गोष्ठीसंलापशिल्पानि भाणीहल्लीशरासकौ ।
उल्लापकं श्रीगदितं प्रस्थानं नाट्यरासकम् ॥
दुर्म्मल्लिका लासिका च काव्यञ्चेत्युपरूपकम् ।
स्यात् सप्तदश संख्यानु-अष्टादशात्र कथ्यते ॥
प्रख्यातोत्तमनायकं रसमयं राजर्षिवंशोद्भवं
सार्द्धं भङ्गजयान्वितं नयमयं तत्तत्पुराणाश्रयम् ।
भाषावैभवसुन्दरं प्रविलसन्नानाविलासं सदृ-
वृत्त्याप्तमशेषसन्धिसहितं सप्ताङ्कमन्नाटकम् ॥”
अन्ये तु ।
“देवतानां मनुष्याणां राज्ञां लोके महात्मनाम् ।
पूर्व्ववृत्तानुचरितं प्रख्यातोदात्तनायकम् ॥
प्रवेशकविष्कम्भादिभिः सन्धिभिरन्वितम् ।
इतिहासकथोद्भूतं सुखदुःखोदयैर्युतम् ॥
षट्पञ्चदशसप्ताष्टनवाङ्कैरनुभूषितम् ।
नानाविलासलीलाभिः सर्व्वसिद्धिभिरन्वितम् ॥
नानाभावरसैराढ्यं नाटकं सूरयो विदुः ।
किञ्चिदङ्गविहीनन्तु न त्याज्यं नाटकं क्वचित् ॥
आरम्भश्च प्रयत्नश्च प्राप्तिः सम्भव एव च ।
नियता च फलप्राप्तिः फलयोगस्तथापरः ॥
इत्यवस्थापञ्चकं स्यात् नाटके कार्य्यवस्तुनः ।
संस्कृतं प्राकृतं भूतभाषापभ्रंशिका गिरः ।
नाटके नियताः शस्ता एषा भाषा रसावहा ॥
भाषाविभाषाभेदेन प्राकृतन्तु चतुर्द्दश ॥
मागध्यावन्तिका प्राच्या शौरसेन्यर्द्धमागधी ।
वाह्लीका दाक्षिणात्या च भाषाः सप्त च प्राकृते ॥
शकाराभीरचाण्डालशवरद्रविडोड्रजाः ।
वनौकसोविजातीनां विभाषाः सप्त कीर्त्तिताः ॥
कैकेयी शौरसेनी च काञ्ची पाञ्चालमागधी ।
द्राविडी पाण्डुदेशी च भूतभाषा प्रकीर्त्तिताः ॥
वैदर्भी मागधी नाटी काम्बोजी चोपनागरी ।
पाञ्चाली षड़पभ्रंशभाषा स्युर्द्देशभेदतः ॥
देवतादर्शनान्तञ्च कर्त्तव्यं नाटकं बुधैः ।
राजर्षिदर्शनान्तं या तेऽपि देवैः समा मताः ॥
उदाहरणम् । मुरारिकवेरनर्घराघवं भवभूते-रुत्तररामचरितं कालिदासस्याभिज्ञानशकु-न्तलञ्चेत्यादि । इति नाटकलक्षणम् ।” इति सङ्गीतदामोदरः ॥

नाटकः, पुं, (नट्यते नृत्यते देवयोनिभिरत्र । नट+घञ् । ततः स्वार्थे कन् । यद्वा, नाटयतीति नट+णिच्+ण्वुल् ।) कामाख्यास्थपर्व्वतभेदः । यथा,—
“ऐशान्यां नाटके शैले शङ्करस्य महाश्रमम् ।
नित्यं वसति तत्रेशस्तदधीना तु पार्व्वती ॥”
इति कालिकापुराणम् ॥
(नाटकशाला । यथा, रामायणे । १ । ५ । १२ ।
“वधूनाटकसङ्घैश्च संयुक्तां सर्व्वतः पुरीम् ॥”
नटतीति । नट+ण्वुल् । ) नर्त्तके, त्रि । इति व्याकरणम् ॥

नाटाम्रः, पुं, तरम्बुजः । तत्पर्य्यायः । चैलालः २ चित्रफलः ३ सुखाशः ४ राजतेमिषः ५ लता-पनसः ६ सेदुः ७ । इति त्रिकाण्डशेषः ॥

नाटारः, पुं, ( नट्या नटस्य वा अपत्यम् । “आर-गुदीचाम् ।” ४ । १ । १३० । इति आरक् । ) नट्या अपत्यम् । इति मुग्धबोधव्याकरणम् ॥

नाटिका, स्त्री, ( नाटक+टापि अत इत्वम् । ) नाटकविशेषः । यथा,—
“कैशिकीवृत्तिसंयुक्ता नारीपरिजनोज्ज्वला ।
चतुर्थसन्धिहीना च नाटिका नृपनायिका ।
इयं शृङ्गारबहुला ततः स्यात् कैशिकीमयी
महीयं कैशिकीवृत्तिर्न स्यादम्बरसाश्रया ।
न कुञ्जरकराघातमात्रं शक्नोति कन्दली ।
तस्यां विटः पीठमर्द्दः सचयो वाद्यसञ्चयः ।
अन्तःपुरचरो राज्ञ ईङ्गिती विदूषकः ।
अत्र भार्य्याजितो राजा निभृतः काममाचरेत्
अन्तःपुरगतां कन्यां देवीगुप्तां यियासति ।
मन्त्रिणि न्यस्तराज्यस्तु सुखसंस्थापितः प्रभुः
युवा भूमिपतिः प्रायो निभृतः काममाचरेत्
कन्यामिच्छ परिणयविषयां देवीगुप्तां मति
र्मानविरहैश्च ॥ एके तु ।
चतुर्भिरङ्कैस्तृपाद्यन्तिस्त्रिभिर्नृपनायकम् ।
यत् कैशिकीरसप्रायं नाटकं सैव नाटिका ।
पूर्व्वक्रमान्नाटकक्रमाद्रत्नावली नाटिका ।
एवमन्यच्चबोद्धव्यः ।” इति सङ्गीतदामोदरः ।
(अस्या लक्षणं यथा, साहित्यदर्पणे । ६।५३६
“नाटिका कॢप्तवृत्ता स्यात् स्त्रीप्राया चतु-
रङ्किका
प्रख्यातो धीरललितस्तत्र स्यान्नायको नृपः ॥
स्यादन्तःपुरसम्बन्धा सङ्गीतव्यापृताथवा ।
नवानुरागा कन्यात्र नायिका नृपवंशजा ॥
सम्प्रवर्त्तेत नेतास्यां देव्यास्त्रासेन शङ्कितः ।
देवी पुनर्भवेज्ज्येष्ठा प्रगल्भा नृपवंशजा ॥
पदे पदे मानवती तद्वशः सङ्गमो द्वयोः ।
वृत्तिः स्यात् कौशिकी स्वल्पविमर्शः सन्धयः
पुनः ॥”)

नाटेयः, पुं, ( नट्या अपत्यम् । नटी+ढक् ।) नटीसुतः । इति मुग्धबोधव्याकरणम् ॥

नाटेरः, पुं, ( नट्या अपत्यमिति । नटी+ढ्रक् ।) नटीसुतः । इति हेमचन्द्रः । ३ । २१२ ॥

नाट्यं, क्ली, ( नटानां कार्य्यम् । नट+“छन्दोगौ-क्थिकयाज्ञिकबह्वृचनटात् ञ्यः ।” ४ । ३ । १२ इति ञ्यः । ) नृत्यगीतवाद्यम् । तत्पर्य्यायः तौर्य्यत्रिकम् २ । इत्यमरः । १ । ७ । १० ( यथा, देवीभागवते । १ । ७ । ३० ।
“नाट्यं तनोषि सगुणा विविधप्रकारं
नो वेत्ति कोऽपि तव तत्त्वविधानयोगम् ।”
नटानां समूहः । इति व्याकरणम् ॥ नाट्य
रम्भनक्षत्राणि यथा । अनुराधा १७ धनि-
२३ पुष्यः ८ हस्ता १३ चित्रा १४ स्वाती १
ज्येष्ठा १८ शतभिषा २४ रेवती २७ । इ
ज्योतिषम् ॥ * ॥ नाट्यफलं यथा,—
“देवर्षिक्षितिपालपूर्व्वचरिताख्यालोकधर्म्मादि
स्तत्तत्भावाश्रितभूमिकाभिनयने स्यादर्थसिद्धिः
परा ।
संगीतानुगतचित्तवृत्तिभरणा यस्मा भवन्त्यङ्गना
मानं शङ्करसेवयेति कथितं नाट्यं चतुर्व्वर्ग-
दम् ।
यो यस्य दयितो भावः स तं नाट्ये निरीक्षते ।
अतः सर्व्वमनोहारि नाट्यं कस्य न रञ्जकम् ।

नाट्योत्पत्तिर्यथा,—
"इत्यनुश्रूयते ब्रह्मा शक्रेणाभ्यर्थितः पुरा ।
सकाराच्च वेदेभ्यो नाट्यवेदन्तु पञ्चमम् ॥
उपवेदोऽथ वेदाश्च चत्वारः कथिताः स्मृतौ ।
तत्रोपवेदो गान्धर्व्वः शिवेनोक्तः स्वयम्भुवे ॥
तत्रापि भरतायोक्तस्तेन मर्त्ये प्रचारितः ।
शिवाजयोर्भरतात्तस्मादस्य प्रयोजकाः ॥"
इति सङ्गीतदामोदरः ॥

नाट्यधर्म्मिका, स्त्री, ( नाट्यधर्म्मोऽस्त्यस्याः क्रियाया इति ठन् । ) दर्शनार्थमाख्योक्तनाट्यम् । यथा, हेमचन्द्रः ।
"गीतवाद्यनृत्यत्रयं नाट्यं तौर्य्यत्रिकञ्च तत् ।
संगीतं प्रेक्षणार्थेऽस्मिन् शास्त्रोक्ते नाट्यधर्म्मिका ॥"

नाट्यप्रियः, पुं, ( नाट्यं प्रियं यस्य । ) शिवः । इति हेमचन्द्रः । २ । ११२ ॥

नाट्यशाला, स्त्री, ( नाट्यस्य नृत्यगीतादेः शाला गृहम् । ) प्रासादद्वारसमीपगृहम् । नाटमन्दिर इति भाषा । यथा,—
"नाट्यशाला च कर्त्तव्या द्वारदेशसमाश्रया ॥"
इति गरुड़पुराणम् ॥

नाट्यालङ्कारः, पुं, ( नाट्यस्य अलङ्कारः । ) नाट्यभूषणहेतुः । स तु अष्टषष्टिप्रकारः । यथा,—
"सिद्धिर्म्मनोरथोऽभिज्ञो निरुक्तिश्च विशेषणम् ।
गुणाभिपात उद्दिष्टविचारप्राप्तिनीतयः ॥
अभिप्रायः परीहारो गर्हणानुनयौ तथा ।
अर्थापत्तिः प्रसिद्धिश्च दाक्षिण्यं प्रियभाषणम् ॥
अभिमानाख्यानगर्व्वा हर्षक्षोभोद्यमाश्रयाः ।
पश्चात्तापः स्पृहाक्रन्दौ कपटञ्च प्रवर्त्तनम् ॥
उत्तेजनञ्च दृष्टान्तः शोभोदाहरणे अपि ।
संशयोऽक्षरसंघातो विमलोक्तिः परोक्षयः ॥
परीवादोऽनुक्तसिद्धिरक्षमाध्यवसायकौ ।
प्रोत्साहनं तुल्यतर्क उपपत्त्यनुतर्कणे ॥
निवेदनञ्च साहाय्यं याच्ञा पृच्छा विशेषणम् ।
अभिज्ञानञ्च स्वातत्यं गुणकीर्त्तनसक्तयः ॥
विपर्य्ययश्चातिशयो भूषाहेतुनिदर्शनम् ।
मानावेशश्च संक्षेपसमीहाशीर्विसर्पकाः ॥
उल्लेख उपदिष्टौ चेत्यष्टषष्टिमिता अमी ।
अलङ्कारा मता नित्यं नाटकादिषु सूरिभिः ॥"
इति सङ्गीतदामोदरः ॥
(साहित्यदर्पणमते त्रयस्त्रिंशत् नाट्यालङ्काराः । यथा, तत्रैव । ६ । २००—२३२ ।
"आशीराक्रन्दकपटाक्षमागर्वोद्यमाश्रयाः ।
उत्प्रासनं स्पृहाक्षोभपश्चात्तापोपपत्तयः ॥
आशंसाध्यवसायौ च विसर्पोल्लेखसंज्ञितौ ।
उत्तेजनं परीवादो नीतिरर्थविशेषणम् ॥
प्रोत्साहनञ्च साहाय्यमभिमानोऽनुवर्त्तनम् ।
उत्कीर्त्तनं तथा याच्ञा परीहारो निवेदनम् ॥
प्रवर्त्तनाख्यानयुक्तिप्रहर्षाश्चोपदेशनम् ।
इति नाट्यालङ्कृतयो नाट्यभूषणहेतवः ॥
आशीरिष्टजनाशंसाक्रन्दः प्रलपितं शुचा ।
कपटं मायया यत्र रूपमन्यद्विभाव्यते ॥
अक्षमा सा परिभवः स्वल्पोऽपि नाभिसह्यते ।
गर्व्वोऽवलेपजं वाक्यं कार्य्यस्यारम्भ उद्यमः ॥
ग्रहणं गुणवत्कार्य्यहेतोराश्रय उच्यते ।
उत्प्रासनन्तूपहासो योऽसाधौ साधुमानिनि ॥
आकाङ्क्षा रमणीयत्वाद्वस्तुनो या स्पृहा तु सा ।
अधिक्षेपवचःकारी क्षोभः प्रोक्तः स एव तु ॥
मोहावधीरितार्थस्य पश्चात्तापः स एव तु ।
उपपत्तिर्मता हेतोरुपन्यासोऽर्थसिद्धये ॥
आशंसनं स्यादाशंसा प्रतिज्ञाध्यवसायकः ।
विसर्पो यत्समारब्धं कर्म्मानिष्टफलप्रदम् ॥
कार्य्यदर्शनमुल्लेख उत्तेजनमितीष्यते ।
स्वकार्य्यसिद्धयेऽन्यस्य प्रेरणाय कठोरवाक् ॥
भर्त्सना तु परीवादो नीतिः शास्त्रेण वर्त्तनम् ॥
उक्तस्यार्थस्य यत्तु स्यादुत्कीर्त्तनमनेकधा ।
उपालम्भस्वरूपेण तत् स्यादर्थविशेषणम् ॥
प्रोत्साहनं स्यादुत्साहगिरा कस्यापि योजनम् ।
साहाय्यं सङ्कटे यत् स्यात् सानुकूल्यं परस्य च ॥
अभिमानः स एव स्यात् प्रश्रयादनुवर्त्तनम् ।
अनुवृत्तिर्भूतकार्य्याख्यानमुत्कीर्त्तनं मतम् ॥
याच्ञा तु क्वापि याच्ञायाः स्वयं दूतमुखेन वा ।
परीहार इति प्रोक्तः कृतानुचितमार्ज्जनम् ॥
अवधीरितकर्त्तव्यकथनन्तु निवेदनम् ।
प्रवर्त्तनन्तु कार्य्यस्य यत् स्यात् साधुप्रवर्त्तनम् ॥
आख्यानं पूर्व्ववृत्तोक्तिः युक्तिरर्थावधारणम् ।
प्रहर्षः प्रमदाधिक्यं शिक्षा स्यादुपदेशनम् ॥"
एतेषामुदाहरणन्तु तत्रैव द्रष्टव्यम् ॥)

नाट्योक्तिः, स्त्री, ( नाट्ये नृत्यगीतादौ या उक्तिः । ) नाटकविषयकवचः । नटानां कर्म्म नाट्यं तत्रोक्तिः नाट्योक्तिः । इति भरतः ॥ तद्यथा । आर्य्येति ब्राह्मणम् । क्षत्रियं महाराजेति । सखीं हलेति । नीचं हण्डे इति । चेटीं हञ्जे इति । स्वामिनमार्य्यपुत्त्रेति । राजश्यालं राष्ट्रियेति । समानं हंहो इति । राजानं देवेति । सार्व्वभौमं भट्टेति । भगिनीपतिमावुत्तेति सम्बोधयेत् । इति सङ्गीतदामोदरः ॥ गणिकायां अज्जुका । विद्वति भावः । जनके आवुकः । कुमारे युवराजभर्त्तृदारकौ । राज्ञि देवभट्टारकौ । राजसुतायां भर्त्तृदारिका । कृताभिषेकायां राज्ञ्यां देवी । इतरासु राज्ञीषु भट्टिनी । अवध्योक्तौ अब्रह्मण्यम् । मातरि अम्बा । बालायां वासूः । आर्य्ये मारिषः । ज्येष्ठाभगिन्यां अत्तिका । निष्ठायां निर्व्वहणम् । इत्यमरः । १।७।१२—१५ ॥ ( यथाच साहित्यदर्पणे । ६ । १५४—१६० ।
"अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम् ।
सर्व्वश्राव्यं प्रकाशं स्यात्तद्भवेदपवारितम् ॥
रहस्यन्तु यदन्यस्य परावृत्य प्रकाश्यते ।
त्रिपताककरेणान्यानपवार्य्यान्तरा कथाम् ॥
अन्योन्यामन्त्रणं यत् स्याज्जनान्ते तज्जनान्तिकम् ।
किं ब्रवीषीति यन्नाट्ये विना पात्रं प्रयुज्यते ॥
श्रुत्वेवानुक्तमप्यर्थं तत् स्यादाकाशभाषितम् ॥
दत्ता सिद्धा च सेना च वेश्यानां नाम दर्शयेत् ।
दत्तप्रायाणि वणिजां चेटचेट्योस्तथा पुनः ॥
वसन्तादिषु वर्ण्यस्य वस्तुनो नाम कल्पयेत् ॥
नाम कार्य्यं नाटकस्य गर्भितार्थप्रकाशकम् ।
नायिकानायकाख्यानां संज्ञाप्रकरणादिषु ॥
नाटिकासट्टकादीनां नायिकाभिर्विशेषणम् ।
प्रायेण ण्यन्तकः साधिर्गमेः स्थाने प्रयुज्यते ॥
राजा स्वामीति देवेति भृत्यैर्भट्टेति चाधमैः ।
राजर्षिभिर्वयस्येति तथा विदूषकेण च ॥
राजन्नित्यृषिभिर्वाच्यः सोऽपत्यप्रत्ययेन च ।
स्वेच्छया नामभिर्विप्रैर्विप्र आर्य्येति चेतरैः ॥
वयस्येत्यथवा नाम्ना वाच्यो राज्ञा विदूषकः ।
वाच्यौ नटीसूत्रधारावार्य्यनाम्ना परस्परम् ॥
सूत्रधारं वदेद्भाव इति वै पारिपार्श्विकः ।
सूत्रधारो मारिषेति हण्डे इत्यधमैः समाः ॥
वयस्येत्युत्तमैर्हंहो मध्यैरार्य्येति चाग्रजः ।
भगवन्निति वक्तव्याः सर्व्वैर्देवर्षिलिङ्गिनः ॥
वदेद्राज्ञीञ्च चेटीञ्च भवतीति विदूषकः ।
आयुष्मन्रथिनं सूतो वृद्ध तातेति चेतरैः ॥
वत्स पुत्त्रक तातेति नाम्ना गोत्रेण वा सुतः ।
शिष्योऽनुजश्च वक्तव्योऽमात्य आर्य्येति चाधमैः ॥
विप्रैरयममात्येति सचिवेति च भण्यते ।
साधो इति तपस्वी च प्रशान्तश्चोच्यते बुधैः ॥
अगृहीताभिधः पूज्यः शिष्याद्यैर्विनिगद्यते ।
उपाध्यायेति चाचार्य्यो महाराजेति भूपतिः ॥
स्वामीति युवराजस्तु कुमारो भर्त्तृदारकः ।
सौम्य भद्रमुखेत्येवमधमैस्तु कुमारकः ॥
वाच्या प्रकृतिभी राज्ञः कुमारी भर्त्तृदारिका ॥
पतिर्यथा तथा वाच्या ज्येष्ठमध्याधमैः स्त्रियः ।
हलेति सदृशी प्रेष्या हञ्जे वेश्याऽज्जुका तथा ॥
कुट्टिन्यम्बेत्यनुगतैः पूज्या च जरतीजनैः ।
आमन्त्रणैश्च पाषण्डा वाच्याः स्वसमयागतैः ॥
शकादयश्च सम्भाष्या भद्रदत्तादिनामभिः ।
यस्य यत् कर्म्म शिल्पं वा विद्या वा जातिरेव वा ॥
तेनैव नाम्ना वाच्योऽसौ ज्ञेयाश्चान्ये यथोचितम् ॥")

नाड़िः, स्त्री, ( नाड़यतीति । नड़ भ्रंशे + णिच् + इन् । ) नाड़ी । इत्यमरटीकायां भरतः ॥

नाड़िकं, क्ली, ( नाड़िरिव प्रतिकृतिः । नाड़ि + "इवे प्रतिकृतौ ।" ५ । ३ । ९६ । इति कन् । ) कालशाकम् । इति भावप्रकाशः ॥

नाड़िका, स्त्री, ( नाड़ी एव । स्वार्थे कन् । ) षट्क्षणः । घड़ि इति भाषा । तत्पर्य्यायः । साधारिका २ घटिका ३ । इति हेमचन्द्रः ।२।५१॥ घटिकाज्ञानोपायो यथा,—
"निमेषो मानुषो योऽयं मात्रामात्रप्रमाणकः ।
तैः पञ्चदशभिः काष्ठा त्रिंशत् काष्ठास्तथा कला ॥
नाड़िका तु प्रमाणेन कला दश च पञ्च च ।
उन्मानेनाम्भसः सा तु पलान्यर्द्धत्रयोदश ॥
हेममाषैः कृतच्छिद्रा चतुर्भिश्चतुरङ्गुलैः ।
मागधेन प्रमाणेन जलप्रस्थस्तु संस्रुतः ॥"
इति विष्णुपुराणम् ॥

